भाषा । कारवी । इत्यमरो मेदिनी च ॥ हिङ्गु-पाता इति भाषा ॥

कवलः, पुं, (केन जलेन वलते चलतीति । वल + अच ।) ग्रासः । इत्यमरः । २ । ९ । ५४ ॥ ("चित्रकट्कमजमोदा सैन्धवं जीरके द्वे समधरणधृतानामष्टमो हिङ्गुभागः । प्रथमकवलभुक्तं सर्पिषा चूर्णमेत-ज्जनयति जठराग्निं वातरोगांश्च हन्ति" ॥ इति वैद्यकचक्रपाणिसंग्रहे अग्निमान्द्याधिकारे ॥ "अथजन् कवलाग्रासा गावोवत्सान् न पाययन्" । इति हरिवंशे । २ । ४१ । ९ ।) मत्स्यविशेषः । इति शब्दचन्द्रिका ॥ वेले माछ इति भाषा ॥

कवलितः, त्रि, (कवलं करोति । कवल + णिच् + कर्म्मणि क्तः ।) भुक्तः । इति जटाधरः ॥ ("ग्रस्तत् कवलितानेकजीवम्" । इति कथासरित्सागरः । २६ । १४२ ॥)

कवसः, पुं, (कौति कवते वा । कुशब्दे + "अतसमी-त्यादिना" उणा० ४ । २ । असः ।) कवचः । इत्यु-णादिकोषः ॥

कवाटः, त्रि, (कुशब्दे + भावे अप् । कवं शब्दं अटतीति । कव + अट् + अच् । यद्वा कं वातं वटति वृणोति वारयतीत्यर्थः क + वट् + अण् ।) कपाटः । इत्यमरटीकायां वाचस्पतिः ॥ (यथा रामायणे २ । ७१ । ३७ । "असंवृतकवाटानि श्रीविहीनानि सर्व्वशः" ॥)

कवाटवक्रं, क्ली, (कवाटं वक्रं यस्मात् ।) वृक्षविशेषः । कवाटवेद इति भाषा । क्षमाउवेगटया इति केचित् ॥ तत्पर्य्यायः । वक्रायम् २ कपोतवक्रम् ३ अश्मजित् ४ । इति रत्नमाला ॥

कवाटी, स्त्री, (कवाट + अल्पार्थे + ङीप् ।) कपा-टम् । इत्यमरटीकायां भरतः ॥

कवारं, क्ली, (कं जलं आश्रयत्वेन वृणोति । क + वृ + अण् ।) पद्मम् । इति त्रिकाण्डशेषः ॥

कविः, पुं, (कवते सर्व्वं जानाति सर्व्वं वर्णयति सर्व्वं सर्व्वतो गच्छति वा । कव् इन् । यद्वा कुशब्दे + "अचः इः" । उणा० ४ । १३८ । इति इः ।) ब्रह्मा । इति हेमचन्द्रः ॥ (अयमादिकविः यथा, "तेने ब्रह्महृदा य आदिकवये" इति भागवते । १ । १ ॥) "वाल्मीकिमुनिः । (एकोऽभूत्नलिनात् ततस्तु पुलिनात् वल्मीकतश्चापरस्ते एव प्रथिताः कवीन्द्रगुरवस्तेभ्यो नमस्कुर्म्महे" । इत्युद्भटः ॥) शुक्राचार्य्यः । (यथा महाभारते १ । ६६ । ४२ । "ब्रह्मणो हृदयं भित्त्वा निःसृतो भगवान् भृगुः । भृगोः पुत्त्रः कविर्विद्वान् शुक्रः कविसुतो ग्रहः" ॥) सूर्य्यः । काव्यकरः । (यथा रघुः १ । ३ । "मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम्" ॥) खलीने स्त्री । इति मेदिनी ॥ (विष्णुः । यथा महाभारते १३ । १४९ । २७ । "वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित् कविः" ॥) कल्किदेवस्य ज्येष्ठभ्राता । यथा,— "कल्केर्ज्येष्ठास्त्रयः शूराः कविप्राज्ञसुमन्त्रकाः । तातमातृप्रियकरा गुरुविप्रप्रतिष्ठिताः" ॥

इति कल्किपुराणे २ अध्यायः ॥ * अपि च । "विशाखयूपभूपालः प्रायात् साधुजनप्रियः । कल्किं द्रष्टुं हरेरंशमाविर्भूतञ्च सम्भले ॥ कविं प्राज्ञं सुमन्त्रञ्च पुरस्कृत्य महाप्रभम् । गार्ग्यभर्ग्यविशालैश्च ज्ञातिभिः परिवारितम् । विशाखयूपो ददृशे चन्द्रं तारागणैरिव" ॥ इति तत्रैव ३ अध्यायः ॥ * ॥ चौर्य्योद्धा । यथा । "वेधस्याने रणे भङ्गो दुर्गे खड्गः प्रजायते । कविप्रवेशनं तत्र योधाघातश्च तत्र वै" ॥ इति सर्व्वतोभद्रचक्रे ज्योतिस्तत्त्वम् ॥

कविः, त्रि, (कवते श्लोकान् ग्रथते वर्णयति वा । कव + इन् ।) पण्डितः । इत्यमरः । २ । ७ । ५ ॥ (यथा मनुः २ । १५१ । "अध्यापयामास पितॄन् शिशुराङ्गिरसः कविः" ॥)

कविः, स्त्री, (कवति शब्दायते इति । कुशब्दे "अचः इः" । उणा० । ४ । १३८ इति इः । अश्वमुखे श-ब्दायमानत्वात्तथात्वम् ।) खलीनः । इति मेदिनी । लागाम् इति भाषा ॥

कविकं, क्ली, (कवि + स्वार्थे कन् ।) खलीनः । इति हलायुधः ॥

कविका, स्त्री, (कवि + स्वार्थे कन् टाप् च ।) खलीनः । इत्यमरः । २ । ८ । ४९ ॥ लागाम इति भाषा । केविकापुष्पम् । इति राजनिर्घण्टः ॥ कवयी मत्स्यः । इति भावप्रकाशः ॥ (अस्या गुणा यथा,— "कविका मधुरा स्निग्धा कफघ्नी रुचिकारिणी । किञ्चित् पित्तकरी वात-नाशिनी वह्निवर्द्धिनी" ॥ इति च भावप्रकाशस्य पूर्व्वखण्डे मांसवर्गे ॥)

कविज्येष्ठः, पुं, (कविषु ज्येष्ठः ।) वाल्मीकिमुनिः । इति त्रिकाण्डशेषः ॥

कविता, स्त्री, (कवेः रचयितुर्भावः तल् ।) कवि-त्वम् । काव्यम् । यथा, "कविता वनिता चापि स्वयमेव सुखदायिनी" । इत्युद्भटः ॥

कविवर्द्धी, [न्] त्रि, (कविं कविमपि वेत्ति । कवि + विद् + णिनिः ।) कविः । इति जटाधरः ॥

कवियं, क्ली पुं, (कं मुखं व्याप्नोति । क + व्याप् + क । आकारस्य इः ।) खलीनः । इति त्रिकाण्डशेषः ॥

कविरामायणः, पुं, (कविना कवितया कविषु काव्येषु वा रामः अयनं आश्रयो यस्य ।) वाल्मीकिमुनिः । इति शब्दरत्नावली ॥

कविलासिका, स्त्री, (कं सुखं विलासयति उद्दीपय-तीति । क + वि + लस् + णिच + ण्वुल् टाप् अत इत्वम् ।) वीणाविशेषः । इति शब्दरत्नावली ॥

कविवाल्मीकिः, पुं, (कविश्चासौ वाल्मीकिश्चेति ।) वाल्मीकिमुनिः । इति शब्दरत्नावली ॥

कवी, स्त्री, (कवि वा ङीष् ।) खलीनः । इति मेदिनी भरतश्च ॥ [जटाधरः ॥

कवीयं, क्ली, (कवि + स्वार्थे छः ।) खलीनः । इति

कवेलं, क्ली, (कं जलं विलति छादयति । क + विल + अण् ।) कुवलयम् । उत्पलम् । इति शब्दचन्द्रिका ॥

कवोष्णं, क्ली, (कुत्सितं उष्णं ईषदुष्णं वा ।) ईषदु-ष्णम् । (यथा रघुः १ । ६७ ।

"मत्परं दुर्लभं मत्वा नूनमावर्ज्जितं मया । पयः पूर्व्वैः स्वनिश्वासैः कवोष्णमुपभुज्यते" ॥) तद्वति त्रि । इत्यमरः । १ । ४ । ३५ ॥

कव्यं, क्ली, (कूयते पितृभ्यः । पितृदेशेन दीयते यद-न्नादिकम् । कु + "अचो यत्" ३ । १ । ९७ । इति यत् ।) पित्र्यन्नम् । पितृसम्प्रदानकान्नम् । इत्यमरः । २ । ७ । २४ ॥ (यथा, मनुः १ । ९५ ॥ "यस्यास्येन सदाश्नन्ति हव्यानि त्रिदिवौकसः । कव्यानि चैव पितरः किम्भूतमधिकं ततः" ॥) कव्यानि तु वेदतत्त्वविदे ब्राह्मणाय दातव्यानि अन्यथा तद्दानं निष्फलं स्यात्यदुक्तं मनौ ३ अध्याये । "श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः । अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम् ॥ एकैकमपि विद्वांसं दैवे पित्र्ये च भोजयेत् । पुष्कलं फलमाप्नोति नामन्त्रज्ञान् बहूनपि ॥ दूरादेव परीक्षेत ब्राह्मणं वेदपारगम् । तीर्थं तद्धव्यकव्यानां प्रदाने सोऽतिथिः स्मृतः ॥ सहस्रं हि सहस्राणामनृचां यत्र भुञ्जते । एकस्तान् मन्त्रवित् प्रीतः सर्व्वानर्हति धर्म्मतः ॥ ज्ञानोत्कृष्टाय देयानि कव्यानि च हवींषि च । न हि हस्तावसृग्दिग्धौ रुधिरेणैव शुध्यतः ॥ यावतो ग्रसते ग्रासान् हव्यकव्येष्वमन्त्रवित् । तावतो ग्रसते प्रेत्य दीप्तशूलर्ष्ट्ययोगुडान् ॥ ज्ञाननिष्ठा द्विजाः केचित् तपोनिष्ठास्तथापरे । तपःस्वाध्यायनिष्ठाश्च कर्म्मनिष्ठास्तथापरे ॥ ज्ञाननिष्ठेषु कव्यानि प्रतिष्ठाप्यानि यत्नतः । हव्यानि तु यथान्यायं सर्व्वेष्वेव चतुर्ष्वपि ॥ एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः । अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः ॥ मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम् । दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् ॥ ये स्तेनपतितक्लीबा ये च नास्तिकवृत्तयः । तान् हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत् ॥ चिकित्सकान् देवलकान् मांसविक्रयिणस्तथा । विपणेन च जीवन्तो वर्ज्ज्याः स्युर्हव्यकव्ययोः" ॥ इत्यादि । विस्तृतिस्तु तत्रैव द्रष्टव्या ॥)

कव्यवालः, पुं, (कव्यं बल्यते दीयते अस्मै । कव्य + बल् दाने + सम्प्रदाने घञ् ।) पितृगणविशेषः । इति त्रिकाण्डशेषः ॥ (यथा, वायुपुराणे । "कव्यवालोऽनलः सोमः यमश्चैवार्य्यमा तथा । अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः" ॥)

कश, शब्दे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) कशति । इति दुर्गादासः ॥

कशा, स्त्री, (कशति शब्दायते ताडयति वा । कश् + करणस्य कर्त्तृविवक्षया कर्त्तरि अच् टाप् च । ताड्यत्वनया वा ।) अश्वादिताडनी । इत्यमरः । २।१०।३१ । कोड़ा चाबुक इति च भाषा ॥ ("जघान कशया मोहात् तदा राक्षसवन्मुनिम्" ॥ इति महाभारते । १ । १७७ । १० ॥) मांस-रोहिणी । इति भावप्रकाशः ॥

कशार्हः, त्रि, (कशां अर्हति इति । कशा + अर्ह +

कश् ।) कशाघातयोग्यः । कोड़ा मारिवार उपयुक्त इति भाषा । तत्पर्य्यायः । कश्यः २ । इत्यमरः । ३ । १ । ४४ ॥

कशिपुः, पुं, (कशति दुःखं कश्यते वा कशगतिशासनयोः । कश + स्नगव्वादित्वात् निपातनात् साधुः ।) भक्तम् । आच्छादनम् । एकोक्त्यान्नवस्त्रे कशिपू इति द्विवचनान्तम् । इति मेदिनी ॥ (शय्या । यथा, भागवते २ । २ । ४ ।
"सत्यां क्षितौ किं कशिपोः प्रयासैः" ॥)

कशेरु, स्त्री पुं, (के देहे शीर्य्यते । क + शॄ + "कैश्र एरु च वास्य" । उणां १ । ९० । इति उः एरुङ्-चान्तादेशः ।) पृष्ठास्थि । पिठेर दाँड़ा इति भाषा । इति हलायुधः ॥ (पुं लिं उदाहरणं ।
"किं कुर्व्वता वराहेण खाद्यन्ते हि कशेरवः" ।
इत्युद्भटिकाघृतचन्द्रवचनम् ।)

कशेरु, स्त्री, (कं जलं वातं वा शृणाति । क + शॄ + उणादित्वात् उः । एरुङ्चान्तादेशः ।) कशेरुका । केशुर इति भाषा । इति रत्नमाला ॥
राजनिर्घण्टे दन्त्यसकारवान् पुंलिङ्गोऽप्ययं शब्दः ॥
("कशेरु द्विविधं तत्र महद्राजकशेरुकम् ।
मुस्ताकृतिलघुः स्यात् यत् तच्चिचोटमिति स्मृतम्" ॥
इति वैद्यकम् ।)

कशेरुः, पुं, (क + शॄ + उ + एरुङ् ।) जम्बुद्वीपस्य खण्डविशेषः । इति शब्दमाला ॥

कशेरुकं, स्त्री, (कशेरु + स्वार्थे कन् ।) टयाकन्दः । केशुर इति भाषा । अस्य गुणाः । गुरुत्वम् । विष्टम्भकारित्वम् । शीतलत्वञ्च । इति राजवल्लभः ॥
("तलठविसशालूकक्रौञ्चादनकशेरुकम् ।
शृङ्गाटकं कशोड्यञ्च गुरु विष्टम्भि शीतलम्" ॥
इति चरके सूत्रस्थाने २७ अध्याये ॥)

कशेरुका, स्त्री, (कशेरु + स्वार्थे कन् टाप् च ।) पृष्ठास्थि । इति रत्नमाला । पिठेर दाँड़ा इति भाषा ।

कशेरूः, स्त्री, (क + शॄ + "कैश्र एरुङ्चास्य" : उणां १ । ९० । इति ऊः । एरुङ्चान्तादेशः ।) टयाकन्दः इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ केशुर इति भाषा ।

कश्चन, त्र, (किम् + चन् इति मुग्धबोधमतम् । पाणिनिमते पृथक्पदमिति भेदः ।) कश्चित् । इति व्याकरणम् ॥ कोन । केह इति च भाषा । (यथा माघः १६ । १ ।
"दमघोषसुतेन कश्चन
प्रतिशिष्टः प्रतिभानवानथ" ॥)

कश्चित्, त्र (किम् + चित् । पाणिनिमते पृथक् पदम् ।) कश्चन । इति व्याकरणम् ॥ (यथा मेघदूते १ ।
'कश्चित्कान्ता विरहगुरुणा स्वाधिकारप्रमत्तः' ॥)

कश्मलं, स्त्री, (कश गतिशासनयोः + कल । "कुटिकशिकौतिभ्यः प्रत्ययस्य मुट्" ॥ उणां १ । १०८ इति मुट् ।) मूर्च्छा । इत्यमरः । २ । ८ । १०९ । (मोहः । यथा, गीतायाम् २ । २ ।
"कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्" ॥)

पापम् । इति शब्दमाला ॥ मलिने त्रि । इति हेमचन्द्रः ॥

कश्मीरः, पुं, (कश + "कशेर्मुट् च । उणां ४ । ३० इति ईरन् मुट् च ।) काश्मीरदेशः । इति त्रिकाण्डशेषः ॥ (अस्य सीमादि यथा,—शक्ति सङ्गमतन्त्रे ७ पटले ।
"शारदामठमारभ्य कुङ्कुमादितटान्तकः ।
तावत् काश्मीरदेशः स्यात् पञ्चाशद्योजनात्मकः" ॥)

कश्मीरजन्मा, [न्] पुं, (कश्मीरे काश्मीरदेशे जन्म यस्य ।) काश्मीरजन्मा । कुङ्कुमम् । इत्यमरटीकायां रायमुकुटः ॥

कश्यं, स्त्री, (कशां अर्हतीति । कशा + दन्तादित्वात् । ५ । १ । ६६ । यत् ।) अश्वमध्यभागः । (कशति अनेन । कश + बाहुलकात् करणे यत् ।) मद्यम् । यथा,—मार्कण्डेयपुराणे १०४ । ३ ।
"ब्रह्मणस्तनयो योऽभूत् मरीचिरिति विश्रुतः ।
कश्यपस्तस्य पुत्त्रोऽभूत् कश्यपानात् स कश्यपः" ॥
कशार्हे त्रि । इत्यमरः । ३ । १ । ४४ ॥

कश्यपः, पुं, (कश्यं सोमरसादिजनितं मद्यं पिबतीति । कश्य + पा + क । अस्य नामनिरुक्तिर्यथा मार्कण्डेयपुराणे । १०४ । ३ ।
"ब्रह्मणस्तनयो योऽभूत् मरीचिरिति विश्रुतः ।
कश्यपस्तस्य पुत्त्रोऽभूत् कश्यपानात् स कश्यपः" ॥)
मुनिभेदः । कलागर्भजो मरीचिमुनेरौरसः पुत्त्रः । अस्य भार्य्या दक्षस्य सप्तदशकन्याः । तासां तत्पुत्त्राणाञ्च नामानि यथा । अदितेर्देवाः १ दितेर्दैत्याः २ दनोर्दानवाः ३ काष्ठाया अश्वादयः ४ अरिष्टाया गन्धर्व्वाः ५ सुरसाया राक्षसाः ६ इलाया वृक्षाः ७ मुनेरप्सरोगणाः ८ क्रोधवशायाः सर्पाः ९ ताम्रायाः श्येनगृध्रादयः १० सुरभेर्गोमहिषाः ११ सरमायाः श्वापदाः १२ तिमेर्यादोगणाः १३ विनताया गरुडारुणौ १४ कद्रोर्नागाः १५ पतङ्ग्याः पतङ्गाः १६ यामिन्याः शलभाः १७ । इति श्रीभागवतम् ॥ * ॥
(मार्कण्डेयपुराणमते अस्य त्रयोदशभार्य्याः । यदुक्तं तत्रैव १०४ अध्याये । अदितिः १ दितिः २ दनुः ३ विनता ४ खसा ५ कद्रुः ६ मुनिः ७ क्रोधा ८ रिष्टा ९ इरा १० ताम्रा ११ इला १२ प्रधा १३ । महाभारतमतेऽपि अस्य त्रयोदश भार्य्या । यदुक्तं तत्रैव १ । ६५ । ११—१३ ।
"मरीचेः काश्यपः पुत्त्रः काश्यपात्तु इमाः प्रजाः ।
प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश ॥
अदितिर्दितिर्दनुः काला दनायुः सिंहिका तथा ।
क्रोधा प्राधा च विश्वा च विनता कपिला मुनिः ।
कद्रूश्च मनुजव्याघ्र ! दक्षकन्यैव भारत" ! ॥
परमेश्वरस्यैव कश्यप इति नामास्ति । यथा,
"तेनैवेमाः सर्व्वाः प्रजाः उत्पादितास्तस्मात् सर्व्वा इमाः प्रजाः काश्यप्य इत्युच्यन्ते । कश्यपः कस्मात् पश्यको भवतीति निरुक्त्या पश्यतीति पश्यः सर्व्वज्ञतया सकलं जगद्विजानाति स पश्यः । पश्य एव निर्भ्रमतयातिसूक्ष्ममपि वस्तु यथार्थं जानात्येवातः पश्यक इति । आद्यन्ताक्षरविपर्य्ययात्सिद्धेः सिंहः कृतेस्तर्कुरित्यादिवत् कश्यप इति हयवरट् इत्येतस्योपरि महाभाष्यप्रमाणेन पदं सिध्यति" ॥ इति दयानन्दकृतायां वेदभाष्योपक्रमणिकायां २६१ सङ्ख्यकपत्रे ॥ कश्यं अज्ञानं अविद्यामित्यर्थः । तत्पिबति शोषयति नाशयति । यद्वा कश्यं विज्ञानघनम् पाति रक्षति स्वात्मनीति । परब्रह्म । तथा च तापनिश्रुतिः २ । ११ ॥
"सा होवाच गान्धर्व्वी ऋषिं वै दुर्व्वाससं कोऽयं भगवन् ! वा एतस्य प्रजालोकस्य पालयिता भर्त्ता वा जगतः । स होवाच तत्त्ववित् प्रवरो महान् दुर्व्वासाः । तदेव ब्रह्म वा आत्मा एतस्य पाता हर्त्ता प्रजानां गोप्ता वावह कश्यपो ह योऽयमज्ञानभोक्ता गान्धर्व्वि" ॥
कच्छपः । तथा च शतपथब्राह्मणे—
"स यत्कूर्म्मो नाम । प्रजापतिः प्रजा असृजत यदसृजताकरोत्तद्यदकरोत्तस्मात् कूर्म्मः कश्यपो वै कूर्म्मस्तस्मादाहुः सर्व्वाः प्रजाः काश्यप्यः" ॥
यथा यजुर्व्वेदे २४ । ३७ ।
"अपामुद्रो मासां कश्यपः" । "कश्यपः कच्छपः" । इति वेददीधितिः ॥ कश्यं मद्यं पिबतीति । कश्य + पा + क । "सुरापः श्यावदन्तः स्यात्" । इति वचनात्तथात्वम् । श्यावदन्ते त्रि,
यथा, कात्यायनश्रौतसूत्रे १० । २ । ३५ ।
"प्रश्नेभ्यश्चान्यत् कण्वकश्यपयाचमानवर्ज्जम्" ॥)
मृगविशेषः । इति मेदिनी ॥ मत्स्यभेदः । इति विश्वः ॥

कश्यपनन्दनः, पुं, (कश्यपस्य नन्दनः ।) गरुडः । इति हलायुधः ॥ (देवासुरादयोऽपि ॥)

कष वधे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) कषति । अयमुभयपदीति चतुर्भुजभुमरौ ॥ रमानाथरामौ तु इमं परस्मैपदिनं मत्वा उभयपदिनं तालव्यान्तं अन्यं मन्येते । इति दुर्गादासः ॥

कषः, पुं, (कषत्यत्र अनेन वा । कष् + अच् ।) कषपट्टिका । कष्टिपाथर इति भाषा । तत्पर्य्यायः । शाणः २ निकषः ३ । इत्यमरः । २ । १० । ३२ ॥

कषणः, त्रि, (कष्यते विस्वाद्यते । कष् + कर्म्मणि ल्युट् ।) अपक्वः । इति शब्दचन्द्रिका ॥ (पुं, कषत्यत्र । अधिकरणे ल्युट् । निकषोपलम् ।
यथा, आर्य्यासप्तशती ४१८ ।
"भूषयतां भजतः सखि ! कषणविशुद्धस्य जातरूपस्य" ॥ भावे ल्युट् । स्त्री, कण्डूयनम् ।
यथा किराते ५ । ४७ ।
"कषणकम्पनिरस्तमहाहिभिः
क्षणविमत्तमतङ्गजवर्ज्जितैः" ॥
"इहाद्रौ कषणेन कण्डूयनेन यः कम्पस्तेन निरस्ता महाहयो येभ्यस्तैः" ॥ इति तट्टीकायां मल्लिनाथः ॥)

कषा, स्त्री, (कष्यते ताड्यते अनया । कष् + बाहुलकात् करणे अप् । ततष्टाप् ।) कशा । इत्यमरटीकायां रमानाथः ॥ चाबुक् इति भाषा ॥ (यथा रामायणे ६ । ३७ । ४१ ।

"उद्दान् पयान् खरान् नागान् जघ्नुर्दष्ट्रकषाङ्कुशैः" ।)
कषाकुः, पुं, (कष् + आकुः ।) सूर्य्यः । अग्निः । इत्यु-
णादिकोषः ॥
कषायः, पुं क्ली, (कषति कण्ठम् । कष् + आयः ।)
रसविशेषः । कषा इति भाषा । पृथिव्यनिलगुणा-
बाहुल्यात्तस्योत्पत्तिः । इति शिवदासः ॥
(यथा, मनुः ११ । १५३ ।
"शुक्तानि च कषायांश्च पीत्वामेध्यान्यपि द्विजः" ॥)
तत्पर्य्यायः । तुवरः २ तद्युक्ते त्रि । इत्यमरः ।
१ । ५ । ९ ॥ कुवरः ३ तुरवः ४ । इति तट्टीका ॥
अस्य गुणाः । व्रणादिरोपणत्वम् । ग्राहित्वम् ।
शोषणत्वम् । वायुकोपकारित्वञ्च । अतियुक्तस्य
तस्य गुणाः । मलमूत्रग्रहाध्मानहृत्पीड़ाक्षेपणादि-
रोगकारित्वम् । अन्यच्च ।
"कषायः शोषणः स्तम्भी व्रणपाकार्त्तिनाशनः ।
कफशोणितवातघ्नो रूक्षः शीतो गुरुस्तथा" ॥
इति राजवल्लभः ॥ अपि च ।
"कषायनामा निरुणद्धि शोफं
वर्णान्तनोर्दीपनपाचनञ्च ।
सत्त्वापहोऽसौ शिथिलत्वकारी
निषेवितः पाण्डु करोति मान्द्यम्" ॥
इति राजनिर्घण्टः ॥ * ॥ पाचनादिः । तस्य पूर्ण-
वीर्य्यं याममेकं तिष्ठति । तत्पर्य्यायः । क्वाथः २
निर्य्यूहः ३ । स तु पञ्चविधो यथा । स्वरसः १
कल्कः २ क्वथितः ३ शीतः ४ फाण्टम् ५ । इति
वैद्यकपरिभाषा ॥ * ॥
("जिह्वां कण्ठं ग्रसति नितरां ग्राहकश्चातिसारे
श्लेष्मव्याधेरुपशमकरः श्वासकासापहर्त्ता ।
हिक्कां शूलं हरति नितरां शोधनं स्याद्व्रणानां
प्रोक्तश्चायं समधिकगुणो नाम श्रेष्ठः कषायः" ॥
इति हारीते प्रथम स्थाने ७ अध्याये ॥
"कषायो जड़येज्जिह्वां कण्ठस्रोतो विबन्धकृत्" ॥
"कषायः पित्तकफहा गुरुरस्रविशोधनः ।
पीड़नो रोपणः शीतः क्लेदमेदो विशोषणः ।
आमसंस्तम्भनो ग्राही रूक्षोऽतित्वक्प्रसादनः ॥
करोति शीलितः सोऽति विष्टम्भाध्मानहृद्रुजः ।
तृट्कार्श्यं पौरुषभ्रंशस्रोतोरोधमलग्रहान्" ॥
इति वाभटे सूत्रस्थाने १० अध्याये ॥
"कषायो रसः संशमनः संग्राही सन्धानकरः
पीड़नो रोपणः शोषणः स्तम्भनः श्लेष्मरक्तपित्त-
प्रशमनः शरीरक्लेदस्योपयोक्ता रूक्षः शीतो
गुरुश्च ।
स एवं गुणोऽप्येक एवात्यर्थमुपयुज्यमानः आस्यं
शोषयति, हृदयं पीड़यति, उदरमाध्मापयति,
वाचं निगृह्णाति, स्रोतांस्यवबध्नाति, श्यावत्व-
मापादयति, पौंस्त्वमुपहन्ति, विष्टभ्य जरां
गच्छति, वातमूत्रपुरीषाण्यवगृह्णाति, कर्षयति,
ग्लापयति, तर्षयति, स्तम्भयति, खरविशद-
रूक्षत्वात् पक्षवध-ग्रहापतानकार्द्दितप्रभृतींश्च
वातविकारानुपजनयतीति" ।
"वैशद्यस्तम्भजाड्यैर्यो रसनं योजयेद्रसः ।
बध्नातीव च यः कण्ठं कषायः स विकास्यपि" ॥
"पवन पृथिव्यतिरेकात् कषायः" ॥
इति चरके सूत्रस्थाने २६ अध्याये ॥)
निर्य्यासः । (यथा, महाभारते अनुशासनपर्व्वणि ।
"दृष्टो वटकषायेण अनुलिप्तः प्रियङ्गुणा ।
क्षीरेण षष्टिकान् भुक्त्वा सर्व्वपापैः प्रमुच्यते" ॥)
विलेपनम् । (यथा कुमारे ७ । १७ ।
"कर्णार्पितो लोध्रकषायरूक्षे
गोरोचनाक्षेपनितान्तगौरे" ॥
"लोध्रस्य वृक्षविशेषस्य कषायेण विलेपनेन" ॥
इति मल्लिनाथः ॥) अङ्गरागः । इति मेदिनी ॥
कषायः, पुं, (कष् + आयः ।) श्योणाकवृक्षः । इति
धरणी ॥ रागः । इत्यमरटीकायां स्वामी ॥
(यथा छान्दोग्योपनिषदि ।
"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा
स्मृतिः । स्मृतिलम्भे सर्व्वग्रन्थीनां विप्रमोक्ष-
स्तस्मै मृदितकषायाय तमसः पारं दर्शयति" ।
"तस्मै मृदितकषायाय वार्क्षादिरिव कषायो
रागद्वेषादिदोषः सत्त्वस्य रञ्जनरूपत्वात् ज्ञान
वैराग्याभ्यासरूपक्षारेण क्षालितो मृदितो विना-
शितो यस्य नारदस्य तस्मै" । इति भाष्यम् ॥)
कलियुगम् । इत्यमरटीकासारसुन्दरी ॥ (निर्व्वि-
कल्पसमाधेर्विघ्नभेदः । यथा, वेदान्तसारे समा-
धिकल्पे ८१ ।
"लयविक्षेपाभावेऽपि चित्तवृत्तेरागादिवासनया
स्तब्धीभावात् अखण्डवस्त्वनवलम्बनम्" । तत्रानेक
जन्माभ्यस्त वाह्याभ्यन्तररागाद्यनुभवजनितसंस्कारैः
कलुषीकृतं चित्तं कथञ्चित् श्रवणादिसाधनेनान्त-
र्मुखमपि चैतन्यग्रहणसामर्थ्याभावात् मध्य एव
स्तब्धीभवति यथा राजदर्शनाय स्वगृहान्निर्गत्य,
राजमन्दिरं प्रविष्टस्य कस्यचित् पुरुषस्य द्वार-
पालनिरोधेन स्तब्धीभावः तथा परित्यक्त वाह्य-
विषयस्य अखण्डवस्तुग्रहणप्रवृत्तस्योद्बुद्धरागादि-
संस्कारैः स्तब्धीभावादखण्डवस्त्वग्रहणं कषायः ॥)
कषायः, त्रि, (कष + आयः ।) सुरभिः । (यथा मेघ-
दूते ३२ ।
"प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः" ॥)
लोहितः । इति मेदिनी ॥ (यथा कुमारे ३ । ३२ ।
"चूताङ्कुरास्वादकषायकण्ठः
पुंस्कोकिलो यन्मधुरं चुकूज" ॥)
रक्तपीतमिश्रितवर्णः । इत्यमरटीकायां स्वामी ॥
धववृक्षः । इति राजनिर्घण्टः ॥
कषायकृत्, पुं, (कषायं कषायरागं करोति इति ।
कषाय + कृ + क्विप् तुगागमश्च ॥) रक्तलोध्रः ।
इति जटाधरः ॥
कषाययावनालः, पुं, (कषायः रक्तवर्णः यावनालः ।)
तुवरयावनालधान्यम् । इति राजनिर्घण्टः ॥
कषाया, स्त्री, (कष + आय टाप् च ।) क्षुद्रदुरा-
लभालता । इति राजनिर्घण्टः ॥ (अस्याः पर्य्यायो
यथा,—भावप्रकाशस्य पूर्व्वखण्डे १ भागे ।
"यासोपयासो दुःस्पर्शा धन्वयासः कुनाशकः ।
दुरालभादुरालम्भा समुद्रान्ता च रोदिनी ॥
गान्धारी कच्छुरानन्ता कषाया हरविग्रहा" ।)
कषायितः, त्रि, (कषायो रक्तपीतवर्णादिर्जातोऽस्य ।
कषाय + तारकादित्वात् इतच् ।) रक्तलोहितः ।
(यथा कुमारे ४ । ३४ ।
"अमुनैव कषायितस्तनी
सुभगेन प्रियगात्रभस्मना" ॥)
कषायी, [न्] पुं, (कषायो विद्यते अस्य । कषाय +
इनिः ।) शालवृक्षः । इति जटाधरः ॥ लकुच-
वृक्षः । खर्ज्जूरीवृक्षः । इति राजनिर्घण्टः ॥
कषिः, त्रि, (कषति हिनस्ति यः । कष + "खनि
कषि" इत्यादिना इः । उणां ४ । १३९ ।) हिं-
सकः । इत्युणादिकोषः ॥
कषीका, स्त्री, (कषतीति । कष + "कषि दुषिभ्यां
ईकन्" । उणां ४ । १६ । इति ईकन् + टाप् च ।)
पक्षिजातिः । यदुक्तं उणादिकोषे ॥
"कषीका पक्षिजातौ स्यात् दूषिका नेत्रयोर्म्मले" ॥
कषेरुका, स्त्री, (कष + एरक् + ततः उः । संज्ञायां
कन् टाप् च ।) कशेरुका । पृष्ठास्थि । इत्यमर-
टीकायां रायमुकुटः ॥
कष्टं, क्ली, (कष्यते इति । कष् + भावे क्तः ।
"कृच्छ्रगहनयोः कषः" । ७ । २ । २२ । इति नेट् ।)
पीड़ामात्रम् । तत्पर्य्यायः । पीड़ा २ बाधा ३
व्यथा ४ दुःखम् ५ अमानस्यम् ६ प्रसूतिजम् ७
कृच्छ्रम् ८ आभीलम् ९ । इत्यमरः । १ । ९ ।
३ ॥ आबाधा १० वेदना ११ दुःखम् १२ आमा-
नस्यम् १३ । इति तट्टीकायां भरतः ॥ कला-
जकम् १४ । इति वाचस्पतिः ॥ अर्त्तिः १५
आर्त्तिः १६ पीड़नम् १७ बाधनम् १८ आम-
नस्यम् १९ विबाधनम् २० विहेठनम् २१ विधा-
नकम् २२ पीड़ितम् २३ । इति शब्दरत्नावली ॥
क्वाथः २४ अशर्म्म २५ । इति जटाधरः ॥ (यथा
महानिर्व्वाणतन्त्रे मानस्नाननिर्णये ।
"कुर्व्वाणः सततं कर्म्म कृत्वा कष्टशतान्यपि ।
तावन्न लभते मोक्षं यावज्ज्ञानं न जायते" ॥)
कष्टः, त्रि, (कष्यतेऽसौ । कष + कर्म्मणि + क्तः ।) पी-
ड़ायुक्तः । गहनः । इत्यमरमेदिनीकारौ ॥ (यथा
मनुः १२ । ७८ ।
"बन्धनानि च कष्टानि परप्रेष्यत्वमेव च" ॥
अतिकष्टकरम् । विषादादौ प्रयोक्तव्यम् । यथा,
महाभारते १ । १ । २१५ ।
"कष्टं ! युद्धे दशशेषाः श्रुता मे ।
त्रयोऽस्माकं पाण्डवानाञ्च सप्त" ॥)
कष्टकारकः, पुं, (कष्टं करोति उत्पादयति बन्धक-
त्वात् । कष्ट + कृ + कर्म्मण्यण् । ततः कन् । कष्टं
करोतीति । कृ + ण्वुल् वा । कष्टस्य कारको वा ।)
संसारः । इति त्रिकाण्डशेषः ॥ पीड़ाकरे त्रि ॥
कष्टस्थानं, क्ली, (कष्टं कष्टकरं स्थानम् ।) दुःखजनक-
स्थानम् । इति हारावली ॥
कस गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं
-सेट् ज्वलादिः ।) ज कासः कसः । विपूर्व्वोऽयं
प्रफुल्लीभावे । तथा च ।
"प्रफुल्लोत्फुल्लसंफुल्लव्याकोचविकचस्फुटाः ।
फुल्लश्चैते विकसिते" इत्यमरः । २ । ४ । ७-८ ।

विकसित पङ्कजकलिका। इति दुर्गादासः॥

कस इ ल ङ ध्वंसे। गतौ। इति कविकल्पद्रुमः॥ शासे च। (अदां-आत्मं-सकं-सेट्। इदित्।) इ कंस्यते। ल ङ कंस्ते हरिः कंसम्। चकारात् गतौ च। शात इह ध्वंसना। इति दुर्गादासः॥

कस ल ङ ध्वंसे। गतौ। इति कविकल्पद्रुमः॥ (अदां-शासे च। आत्मं-सकं-सेट्।) ल ङ कस्ते हरिः कंसम्। चकारात् गतौ च। शात इह ध्वंसना। इति दुर्गादासः॥

कसः, पुं, (कसति विकसतीति। कस + अच्। कसति विकसति स्वर्णादिरत्र वा। कस + आधारे अच्।) कषः। इत्यमरटीकायां भरतः॥ कष्टिपातर इति भाषा। पूर्व्वोक्तधात्वर्थोऽप्यत्र॥ (यथा नैषधे २। ६९।

"कसपाषाणनिभे नभस्तले"॥)

कसनोत्पाटनः, पुं, (उत्पाटयतीति उत्पाटनः। उत् + पाटि + ल्युः। कसनस्य कासरोगस्य उत्पाटनः नाशकः।) वासकवृक्षः। इति शब्दचन्द्रिका॥

कसिपुः, पुं, (कशति शास्ति दुःखम्। कश गतिशासनयोः निपातनात् सिद्धम्।) कशिपुः। अन्नम्। इति जटाधरः॥

कसेरुः, पुं, (कं सृणातीति शॄ हिंसायां बाहुलकादुप्रत्यये प्रकृतेरेरुङादेशः। निपातनात् शस्य सत्वम्।) कशेरुः। केसुर इति भाषा। तत्पर्य्यायः। गुण्डकन्दः २ सुदमुस्ता ३ कसेरुका ४ शूकरेष्टः ५ सुगन्धिः ६ सुकन्दः ७ कसेरुकः ८। अस्य गुणाः। कषायत्वम्। अल्पमधुरत्वम्। अतिकटुत्वम्। रक्तपित्तप्रशमनत्वम्। शीतत्वम्। दाहश्रमापहत्वञ्च। इति राजनिर्घण्टः॥

कसेरुका, स्त्री, (कसेरुरेव। स्वार्थे कन् स्त्रियां टाप्।) कसेरुः। पृष्ठास्थि। इति राजनिर्घण्टः॥

कस्तीरं, क्ली, रङ्गम्। इति हेमचन्द्रः॥ (अस्य पर्य्यायो यथा,—वैद्यकरत्नमालायाम्।

"रङ्गं वङ्गञ्च कस्तीरं मृदङ्गं पुत्रपिच्चटम्"॥)

कस्तुरिका, स्त्री, (कसति गन्धोऽस्याः दूरतः। कस + ऊर। तुट् च। स्वार्थे कन् टाप् च पृषोदरादित्वात् साधुः।) कस्तूरी। इति भूरिप्रयोगः॥

कस्तूरिका, स्त्री, (कस्तूरी + स्वार्थे कन् टाप् पृषोदरादित्वात् साधुः।) कस्तूरी। इति रत्नमाला॥ (यथा, माघे। ४। ६१।

"कस्तूरिकामृगविमर्द्दसुगन्धिरेति"॥

अस्या गुणादयः कस्तूरीशब्दे ज्ञातव्याः। वैद्यकरसेन्द्रसारसंग्रहे ज्वरे स्वच्छन्दभैरवरसे अस्याः प्रयोगो यथा "कस्तूरिकाविद्रुमरौप्यजीर्णं"। इत्यादि।)

कस्तूरी, स्त्री, (कसति गन्धोऽस्याः। कस + खर्ज्जूरादित्वात् ऊरः। ङीप् तुट् पृषोदरादित्वात् साधुः।) मृगस्य नाभीजातसुगन्धिद्रव्यम्। तत्पर्य्यायः। मृगनाभिः २ मृगमदः ३। इत्यमरः।२।६।१२८॥ मृगः ४ मृगी ५ नाभिः ६ मदः ७। इति भरतः॥ वातामोदः ८ योजनगन्धिका ९। इति रभसः॥ मदनी १० गन्धकेलिका ११ वेधमुख्या १२ मार्जारी १३ सुभगा १४ बहुगन्धदा १५ सहस्रवेधी १६ श्यामा १७ कामान्धा १८ मृगाण्डजा १९ कुरङ्गनाभिः २० ललिता २१ श्यामला २२ मोदिनी २३ कस्तूरिका २४ कस्तुरिका २५ नाभी २६ लता २७ योजनगन्धा २८ मार्गः २९ गन्धबोधिका ३० कालाण्डी ३१ धूपस्वामी ३२ मिश्रा ३३ गन्धपिशाचिका ३४ इति शब्दरत्नावली॥ अस्या गुणाः। सुरभित्वम्। तिक्तत्वम्। चक्षुष्यत्वम्। मुखरोगकिलासकफदौर्गन्ध्यवातालक्ष्मीमलापहत्वञ्च। इति राजनिर्घण्टः॥ रक्तपित्तच्छर्दिनाशित्वम्। इति राजवल्लभः॥ तद्भेदाः। खरिका १ तिलका २ कुलत्था ३ पिण्डा ४ नायिका ५। अपि च।

"कपिला पिङ्गला कृष्णा कस्तूरी त्रिविधा क्रमात्।
नेपालेऽपि च काश्मीरे कामरूपेऽपि जायते॥
कामरूपोद्भवा श्रेष्ठा नैपाली मध्यमा भवेत्।
काश्मीरदेशसम्भूता कस्तूरी ह्यधमा स्मृता"॥

इति राजनिर्घण्टः॥ (अस्याः पर्य्यायो गुणा उत्पत्तिश्च यथा,—भावप्रकाशस्य पूर्व्वखण्डे १ भागे।

"मृगनाभिर्मृगमदः कथितस्तु सहस्रभित्।
कस्तूरिका च कस्तूरी वेधमुख्या च सा स्मृता॥
काश्मीरकपिलच्छाया कस्तूरी त्रिविधा स्मृता।
कामरूपोद्भवा श्रेष्ठा नैपाली मध्यमा भवेत्॥
कामरूपोद्भवा कृष्णा नैपाली नीलवर्णयुक्।
काश्मीरदेशसम्भूता कस्तूरी ह्यधमा मता॥
कस्तूरिका कटुस्तिक्ता क्षारोष्णा शुक्रला गुरुः।
कफवातविषच्छर्दिशीतदौर्गन्ध्यशोषहृत्"॥)

कस्तूरीमल्लिका, स्त्री, (कस्तूरीगन्धयुक्ता मल्लिका।) मृगमदवासा। इति राजनिर्घण्टः॥

कह्लं, क्ली, (कश गतिशासनयोः + कन + सुट् च। निपातनात् शस्य सः।) कह्लनम्। मोदः। इत्यमरटीकायां रायमुकुटः॥

कह्लारं, क्ली, (कस्य जलस्य ह्लार इव के जले ह्लादते वा इति। क + ह्लाद + पचाद्यच् पृषोदरादित्वात् साधुः।) श्वेतोत्पलम्। सुँदि इति भाषा। तत्पर्य्यायः। सौगन्धिकम् २। इत्यमरः १। १०। ३६॥ (कल्हारम् ३। गन्धकञ्च ४। इति भावप्रकाशस्य पूर्व्वखण्डे द्वितीये भागे॥ यथा, भागवते ४। ६। १८।

"कुमुदोत्पलकह्लारशतपत्रवनर्द्धिभिः"॥)

तत्पुष्पगुणाः। कषायत्वम्। मधुरत्वम्। शीतत्वम्। पित्तकफरक्तनाशित्वञ्च। इति राजवल्लभः॥

कङ्कः, पुं, (के जले कयति शब्दायते स्पर्द्धते वा। क + कै + कः।) वकपक्षी। इत्यमरः॥ २। ५। २२॥

कांसीयं, क्ली, (कंसस्य विकारः इति छः।) कांस्यम्। इति राजनिर्घण्टः॥

कांस्यं, क्ली, (कंसाय पानपात्राय हितं कंसीयं तस्य विकारः इति। "कंसीयपरशव्ययोर्यञ्लुक् च" । ४।३।१६८ यञ् छस्य लुक् च। यद्वा कंसमेव इति स्वार्थे यञ् प्रत्ययः।) ताम्ररङ्गमिश्रितधातुः। काँसा इति भाषा। तत्पर्य्यायः। कंसम् २ कंसास्थि ३ ताम्रार्द्धम् ४। इति त्रिकाण्डशेषः॥ सौराष्ट्रकम् ५ घोषम् ६ कांसीयम् ७ वह्निलोहकम् ८ दीप्तिलोहम् ९ घोरपुष्पम् १० दीप्तिकांस्यम् ११ कांस्यम् १२। अस्य गुणाः तिक्तत्वम्। उष्णत्वम्। चक्षुर्हितकारित्वम्। वातकफविकारनाशित्वम्। रूक्षत्वम्। कषायत्वम् रुचिकारित्वम्। लघुत्वम्। दीपनत्वम्। पाचनत्वम्। पथ्यत्वञ्च। इति राजनिर्घण्टः॥ अम्लरसत्वम्। विशदत्वम्। लेखनत्वम्। सारकत्वम्। पित्तनाशित्वम् इति राजवल्लभः॥ दृढदेहायुर्वृद्धिकारित्वम्। इति सुखबोधः॥

("उपधातुर्भवेत् कांस्यं द्वयोस्तरणिरङ्गयोः।
कांस्यस्य तु गुणा ज्ञेयाः स्वयोनिसदृशा जनैः।
संयोगजप्रभावेण तस्यान्येऽपि गुणाः स्मृताः॥
कांस्यङ्कषायन्तिक्तोष्णं लेखनं विशदं सरम्।
गुरुनेत्रहितं रूक्षं कफपित्तहरम्परम्"॥

इति भावप्रकाशस्य पूर्व्वखण्डे १ भागे॥)

तत्शोधनमारणमाह।

"अनेनैव विधानेन कांस्यं विड्गन्धलेपितम्।
मारयेद्बुद्धिमान् वैद्यो मृतं भवति चूर्णवत्"॥

अन्यच्च।

"हिङ्गुलं पञ्चलवणं समधात्रेण भावयेत्।
कांस्यारकूटपत्राणि तेन कल्केन लेपयेत्।
बद्ध्वा गजपुटे पश्चाच्छुद्धिमायाति नान्यथा"॥

अन्यच्च।

"ताम्रवच्छोधनं कृत्वा ताम्रवन्मारयेद्बुधः"॥

अन्यच्च।

"कज्जलीं तत्समां दत्त्वा मर्द्दयेन्निम्बुकद्रवैः।
एवं पुटत्रयेणैव निरुत्थं भस्म जायते"॥

इति सुखबोधः॥

कांस्यकारः, पुं, (कांस्यं तत्पात्रं करोतीति। कांस्य + कृ + अण्।) कंसकारः। इति जटाधरः। काँसारि इति भाषा॥

कांस्यनीलः, पुं, (कांस्येन जातः नीलः।) अञ्जनभेदः। नीलतुत्थम्। तत्पर्य्यायः। मूषातुत्थम् २ हेमतारम् ३ वितुन्नकम् ४ इति हेमचन्द्रः॥ (कांस्योद्भवाञ्जनवन्नीलः इति विग्रहे वाच्यलिङ्गत्वम्। यथा, गोः रामायणे ४। ३९। २३।

"कांस्यनीलो हरिर्भीलः कोटिभिर्दशभिर्वृतः"॥

क्वचित् कांश्यनील इति पाठः॥)

काकं, क्ली, सुरतबन्धः। (काकस्य समूहः इति समूहार्थे अण्।) काकसमूहः। इति मेदिनी॥ (ईषत्कं जलम् कोः कादेशः। ईषज्जलम्। इति व्याकरणम्॥)

काकः, पुं, (कायते शब्दायते। कै शब्दे "इण्भीकापाशल्यतिमर्चिभ्यः कन्"। उणां-३। ४३। इति कन्।) स्वनामख्यातपक्षिविशेषः। काग इति भाषा। तत्पर्य्यायः। करटः २ अरिष्टः ३ बलिपुष्टः ४ सकृत्प्रजः ५ ध्वाङ्क्षः ६ आत्मघोषः ७ परभृत् ८ बलिभुक् ९ वायसः १०। इत्यमरः।२।५।२०॥ वातजवः ११ बलः १२ दीर्घायुः १३ सूचकः १४ ध्वाङ्क्षः १५ ग्रामीणः १६ पिशुनः १७ काटखादकः १८ द्विकः १९ कागः २०। इति

जटाधरः ॥ काणः २१ धूलिजङ्घः २२ निमित्त-कृत् २३ कौशिकारिः २४ चिरायुः २५ मुखरः २६ खरः २७ महालोलः २८ चिरञ्जीवी २९ चलाचलः ३० करटकः ३१ नागवीरकः ३२ गाढ़-मैथुनः ३३ लुराटाकः ३४ आवकः ३५ रत-ज्वरः ३६ । इति शब्दरत्नावली ॥ * ॥ अस्य शाकुनं काकचरित्रम् । तद्यथा ।

"अथोच्यते काकरुतं रुतानां
मूर्द्धि स्थितं शाकुनभाषितानाम् ।
अचिन्तितावेदितकार्य्यसिद्धिं
पूर्व्वादिकाष्ठाप्रहरक्रमेण ॥
ये ब्राह्मणक्षत्रियवैश्यशूद्राः
काका भवन्त्यन्यजपञ्चमास्ते ।
वर्णाकृतिभ्यां स्वविभाषिताभ्यां
सदाभियुक्तैरुपलक्षणीयाः ॥
स्वच्छप्रमाणो गुरुदीर्घतुण्डो
दृढ़स्वरः कृष्णवपुः स विप्रः ।
पिङ्गालनीलाक्षविमिश्रवर्णः
स्यात् क्षत्रियश्चोद्धतरावोऽतिशूरः ॥
यः पाण्डुनीलः सितनीलचञ्चु-
र्गात्यर्थरूढ़ो रटितश्च वैश्यः ।
भवन्ति च विन्दुविकारशब्दः
शूद्रः कृष्णाङ्गश्चपलो निकृन्तः ॥
विकृत्तसूक्ष्मास्यतनुर्विशङ्को
यः कन्धरादीप्तनवं बिभर्त्ति ।
स्थिरारवः स्थैर्य्यसमेतबुद्धिः
काकोऽन्त्यजातिः खलु पञ्चमोऽत्र ॥
द्रोणाभिधः कृष्णवपुर्द्विजो यो
ग्राह्यः स काकः खलु मुख्यवृत्त्या ।
तस्मात्तु ते श्यामगलो निरीक्ष्यः
श्वेतश्च निन्द्योऽद्भुतदर्शनोऽसौ ॥
विप्रः स्फुटं जल्पति पृच्छ्यमाने
न्यूनं ततः क्षत्रियजातिराङ्कः ।
आख्याति वैश्यस्त्वधिवासनेन
ब्रवीति शूद्रो बलिदानलोभात् ॥
प्रश्नं कृतं जल्पति कृष्णवर्णः
सदा समस्तं विहगोऽन्त्यजातिः ।
सदाक्षिसम्पाद्य दशाष्टपक्षैः
पश्चापि काकाः फलदाः क्रमेण ॥
शान्ते प्रदीप्ते च रटन् विहङ्गः
शुभप्रदो दीप्तपराङ्मुखः सन् ।
न क्वापि रौद्रो रटितः प्रशस्तः
सव्यश्च शान्तो मधुरश्च रम्यः ॥
दीप्तस्थितो यः परुषस्वरेण
विरौति दीप्ताभिमुखः स कार्य्यम् ।
निष्पाद्य निर्नाशयते च सन्ध्य-
प्रदीप्तोन्मुखः शान्तरवो हि सिद्धौ ॥
शान्तप्रदीप्ताभिमुखो विधाय
शब्दं प्रविश्याथ पुनः प्रदीप्तम् ।
यो रौति काको मधुरस्वरेण
कृत्वा विरुद्धं स ददाति सिद्धिम् ॥
विधाय दीप्ताभिमुखो विरावं
ततः प्रशान्ताभिमुखो विरौति ।
यो वायसोऽसौ विनिहन्त्यवश्यं
कार्य्याणि सर्व्वाणि पुनः करोति ॥
सूर्य्योदये पूर्व्वदिशि प्रशस्त-
स्थाने स्थितो योऽभिमुखं विरौति ।
नाशं रिपोश्चिन्तितकार्य्यसिद्धिं
स्त्रीरत्नलाभं स करोति काकः ॥
शाङ्कः प्रभाते यदि वह्निभागे
विरौति तिष्ठन् रमणीयदेशे ।
प्रचण्ड प्रवास्यथचिराद्विशङ्कः
प्रयाति योषित्समवाप्यते तत् ॥
रवन् प्रभाते दिशि दक्षिणस्या
काकः समावेदयतेऽतिदुःखम् ।
रोगार्त्तिमृत्युं परुषस्वरेण
रम्येण चेष्टागमयोषिदाप्तिम् ॥
नैर्ऋत्यभागे यदि च प्रभाते
करोति काकः सहसा विरावम् ।
क्रूरं ततः कर्म्म समभ्युपैति
दूतागमो मध्यमिका च सिद्धिः ॥
प्रातः प्रतीच्यां यदि रौति काको
ध्रुवं तदा वर्षति वारिवाहः ।
स्त्रावस्त्रभूभृत्युषधागमस्य
कलिः कलत्रेण समं तदा स्यात् ॥
शाङ्कस्य शब्दे पवनालयस्थे
वस्त्रान्नयानाभिमतागमाः स्युः ।
पान्थागमः प्राप्तनवत्तिभागाः
स्यादन्यदेशे गमनं स्वदेशात् ॥
दिग्युत्तरस्यां सुरवः प्रभाते
निरीक्ष्यमाणो बलिभुग् नराणाम् ।
ददाति दुःखं भुजगाच्च भीतिं
दरिद्रतां नष्टधनस्य लाभम् ॥
दिश्यैशवत्यां यदि रौति काक
आगच्छतस्तत्रमितान्यजाती ।
व्याधेर्निमित्तं प्रियवस्त्रलाभो
भवेत्तदा रोगबलेऽवसानम् ॥
ब्रह्मप्रदेशे स्थितवायसस्य
प्रभातकाले मधुरस्वरेण ।
अभीप्सितार्थागमनं ध्रुवं स्यात्
स्वामिप्रसादो द्रविणस्य लाभः" ॥

इति वसन्तराजे दिक्प्रहरे सूर्य्योदयः ॥ * ॥

"पूर्व्वस्य यामे प्रथमे सशब्दः
काको भवेच्चिन्तितकार्य्यसिद्धौ ।
अभीष्टलोकागमनं तथान्या-
न्नष्टार्थलाभो नियतं नराणाम् ॥
आग्नेयभागे यदि चाद्ययामे
स्त्रीलाभविद्वेषिवधौ भवेताम् ।
कृतान्तभागे बलिभुग् विरावः
स्त्रीलाभसौख्यप्रियसङ्गकारी ॥
नैर्ऋत्यकोणे प्रिययोषिदाप्ति-
र्मिष्टाशनं सिध्यति चिन्तितोऽर्थः ।
दिशि प्रतीच्यां विरुते भवेता-
मभ्यर्थनीयागमनाम्बुवृष्टी ॥
वायव्यकोणे करटः शुभः स्यात्
नृपप्रसादोऽथ्वगदर्शनं च ।
सौम्ये च भीतस्तस्करशोकवार्त्ता
सौम्या च वार्त्ता धनलाभवार्त्ता ॥
ईशानदेशेऽभिमतेन संस-
र्गश्चो उत्ताशाद् बन्धुलोकसङ्गः ।
ब्रह्मप्रदेशे सुरतकामभोगः
सम्मानसम्पद्द्रविणाप्तसिद्धिः" ॥

इति प्रथम प्रहरः ॥ * ॥

"प्राच्यां द्वितीये प्रहरे विरावैः
काकस्य कश्चित् पथिकोऽभ्युपैति ।
चौराद्भयं व्याकुलता च बन्धो
जायेत काचिन्महती च शङ्का ॥
हुताशदेशे नियतं कलिः स्यात्
प्रियागमाकर्णनयोषिदाप्तिः ।
याम्ये तु वृष्टिर्महती च भीतिः
प्रियस्य चैरस्य समागमः स्यात् ॥
रक्षोदिशि प्राणभयं सदा स्युः
स्त्रीभोज्यलाभाखिलरक्षणाशाः ।
भवेत् प्रतीच्यां प्रबलानलाभि-
र्योषागमो वृष्टि कुवर्षणाच्च ॥
समीरभागे ध्वजचौरसङ्गो
दूतागमस्त्रीपिशिताम्नलाभः ।
सौम्ये नरेशागमनं जयश्च
रम्ये रवे चौरभयं त्वरण्ये ॥
महेश्वराशाधिगतस्य काक-
स्यौराधिसन्यासविरुद्धवार्त्ताः ।
ब्रवीति रूक्षैरटनैरसूक्ष्मैः
सदार्थ्यगुर्व्वागमनं जयञ्च ॥
ब्रह्मप्रदेशे प्रहरे द्वितीये
काकः सुशब्दो नृपतिप्रसादम् ।
मिष्टान्नभोज्यञ्च ददाति पुंसां
करोत्यसौ चौरभयं कुशब्दः" ॥

इति द्वितीयप्रहरः ॥ * ॥

"ऐन्द्र्यां विरुत्तः प्रहरे तृतीये
वृद्धिं तथा चौरभयं ब्रवीति ।
कृशानुरु राजागमनं जयञ्च
करोति याम्यां शुभकार्य्यसिद्धिम् ॥
अग्नेर्विभागेऽग्निभयं कलिञ्च
विरुद्धवार्त्ता विफला च यात्रा ।
भवेद्विरुद्धैर्बलिभुग्विरावै-
र्भयादिवार्त्ता च भवेद्विशुद्धिः ॥
काकुभ्यवाच्यां कुरुतेऽतितुर्यां
रोगं तथाप्तागमनं विहङ्गः ।
शुभानि कार्य्याणि च यान्ति सिद्धिं
सर्व्वाणि तन्मुख्यतया नराणाम् ॥
काव्यादिदेशे जलदागमः स्या-
न्मिष्टान्नलाभो रिपवो न सन्ति ।
शूद्रागमः स्वामिविरुद्धवार्त्ता
भवन्ति यात्रासु च कार्य्यनाशः ॥
स्यात् पश्चिमे नष्टधनस्य लाभो
दूराध्वयानं सुहृदागमश्च ।

चौरागमोऽभीष्टजयादिवार्त्ता
याम्यास्तु रम्ये रटितेऽर्थसिद्धिः ॥
वालाखये दुर्दिनमेव वार्त्ता
चौराभिनष्टार्थसमागमश्च ।
सन्तोषवार्त्ता वरयोषिदाप्ति-
र्यात्रा रवे स्यान्मधुरे प्रशस्ता ॥
यामे तृतीये विबुधस्युदीच्यां
कार्य्यार्थलाभो नृपसेवकानाम् ।
भोज्यप्रवृद्धौ शुभदा च वार्त्ता
प्रयाणकं वेश्मसमागमश्च ॥
दिश्यग्निकायाः कुरुते सुशब्दं
भोज्यं भयं हानिकरी कुशब्दम् ।
मध्यप्रदेशे लिखतस्तुलाभ्यां
भोज्यं च ताम्बूलफलं ददाति" ॥
इति तृतीयप्रहरः ॥ * ॥
ऐन्द्र्यां तुरीयप्रहरेऽर्थलाभो
भूमीशपूजाभयवह्निरोगाः ।
वह्नेर्विभागे भयरोगमृत्युः
शिष्यागमो वायसरासितेन ॥
याम्ये रवे तस्करवैरिभीती
स्यातां विशिष्टागमरोगमृत्युः ।
स्यात् यातुधान्यां मघली प्रवृद्धि-
रभीष्टसिद्धिः पथि चौरयुद्धम् ॥
दिशि प्रतीच्यां प्रहरे चतुर्थे
द्विजातिरभ्येति ततोऽर्थलाभः ।
आयाति योषिद्दिजयाम्बुवृष्टिः
सिद्धिः प्रयाणे नृपतेर्व्वरश्च ॥
वायव्यभागे करटस्य शब्दे-
रायाति योषित् प्रियमानिनी या ।
ध्रुवं प्रवासी दिवसाष्टकेन
प्रोष्यागमः स्यात् गमने कृते च ॥
कुबेरभागे पथिकोऽभ्युपैति
ताम्बूललाभः कुशलस्य वार्त्ता ।
वैश्याङ्गनाभिस्तुरगादिरूढा
यात्राविरुद्धे म्रियते च रोगी ॥
स्थाणौ स्थितश्चेद् बलिभुग् विरौति
सुवर्णवार्त्ता सुहृदो विनाशः ।
मध्यप्रदेशे प्रहरे चतुर्थे
वार्त्ता भवेन्मध्यमिका च सिद्धिः" ॥
इति चतुर्थप्रहरः ॥ * ॥
"यद्भाषितं शाकुनिकैर्व्विमिश्रं
शुभाशुभं दिक्प्रहरक्रमेण ।
तथाशुभं यच्छति दीप्तशब्दः
श्रेयस्करः शान्तरवश्च काकः ॥
रम्यं रवं दीप्तदिशि प्रसर्पन्
शान्तां दिशं भूरि फलं ददाति ।
तदेव तुच्छं वितरत्यसौ वै
दीप्तस्थितः पश्यति दीप्तकाष्ठाम् ॥
यथोपदिष्टं फलमत्र दुष्टं
तथैव तद्दीप्तदिशि स्थितः सन् ।
ध्वाङ्क्षोऽधिरूढो विरुवन् करोति
निरीक्षमाणः ककुभं प्रदीप्ताम् ॥



काकः प्रशान्ताभिमुखोऽतितुच्छं
दीप्ताश्रितो दुष्टफलं ददाति ।
शाखाश्रितः शान्तदिगोन्मुखेन
रूक्षारवेऽल्पं कथयत्यनिष्टम् ॥
शान्तस्वरः शान्तककुप्प्रदेशे
तिष्ठन् प्रदीप्तां ककुभञ्च पश्यन् ।
ददात्यभीष्टं फलमेवमल्पं
दीप्तां स पश्यंस्तु तदेव पूर्णम् ॥
आकारचेष्टारवभागविज्ञा-
श्चत्वारि काष्ठादिनयोः क्रमेण ।
सदाभियुक्ताश्च निरूपयन्ति
यस्माच्च ते काकरुतं मनुष्याः" ॥
इति काकरुते दिक्चक्रप्रकरणम् ॥ * ॥
"वर्षाकालमधिकृत्य किञ्चन
प्रोच्यते बलिभुजो यथाक्रमात् ।
आलयाङ्कविचारसुन्दरं
शाकुनं सकलशाकुनोत्तमम् ॥
वैशाखमासे निरुपद्रवेषु
द्रुमेषु काकस्य शुभाय नीडम् ।
निन्द्येषु शुष्केषु सकण्टकेषु
द्रुमेषु दुर्भिक्षभयाय हेतुः ॥
प्रशस्तवृक्षे यदि पूर्व्वशाखा-
माश्रित्य काकेन कृतं कुलायम् ।
तद्वृष्टिरिष्टा शकुनप्रमोदो
नीरोगता स्याद्विजयश्च राज्ञः ॥
आग्नेयशाखारचिते च नीडे
स्याद्वृष्टिरिष्टाग्नि भयं कलिश्च ।
दुर्भिक्षशत्रूद्भवदेशभङ्गो
भवन्ति रोगाश्च चतुष्पदानाम् ॥
याम्यासु शाखासु च वायसेन
नीडे कृतेऽल्पं जलपातमाहुः ।
व्याधिप्रकोपं मरकं समन्ता-
दन्नक्षयं प्रभुविरोधिताश्च ॥
नैर्ऋत्यशाखारचिते च नीडे
यस्माच्छनैर्वर्षति वर्षकाले ।
पीडा नृणां विप्लवचौरभीति-
दुर्भिक्षयुद्धानि भवन्त्यवश्यम् ॥
नीडे कृते पश्चिमवृक्षशाखा-
माश्रित्य काकैः कथिता च वृष्टिः ।
नीरोगताक्षेमसुभिक्षवृद्धि-
सम्पत्प्रमोदाश्च भवन्ति लोके ॥
वायव्यशाखासु कृते च नीडे
प्रभूतवाताल्पजलाश्च मेघाः ।
सुमूषिकोपद्रवशस्यनाश-
पक्षद्वयोद्वेगमहाविरोधाः ॥
कौबेरशाखामधिगत्य नीडे
कृते भवेत् प्रावृषि वृष्टिरिष्टा ।
भवन्ति च क्षेमसुभिक्षसौख्य-
नीरोगतावृद्धिसमृद्धयोऽस्मिन् ॥
ईशानशाखासु च वृष्टिरल्पा
वैरं प्रजानामुपसर्गदोषः ।
स्याद्बान्धवानां कलहप्रवृत्ति-



र्मर्य्यादया क्षीयत एष लोकः ॥
वृक्षाग्रनीडे त्वतिवर्षकाले
मध्ये पुनर्मध्यमतोयपातः ।
तुच्छापि वृष्टिर्न प्रवत्यधस्तात्
स्फुटं दिशोक्तं न दिशः स्फुटत्वम् ॥
अवृष्टिरोगादिभयादिवृद्धिं
विद्याच्च भूमौ बलिभुक्कुलाये ।
शुष्के च वृक्षे डमराङ्गनाशौ
प्राकाररन्ध्रेषु भयं प्रभूतम् ॥
निम्नप्रदेशे तरुकोटरे वा
वल्मीकरन्ध्रे प्रततिष्वपीह ।
काकस्य नीडे नगवृष्टिदोषै-
र्भवन्ति शून्या नियमेन देशाः" ॥
इति वसन्तराजे काककुलप्रकरणम् ॥ * ॥
अथ काकाण्डविचारः ।
"एकं भवेद्दारुणमग्निसंज्ञं
द्वितीयकं मारुतकं तृतीयम् ।
ऐन्द्रं तथा नाम चतुर्थमेव-
मण्डानि काक्याः परिकीर्त्तितानि ॥
काक्या भवेद्दारुणमण्डकं चेत्
पृथ्वी तदा नन्दति सर्व्वशस्यैः ।
मन्दप्रवर्षोऽनलसंज्ञकेऽण्डे
नोप्तस्य बीजस्य भवेत् प्ररोहः ॥
जातानि शस्यानि समीरणेऽण्डे
खादन्ति कीटाः शलभाः शुकाद्याः ।
क्षेमं सुभिक्षं सुखिता धरित्री
स्यादैन्द्रजेऽण्डेऽभिमता च सिद्धिः" ॥
इत्यण्डप्रकरणम् ॥ * ॥
"यात्रा निमित्तानि च कीर्त्तयामः
सुहृत्प्रजानां शकुनानि तानि ।
विज्ञाय यानि प्रजहात्यनर्था-
नर्थांश्च सर्व्वान् कुरुतेऽध्वनीनः ॥
भुङ्क्ष्व बलिं पक्षिषु मन्त्रपूतं
त्वं प्राणिषु प्राणिषि वर्णलक्षम् ।
गुणेन च स्त्रीं भजसे नमोऽस्तु
तुभ्यं खगेन्द्राय सुहृत्प्रजाय ॥
विलोक्य काकं विनिवेद्य तस्मै
मन्त्रेण पूजां दधिभक्तयुक्ताम् ।
उदीर्य्य कार्य्यं निजमध्वगेन
विलोकनीयं शकुनं तदर्थम् ॥
वामेन शब्दं मधुरं विमुञ्चन्
व्रजंस्त्ववामेन करोति काकः ।
सर्व्वार्थसिद्धिं पुनरागमञ्च
शुभप्रदेशे तु तदन्यरूपः ॥
प्रदक्षिणं संप्रविधाय मार्गं
वामेन काको विनिवर्त्ततेऽसौ ।
यातुः करोतीप्सितकार्य्यसिद्धिं
क्षेमञ्च शीघ्रं पुनरागमञ्च ॥
वामे कलं रौत्यनुलोमयायी
यो वायसोऽसौ सकलार्थसिद्धौ ।
स्यातां क्रमाद्दक्षिणवामशब्दौ
सिद्धौ विरुद्धौ विपरीतभूतौ ॥

एष्ठे विरावं मधुरं विमुञ्च-
ननुव्रजंश्चापि मतो हिताय ।
प्रायेण यातारमनुव्रजन्तः
सर्व्वेऽपि काकैः कथिता विहङ्गाः ॥
ज्ञात्वा रवं यः पुरतः प्रयाति
उपस्थितो यो मदमादधाति ।
कण्डूयते यः स्वशिरोऽङ्घ्रिणासौ
पुंसां तदाभीष्टफलं ददाति ॥
स्तम्भे गजानां नियतं गजाप्तिं
गजेऽधिरूढः पृथिवीपतित्वम् ।
तुरङ्गमे वाहनभूमिलाभं
करोति काको विजयं ध्वजेन ॥
प्रयाणलाभं विजयं च कूपे
क्षिप्रं नदीरोधसि कार्य्यसिद्धिम् ।
पूर्णे घटेन्द्रे च धनाप्तिवृद्धिं
ध्वाङ्क्षोऽधिरूढः कुरुते सशब्दः ॥
प्रासादधान्योच्चयहर्म्यगेह-
निष्पन्नशस्यावनिशाद्वलादौ ।
ध्वाङ्क्षोऽधिरूढो धनसाधनाय
रौति श्रियं यच्छति यम्मरावः ॥
एष्ठे पुरो वा यदि गोमयस्थो
तथा वटाद्येषु तरुष्वपीह ।
स्थितो रवन् भोजनपानमिष्टं
विष्ठां च कुर्व्वन् वितरत्यवश्यम् ॥
अन्नाद्यविष्ठाफलमूलपुष्प-
मत्स्यादिभिः पूर्णमुखः सदैव ।
संदृष्टमात्रोऽभिमतार्थसिद्धिं
मिष्टान्नभोज्याय सदैव काकः ॥
नारीशिरःपूर्णघटस्थितस्य
काकस्य शब्दैर्व्वनिताधनाप्तिः ॥
शय्याधिरूढस्य च तस्य शब्दैः
समागमः स्यात् सुजनेन सार्द्धम् ॥
गोष्ठदूर्व्वातृणगोमयेषु
तुष्टानि घर्मंप्रवलोकिताग्रे ।
आहारमन्यस्य तथा ददानो
ददाति भोज्यं बलिभुग्विचित्रम् ॥
धान्यं यवं वा दधि वापि चाज्यं
विरौति यस्तन्निधिलाभकारी ।
करोति लाभं पुरतः स दृष्टो
यस्यास्ति वक्त्रे द्रव्यमप्यशुष्कम् ॥
स्वस्थेन रम्याङ्कुरपत्रपुष्प-
च्छायाफलाढ्येषु सदा द्रुमस्य ।
शब्देन सिध्यन्त्यखिलान्नराणां
सदैव सर्व्वाणि समीहितानि ॥
प्रशान्तनादः शिखरे तरूणां
स्त्रीसङ्गसौख्यं करटोऽभिधत्ते ।
धान्यादिकूटेषु तथान्नलाभो
गोष्ठगो गोवनिताधनाप्तिम् ॥
क्षेमं विधत्ते करभस्य एष्ठे
खरस्य एष्ठेऽरिभयं वधञ्च ।
क्रोडस्य एष्ठे वधमर्थलाभं
तस्यैव एष्ठे घननामपृष्ठे ॥



सद्यो ज्वरं सैरिभपृष्ठसंस्थो
मृताङ्गसंस्थो मरणं करोति ।
कार्य्यक्षतिं रिक्तघटस्य संस्थः
काकः कलिं काष्ठमधिष्ठितश्च ॥
यो दक्षिणां कूजति दक्षिणेन
प्रयाति यश्चाभिमुखोऽभ्युपैति ।
यो याति एष्ठे प्रतिलोमगत्या
क्षतारवः पातयते स रक्तम् ॥
वामे रवो दक्षिणतस्ततो यः
सोऽनर्थहेतुर्ब्बलिभोजनस्य ।
वामप्रदेशे प्रतिलोमयानं
विघ्नाय लाभो गृह एव तेन ॥
प्रयाति एष्ठे यदि दक्षिणेन
क्षतारवस्तद्रुधिरं पुरः स्यात् ।
वल्मीकवल्माद् च यो गृहीत्वा
प्रदक्षिणं याति स सर्पभीत्यै ॥
गोपुच्छवल्मीकलतास्वदश्च
रवन् भवेत् सर्पविलोकनाय ।
स्यान्मृत्यवेऽङ्गारचितास्थिसंस्थः
काकः प्रकुर्व्वन् करचर्व्वणं च ॥
रवन् परो हानिकरो करोति
मृत्युं पुनर्निष्ठुरएष्ठशब्दः ।
प्रसार्य्य गिरं वदनं य आस्ते
सर्व्वत्र निन्द्यो बलिभोजनोऽसौ ॥
वामोऽप्यपृष्ठयातभयं मृतिं वा
संताडयित्वा रसचर्म्मखण्डम् ।
चञ्च्वास्थिभङ्गं भ्रमणस्थिभङ्ग-
बन्धे वधं जल्पति युध्यमानः ॥
वामोऽपि रोगं कुरुते विमुञ्चन्
तिक्तेऽपि वृक्षे कलिकार्य्यनाशौ ।
पक्षौ विधुन्वन् विरवंश्च वृक्षे
सकण्टके मृत्युमुपाददाति ॥
वधो भवेद्रूक्षमपशाखे
बन्धो लताभिः परिवेष्टिते स्यात् ।
रसे तरौ कण्टकयुक्तवृक्षे
सदा भवेतां कलिकार्य्यसिद्धी ॥
छन्नाधिरूढो न रवेण यायात्
प्रयाति चेत् स्यात् खलु रक्तपातः ।
अवस्कर भूस्तृणकाष्ठकूप-
भस्मादिसंस्थो विनिहन्ति कार्य्यम् ॥
वल्मीवराकचमुष्ककाष्ठ-
चर्म्मास्थिजीर्णाम्बरवल्कलानि ।
अङ्गाररक्तोत्पलकर्परास्थि
वृक्षाणि चेत् काकमुखे तदानीम् ॥
एरुषत्रयः पापसमागमश्च
महद्भयं रोगसमुद्भवश्च ।
बन्धो वधः सर्व्वधनापहारः
इत्यादिकं स्यात् पथि मन्दिरे च ॥
ऊर्द्धाननश्चञ्चलपक्षयुग्मः
काकः कुनादो विदधाति मृत्युम् ।
कायायुधच्छत्रघटास्थियान-
वादित्रकाष्ठादिककुट्टकानि ॥



सन्नोचितैकाङ्घ्रिरपेतविष्ठो
दीनस्वरो भास्करमीक्षते च ।
काष्ठादिकं कुट्टयतेऽथवा यो
यद्वाधिकानर्थकरः खगोऽसौ ॥
तुण्डेन पिच्छं विलिखन् रवेण
यो रौति तूर्य्यञ्च निरीक्षते कम् ।
एकेन पादेन तथोपविष्टो
मृते स बन्धं पुरतो जनस्य ॥
विष्ठोभयौ न्यस्यति यस्य मूर्द्ध्नि
तस्याननाशानशनौ भवेताम् ।
यस्याम्बिखण्डं विकिरत्यसौ तु
प्रयाति तूर्णं नगरीं यमस्य ॥
शय्याप्रदेशे विरवन् स्त्रियाश्चेः
करुणदोषं जनयत्यवश्यम् ।
मनुष्यमातङ्गतुरङ्गमाणां
शिरोऽधिरूढो निधनाय तेषाम् ॥
नदीतटे वाथ रटन्नटव्यां
खरस्वरो व्याघ्रभयाय गन्तुः ।
नैवातुरः क्वापि मतो हिताय
न दृष्टचेष्टो वितनोति शान्तिम् ॥
यात्रोद्यमे सैन्यवधाय काको
दृष्टो रथे सान्द्रमलक्षणेषु ।
आयाति यस्याभिमुखो बलस्य
युद्धोद्यमे तस्य पराभयः स्यात् ॥
सन्ध्यमधाङ्घ्रैः कटके नृपस्य
काकैः प्रविष्टैः पिशितं विनापि ।
संयुध्यमानैररिभिः समं स्या-
न्महाहवः सन्धिरयुध्यमानैः ॥
चिह्नध्वजच्छत्रलताधिरोहः
समुद्यतं प्रावृषि प्रमत्रन् ।
आज्ञौ जयं जल्पति भूमिपानां
क्षतध्वनिः क्षौमतरौ च काकः ॥
गलितस्वरौ वायससंप्रयुक्तौ
प्राच्यां फलायोदिततैर्परीत्यात् ।
एवं जनोऽप्याचरति प्रभूतो
यथोदितं तच्च तथागमार्थम् ॥
दिग्यामचक्रेऽपि शुभाशुभानि
फलानि यानि प्रतिपादितानि ।
प्रतिक्रमान्नस्य भवन्ति यानि
तथाविधानीति वदन्ति तज्ज्ञाः" ॥
इति काकवते यात्राप्रकरणम् ॥ * ॥
"स्थानस्थितानां कथयन्ति काका-
श्चेष्टाविशेषेण शुभाशुभानि ।
प्रबोधिताः प्राक्तनकर्म्मभिर्ये
तल्लक्षणाय क्रियते प्रयत्नः ॥
निष्कारणं संवलिता रवन्तो
ग्रामेऽन्ननाशाय भवन्ति काकाः ।
रोधञ्च चक्राकृतयो वदन्ति
सन्तापसव्यभ्रमणाद्भयञ्च ॥
विघातमाक्रन्दमुखाग्रसंस्था
रात्रौ रवन्तो जनताविनाशम् ।
लोकञ्च मधुरचरणप्रहारै-

वदेज्जयन्तः परचक्रवृद्धिम् ॥
यः याति धूम्यान्तु विलोक्य रौति
वह्निं समाशंसति वायसोऽसौ ।
जलस्थलप्राणिविपर्य्ययेण
वर्षासु वह्निं भयमन्यदा तु ॥
मध्ये दिने वेश्मनि यस्य काको
विरौति रौद्रं विधुनोति पक्षौ ।
हरन्ति चौरा द्रविणानि तस्य
ध्रुवं तथान्यो भवति प्रमादः ॥
यवान्नदध्यक्षतपूर्णवक्त्रो
कलशभीतिं करटः करोति ।
स्यात् प्रस्थितस्याप्यथवा स्थितस्य
दुःखं प्रभूतं दिवसत्रयेण ॥
छायासु वामं भुवि भूमिलाभं
विघ्नं जले यावति कार्य्यनाशम् ।
करोति काको वितवन्नरस्य
प्रास्थायिनः ग्रामगतस्य वापि ॥
द्वारप्रदेशेऽवधिरानुभिन्नो
विरौति काकः शिशुनाशनाय ।
पक्षौ विधुन्वन् विवदंश्च रूक्षं
शान्ते च दीप्ते भवने न शस्तः ॥
भूयस्तथोर्द्धे प्रविधाय पक्षौ
काकः कुनादं प्रचयं करोति ।
क्रुद्धोऽधिरूढः करटान्तरञ्च
रोगेण मृत्युं कुरुते नराणाम् ॥
द्रव्ये हृते वापहृते खगेन
विनाशलाभावपि तादृशस्य ।
वस्त्रस्य पीते रजतस्य शुक्ले
चौलस्य कार्पासमये भवेताम् ॥
प्रश्ने कृते रोगविनाशबुद्ध्या
हन्त्याशु रोगं सुरवः प्रदीप्ते ।
शान्ते प्रदेशे करटस्वरेण
वस्त्रारवो रोगमपाकरोति ॥
प्रश्ने शुभे शान्तदिगाश्रयस्थः
शान्तस्वरो यः शुभमादधाति ।
यो वायसस्तं शुभदं वदन्ति
तद्व्यत्यये व्यत्ययहेतुरुक्तः ॥
विरौति कुम्भे मणिकेऽथवा यः
स गर्भवत्याः सुतजन्महेतुः ।
उड्डीयते कण्टकिनीश्च शाखा-
मादाय राजागमनाय काकः ॥
चर्म्मादिविष्ठाभिशिलादिभिर्यः
पूर्णानभोऽम्भोरुफलप्रदोऽसौ ।
मन्त्रादिसिद्धौ वणिजादिलाभे
शस्तो विवाहादिविधौ च काकः ॥
हस्त्यर्थदोऽश्वादिकवाहनस्थ-
स्थानादिसंस्थस्तदवाप्तकारी ।
वध्वागमं शंसति तोरणस्थो
गृहार्थदो गृहतलस्थितश्च ॥
वायसः कुलकुलध्वनिं यदा
व्याहरेद्भवनसंमुखं तदा ।
अभ्युपैति पथिकस्तदा ध्वनिं
सर्व्वकार्य्यशुभदं वदत्यसौ ॥
इदं त्रिदोत्पातयुगं पृथिव्यां
महाभयं शाकुनिका वदन्ति ।
यद्वायसो मैथुनसन्निविष्टो
दृश्येत यद्वा धवलः कदाचित् ॥
उद्वेगविद्वेषभयप्रवास-
धनक्षयव्याधिभयप्रकाराः ।
बुद्धिप्रणाशाकुलताप्रवादा
नृणां भवन्त्यद्भुतदर्शनेन ॥
शमाय तत्सूचितदुःखराशेः
स्नानं वहिस्तत्क्षणमेव कुर्य्यात् ।
आत्मीयशक्त्या च सदक्षिणानि
द्विजाय दद्यात् वसनानि तानि ॥
नयेदहःशेषमपुण्यहान्या
शयीत भूमावक्षताम्रभक्तः ।
हविष्यभोजी न भजेच्च नारीं
दिनानि सप्त त्रिगुणानि यावत् ॥
अकाकघातव्रतमादधीत
बलिं च दद्याद्बलिभोजनेभ्यः ।
स्नात्वा प्रभाते विदधीत शान्तिं
दद्यात् स्वशक्त्या द्रविणं गुणिभ्यः ॥
देशे तु यत्राद्भुतमेतदग्र-
मालोक्यते तत्र समापतन्ति ।
अवृष्टिदुर्भिक्षभयोपसर्ग-
चौराभिशत्रुद्रवधर्म्मनाशाः ॥
कर्म्माणि तस्योपशमाय राजा
प्रवर्त्तयेत् शान्तिकपौष्टिकानि ।
अन्नाद्यगोभूमिवसूनि दद्यात्
युद्धं विदध्यान्न च यावदब्दम्" ॥
इति काकरुते स्थानस्थितप्रकरणं पञ्चमम् ॥ * ॥

अथ स्वरविचारः ।

"कक्कामिति क्षेमविधौ विरावः
केकामितीष्टागमयानहेतुः ।
करोति कूं कूमिति चार्थलाभं
कां कां ध्वनिः काञ्चनलाभमाह ॥
कें केमिति स्त्रीवरयोषिदाप्त्यै
भोगाय कां कामिति शब्दितः स्यात् ।
अपत्यलाभः कु कु इत्यनेन
गन्तुः फलं केकव इत्यनेन ॥
कौं कोमितीदं शुभलाभकारि
कुं कुं निनादः प्रियसङ्गमाय ।
कां कूमिति कामिति च त्रयोऽमी
कां कामिति द्वौ च रवौ रणाय ॥
कां कामिति कौमिति च द्विरुक्तं
कूं कूमिति कौ कुकु कू इतीदम् ।
रुतं प्रदिष्टं मरणाय नृणां
गन्तुः प्रणाशं कुरुते खगाख्यः ॥
की कीमितीष्टार्थविनाशनाय
खलखलेत्यभिभयाय शब्दः ।
कीकीति कोकाविति यः कथञ्चिन्-
मुहुर्मुहुः स्यात् स मतो वधाय ॥
स्यात् का इतीदं विफलं सदैव
मित्रागमे स्यात् क इतीष्टलाभः ।
काका इतीदं तु विघातकारि
करोति काको वदति स्वगुह्ये ॥
आहारदोषाय च काकटीति
स्यादाकुलं कुक्कुनिभं रणाय ।
केकेध्वनिष्काकुटि किं टिकीति
भयं त्विदं स्यात् पुरदूषणाय ॥
यत् का इति स्निग्धदनुस्वरेण
शब्दद्वयं स्यान्महते रणाय ।
कामित्ययं वाहननाशनञ्च
ददाति हर्षं कुकुकुर्व्वितीदम् ॥
यत्का इतीदं विकलं सुदीर्घ-
कृतस्वरेणोच्चरितं प्रमादात् ।
उत्साहहीनः श्रमदैन्ययुक्तः
स वायसः कार्य्यविनाशनाय ॥
सामिषं वकवकेति भोजये-
द्दारयेत् कलिकलीति रासनम् ।
अभ्युपैति खरखण्डभाषिते
प्रोषितः शवशवारवे शवः ॥
स्यात् कलिः कवकवध्वनौ नृणां
जायते कणकणाध्वनौ ज्वरः ।
आव्रजेत् कुलुकुलुध्वनौ प्रियः
सौदनं कटकटध्वनौ दधि ॥
एवं प्रकारा बहवोऽपरेऽपि
प्रशान्तदीप्तावलिभोजनानाम् ।
भवन्ति शब्दाः खलु तेषु केचि-
दस्माभिरुक्ताः खलु लक्षणीयाः" ॥
इति काकरुते स्वरप्रकरणं षष्ठम् ॥ * ॥

"हितं नरेभ्यो मुनिभिः पुराणै-
र्ज्ञानं यदुक्तं बलिपिण्डयत्नात् ।
तदुच्यते संप्रति येन काका
वदन्ति नित्यं बलिलाभतुष्टाः ॥
उदक्प्रतीच्यां दिशि यत्र काकै-
र्युतो भवेत् क्षीरतरुः प्रभूतौ ।
गत्वा निवृत्तेऽहनि तत्र काका
निमन्त्रणीया बलिपिण्डभाज्ये ॥
प्रातस्ततः क्षीरतरोरधस्ता-
द्विशोध्य लिम्पेत् सह गोमयेन ।
भूमिप्रदेशे चतुरस्रमस्य
मध्येऽर्च्चयेत् ब्रह्मसुरारिभानून् ॥
इन्द्राग्निवैवस्वतयातुधान-
जलेशवायुद्रविणेशशम्भून् ।
अभ्यर्च्चयेदष्टसु दिक्षु भक्त्या
क्रमेण चाष्टावपि लोकपालान् ॥
नमोयुतैः सप्रणवैश्च सर्व्वा-
न्निजाभिधानैः प्रयतो मनुष्यः ।
अर्घासनालेपनपुष्पधूप-
नैवेद्यदीपाक्षतदक्षिणाभिः ॥
आब्रह्मकाकांस्तरुसन्निविष्टा-
नाध्याय तस्मात्तमनन्यबुद्ध्या ।
ततस्तदर्थं बलिमाज्यसिक्तं
मन्त्रेण दद्यात् दधिपिण्डयुक्तम्" ॥

मन्त्रः। इन्द्राय यमाय वरुणाय धनदाय भूतवाय-
साय बलिं गृह्णातु मे स्वाहा ॥
"उदीर्य्य कार्य्यं समयावकृत्य
ततः प्रदेशे करटस्य चेष्टाः
स्पष्टीकृताङ्गानि शुभाशुभार्थं
संलक्षयेन्निश्चलपाणिपादः ॥
पूर्व्वेण खादन् सुखवित्तवृद्धिं
करोति वह्नेर्दिशि वह्निभीतिम् ।
काकोऽर्थनाशं दिशि दक्षिणस्यां
नैर्ऋत्यगो दिग्वरक्षत्यदिष्टः ॥
जलेशदेशेऽभिमतार्थसिद्धि-
र्व्वायोर्दिशीति प्रभवात्यवृष्टिः ।
सौम्ये सुखारोग्यसमीहितार्थ-
मीशानदेशे वितरत्यभीष्टम् ॥
बलौ विलुप्ते करटः समन्तात्
कार्य्यं विमिश्रं परिभावनीयम् ।
बलिं विकीर्य्यापि न भक्षयन्ति
काकाश्चदाशौ भयदा भवन्ति ॥
क्षीरद्रुमारामचतुष्पदेषु
सरित्समीपे त्रिदशालयेषु ।
देयो बलिर्भूतदिनाष्टमीषु
कुल्माषदध्योदनतण्डुलाद्यैः" ॥
इति काकरुते पिण्डप्रकरणं सप्तमम् ॥ * ॥
"पिण्डत्रयस्याथ विधानमेत-
दाख्यायते यत् किल नारदाद्यैः ।
दृष्टं मुनीन्द्रैरशुभं शुभञ्च
यथावदस्मिन् कथयन्ति काकाः ॥
गत्वा शुभेऽह्नि प्रहरे चतुर्थे
देशेषु पूर्व्वप्रतिपादितेषु ।
नरेण पिण्डत्रयभोजनार्थं
काकाः प्रयत्नेन निमन्त्रणीयाः ॥
ततः प्रभाते ह्युपलिप्य भूमिं
तस्याञ्च पूर्व्वोदितमन्त्रयुक्त्या ।
अभ्यर्च्य तेषामपि लोकपालाः
काकाश्च पुंसां क्रमतोऽर्चनीयाः ॥
दध्योदनाद्यैर्व्विहितं प्रदेशं
पिण्डत्रये मण्डलकस्य मध्ये ।
अभ्यर्च्चयेदक्षतपुष्पधूपै-
र्मनोज्ञनैवेद्यपरो मनुष्यः ॥
तेषु क्षिपेत् प्राग्दिगनुक्रमेण
पिण्डेषु हैमप्रथमे द्वितीये ।
रूप्यं तथा लौहमयं तृतीये
शेषञ्च कुर्य्याद्बलिपिण्डतुल्यम् ॥
त्रिःसप्तकृत्वो विनिवेश्य पिण्डे
पिण्डा निवेद्या बलिभोजनेभ्यः ।
मन्त्रोक्तमावाहनतोषितेभ्यः
कार्य्यं विचार्य्यापसरेत्ततश्च" ॥
मन्त्रः। ॐ ह्रिवि टिमि विटि काकचाण्डालाय
स्वाहा । इति पिण्डाभिमन्त्रणार्थम् ॥ ॐ ब्रह्मणो
विष्णाय काकचण्डालाय स्वाहा। काकाह्वानमन्त्रः॥
"काकेन भुक्ते ससुवर्णपिण्डे
श्रेयं नरेणोत्तममात्मकार्य्यम् ।



भुक्ते सरूप्ये खलु मध्यमं स्याद्-
भुक्ते सलौहे त्वधमं प्रदिष्टम् ॥
विवादवाणिज्यविवाहवृद्धि-
क्षेमाश्च वित्ताः कृषिभोगरोगाः ।
संग्रामसेवान्यप्रकार्य्यदेशा
इत्यादयोऽस्मिन् परिभावनीयाः ॥
चेष्टामवामां विदधाति याति
प्रदक्षिणं दक्षिणपक्षमुच्चैः ।
ग्रीवां तथोच्चां कुरुते सशब्दः
स्थानं मनोज्ञं श्रयति शुभञ्च ॥
एवंविधां यो विदधाति चेष्टां
पिण्डं समादाय शुभं खगोऽसौ ।
अभीष्टकार्य्यादधिकं करोति
चेष्टाविपर्य्यासतयान्यथात्वम् ॥
पिण्डं समादाय यदि प्रधानं
शान्तां दिशं गच्छति काकपक्षी ।
पूर्णं फलं तत् कुरुते नराणां
चिकीर्षितं वस्तुनि यत्र तत्र ॥
काको गृहीत्वा यदि मुख्यपिण्डं
प्रयाति दीप्तां ककुभं तदानीम् ।
अल्पसमं कार्य्यफलं प्रदर्श्य
ततः समस्तं विनिहन्त्यवश्यम् ॥
द्वितीयकं यद्यपहृत्य पिण्ड-
मुड्डीयते शान्तदिगाश्रयेण ।
फलं तदानीं शुभदं नराणाम्
याप्यं खगो जल्पति कार्य्यजातम् ॥
काकं समादाय जघन्यपिण्डं
याते प्रदीप्तां ककुभं वदन्ति ।
कार्य्यं जघन्यादधिकं जघन्यं
स्यान्मध्यमं मध्यमपिण्डभागे" ॥
इति वसन्तराजे पिण्डत्रयप्रकरणमष्टमम् ॥ * ॥
"मध्यर्षयो वायसशाकुनस्य
वदन्ति सारादपि सारभूतम् ।
पिण्डाष्टकं यत्तदशेषमेत-
दाख्यायते कार्य्यविनिश्चयार्थम् ॥
शुभेऽह्नि काकानधिवास्य सायं
पिण्डाष्टकं भोक्तुमथ प्रभाते ।
तत्कालयोग्यानि समस्तवस्तू-
न्यादाय यायाद्दश्चिरप्रमत्तः ॥
एकान्तदेशे तरुपार्श्वभूमौ
मृद्गोमयाभ्यामुपलेपितायाम् ।
सत्पद्मगन्धेन समुक्षितायां
सौम्योपहारैरुपशोभितायाम् ॥
विधाय पूजां कुलदेवतानां
मध्ये ततोऽष्टस्वपि दिक्षु देयम् ।
भक्तेन सर्पिर्दधिमिश्रितेन
पिण्डाष्टकं प्राग्दिगनुक्रमेण ॥
पश्चीन्द्रवह्न्यन्तकराक्षसेन्द्रान्
विष्णुं विरिञ्चिं धनदं महेशम् ।
पूर्व्वादिकाष्ठाक्रमयोजितेषु
न्यसेत् क्रमादष्टसु पिण्डकेषु ॥
नमोयुतैस्तान् प्रणवञ्च सर्व्वा-



न्ततोऽर्च्चयेत्तन्निजनाममन्त्रैः ।
अर्घ्योदकालेपनपुष्पधूपै-
र्नैवेद्यदीपाक्षतदक्षिणाभिः ॥
अभ्यर्च्चितेभ्यो विधिनोदितेन
पिण्डाष्टकं तत् ददतु द्विजेभ्यः ।
मन्त्रेण संमन्त्र्य निवेदनार्थं
कार्य्यं विचिन्त्यापसरेच्च किञ्चित्" ॥
अथ मन्त्रः । ॐ नमः खगपतये गरुडाय
द्रोणाय पक्षिराजाय स्वाहा ॥
"द्रोणाढकसमं पिण्डं गृहाण त्वमशङ्कितः ।
यथादृष्टं निमित्तं च कथयस्वाद्य मे स्फुटम् ॥
काकेन पिण्डे प्रथमे गृहीते
तिष्ठन् व्रजन् वापि भवेत् कृतार्थः ।
उद्वेगशोकौ विफलः प्रयासो
हानिः क्वचिद्वा भवति द्वितीये ॥
याम्ये वधात्पङ्क्तयस्तथा स्युः
पिण्डे चतुर्थे विजयो रणेषु ।
स्याद्दैवाद्वेऽभीष्टमकष्टसाध्यं
भवेत् प्रवासो विफलश्च षष्ठे ॥
नास्तीह तन्निश्चयमेव कार्य्यं
भुक्ते न यत् सिध्यति सौम्यपिण्डे ।
सन्तापशोकौ विफला च यात्रा
पिण्डेऽष्टमे वायसभक्षिते च ॥
पिण्डं न गृह्णात्यथवा न भुङ्क्ते
चञ्चूनखैर्व्विक्षिपति द्विजो यः ।
कार्य्येषु सर्व्वेषु स न प्रशस्तो
ब्रवीति घोरं समरं च पुंसाम्" ॥
इति वसन्तराजे काकरुते पिण्डाष्टकप्रकरणं
नवमम् ॥ * ॥
"आद्यं पञ्चाशता श्लोकैर्दिक्प्रश्नमीरितम् ।
काकालयपरीक्षा च द्वितीये दशभिस्त्रिभिः ॥
श्लोकैस्त्रिभिस्तृतीये च काकाण्डकनिरूपणम् ।
द्वाचत्वारिंशता श्लोकैर्यात्रा तुर्य्ये प्रकीर्त्तिता ॥
वृत्तानि विंशतिस्त्रीणि स्थानं स्थाप्ये च पञ्चमः ।
स्वरप्रकरणं षष्ठं श्लोकैर्दशभिस्ततः ॥
एकादशभिराख्यानं बलिसंज्ञञ्च सप्तमम् ।
पिण्डत्रयविधानाय चतुर्द्दशभिरष्टमम् ॥
पिण्डाष्टकविधानाय नवमे षड्ड्राष्टकम् ।
अन्यप्रकरणं तत्र वृत्तान्येकादशैव तु ॥
वसन्तराजशाकुने सदागमार्थशोभने ।
समस्ततत्त्वकौतुके विचारितोऽत्र वायसः" ॥ * ॥
समुदायेन १८१ वृत्तानि । इति वसन्तराजशाकु-
नान्तर्गतवायसशाकुननामकाकचरित्रं समाप्तम् ॥
काकमांसगुणाः। शोषक्षयापहत्वम्। बलवृंहितत्वम्।
संग्राहित्वम्। बलायुर्हितकारित्वम्। लघुत्वम्।
दीपनत्वञ्च। इति राजनिर्घण्टः ॥
("काकः कोकिलसूकरावथ खरो-
ष्ट्राश्वादयो भक्षका
व्याला: सौरभयी श्वश्रभ्रतयो
ये चान्यजीवा श्वणाम् ।
मण्डूकाश्च सरीसृपादिकगणा
यूका कनिष्ठाश्च ये

श्रीऔर्व्व उवाच ।
"इति तस्य वचः श्रुत्वा शम्भोरमिततेजसः ।
भैरवस्तु पप्रच्छ वेतालोऽपि समुत्सुकः" ॥
श्रीवेतालभैरवावूचतुः ।
"श्रुतः पीठक्रमस्तात देव्याः पूजाक्रमस्ततः ।
श्रोतुमिच्छामि मूर्त्तीनां पञ्चानामपि शङ्कर ! ॥
रूपाणि पञ्चमूर्त्तीनां मन्त्राणि च समन्ततः ।
तथा यन्त्राणि तन्त्राणि वद नौ वृषभध्वज !" ॥
ईश्वर उवाच ।
"शृणु वक्ष्यामि वेताल मन्त्रं तन्त्रं पृथक् पृथक् ।
कामाख्यापञ्चमूर्त्तीनां रूपं कल्पञ्च भैरव ! ॥
कामस्थं काममध्यस्थं कामदेवपुटीकृतम् ।
कामेन कमयेत् कामी कामं कामे नियोजयेत् ॥
ब्यञ्जनन्तु ब्यञ्जनं ब्रह्म न परः शान्त उच्यते ।
प्रथमं क्रमतः कुर्य्यात् तत्संस्थं सुधामयम् ॥
प्रजापतिस्तथा शक्रबीजसंस्थादिसंयुतम् ।
चन्द्रार्द्धसहितं बीजं कामाख्यायाः प्रचक्ष्यते ॥
इदं धर्म्मप्रदं काममोक्षार्थानां प्रदायकम् ।
इदं रहस्यं परममन्यत्र तु सुदुर्लभम् ॥
श्रीभेदेदं यः शृणुयात् कृष्णवक्ष्याम रोत्तमः ।
स कामानखिलान् प्राप्य शिवलोके महीयते ॥ * ॥
"अतिसकलितसारं देवकाठीघहारं
सकलकलुषहारि श्रीधरामर्त्यकारि ।
सुनयशुभयशोभिर्योजयेद्यस्तु गोभि-
स्तदिह शिवसमस्तं विप्रधर्म्माङ्कितात्मम् ॥
नयनकलिलकारि ध्यानिनां दत्तपारि
प्रणयसुनयसंस्थं देवसत्यादिकास्यम् ।
परमपदविशीयं शुद्धदौर्भाग्यजीनां
शृणु शिवपदरूपं कामदेव्याः स्वरूपम् ॥
अवगमनमात्रान्मार्गितं यस्य नाम
प्रभवति बहुभूत्यै नीतिमार्गैकधाम ।
सुरगणगणसंघा कुण्डली यस्य शक्ति-
स्तदिह परमरूपं चिन्तनीयं क्लीशैः ॥
रविशशियुतकर्णा कुङ्कुमापीतवर्णा
मणिकनकविचित्रा लोलजिह्वा त्रिनेत्रा ।
अभयवरदहस्ता साक्षसूत्रप्रशस्ता
प्रणतसुरनरेशा सिद्धकामेश्वरी सा ॥
अरुणकमलसंस्था रक्तपद्मासनस्था
नवतरुणशरीरा मुक्तकेशी सुहारा ।
शवहृदि पृथुतुङ्गस्तन्ययुग्मा मनोज्ञा
शिशुरविसमवस्त्रा सिद्धकामेश्वरी सा ॥
विपुलविभवदात्री स्मेरवक्त्रा सुकेशी
दलितकरकदन्ता सामिचन्द्रावतंसा ।
मनसिजदृशदिस्था योनिमुद्रा लसन्ती
पवनगगनशक्ता संश्रुतस्थानभागा ॥
चिन्त्या चैवं दीप्यदग्निप्रकाशा
धर्म्मार्थाद्यैः साधिता वाञ्छितार्थैः ।
कथ्यं तन्त्रं शृणु चैवं सम्यगद्य
वेतालत्वं भैरवत्वं प्रतिष्ठम् ॥
तच्छिन्नाद्यं मण्डलं विद्धि पश्चात्
कार्य्यं तद्वै चन्दनैः पुष्पगन्धैः ।
तत्पर्य्याणे लेखने पूर्व्वमुक्तो
देवीतन्त्रे सोऽत्र पूर्व्वं विधेयः" ॥
इति श्रीकालिकापुराणे ६१ अध्यायः ॥

**कामाग्निसन्दीपनमोदकं**, क्ली, (सन्दीप्यते अनेनेति सन्दीपनम् । कामाग्नीनां सन्दीपनमुद्दीपकम् । कामाग्निसन्दीपनञ्च तत् मोदकञ्चेति ।) औषधविशेषः । यथा,—
"कर्षो रसो गन्धकमभ्रकञ्च
हिङ्गुलचित्रे लवणानि पञ्च ।
शुण्ठी यमानीद्वयजीरकद्वारि
तालीशपत्राण्यपरं द्विकर्षम् ॥
जीरं चतुर्ज्जातलवङ्गजाती-
फलञ्च कर्षत्रयमेवमन्यत् ।
सदेवदारं कटुकत्रयञ्च
तथा चतुःकर्षमितं निबोध ॥
धन्याकयष्टीमधुकं कशेरु-
कर्षाः पृथक् पञ्च वरी विदारी ।
वरेभकणाभवलात्मगुप्ता-
बीजं तथा गोक्षुरबीजयुक्तम् ॥
सर्व्वेजपञ्चेन्द्ररजःसमानं-
समासिता क्षौद्रघृतञ्च तुल्यम् ।
कर्षैकमिन्दोरथमोदकं तत्
कामाग्निसन्दीपनमेतदुक्तम्" ॥ * ॥
"हृष्यं ततः परतरं सततं न दृष्ट-
मेनं निषेव्य मनुजः प्रमदासहस्रम् ।
गच्छन् लिङ्गशिथिलत्वमवाप्नुयाच्च
नागाधिपं विजयते बलतः प्रमत्तः ॥
कान्त्या कृतान्तमपि स्वरतो मयूरान्
वाहं यवेन नयनेन महाविहङ्गम् ।
वातानशीतिमथपित्तगदं समग्रं
श्लेष्मोत्थविंशतिरुजः परमग्निमान्द्यम् ॥
दुर्नामकामलभगन्दरपाण्डुरोग-
मेहातिसारक्रिमिहृद्ग्रहणीप्रदोषान् ।
कासज्वरश्वसनपीनसपार्श्वशूल-
शूलाम्लपित्तसहितांश्चिरजान् समस्तान् ॥
हत्वा गदानपि च तत् पुनरप्यकारि
सर्व्वेसुपथ्यमथ सर्व्वसुखप्रदायि ।
हृष्यं बलीपलितहारि रसायनं स्यात्
श्रीमूलदेवकथितं परमं प्रशस्तम्" ॥
इति भैषज्यरत्नावली ॥

**कामाङ्कुशः**, पुं, (कामे कामोद्दीपने अङ्कुश इव । नखाघातेन कामोद्दीपनादस्य तथात्वम् ।) नखः । इति त्रिकाण्डशेषः ॥ (कामस्य अङ्कुश इव ।) शिश्नः । इति जटाधरः ॥

**कामाङ्गः**, पुं, (कामं कामोद्दीपकं अङ्गं मुकुलं यस्य ।) आम्रवृक्षः । इति जटाधरः ॥

**कामातुरः**, त्रि, (कामेन आतुरः ।) कामार्त्तः । यथा ।
"अर्थोलाघवमुच्छितो निपतनं कामातुरो लाञ्छनम्" ॥ इति नवरत्नमध्ये धन्वन्तरिः ॥

**कामान्धः**, पुं, (कामेन अन्धयति निजध्वनिजनितमन्मथोद्दीपनेन हतज्ञानं करोतीति । काम + अन्ध + णिच् + अच् ।) कोकिलः । इति राजनिर्घण्टः ॥ (कामेन अन्धः । स्मरान्धः । कामवेगेन कर्त्तव्यताज्ञानशून्यः ॥)

**कामान्धा**, स्त्री, (कामं यथेष्टं अन्धयति । अन्ध + णिच् + अच् + टाप् ।) कस्तूरी । इति राजनिर्घण्टः । (स्मरेण अन्धा । कर्त्तव्यज्ञानशून्या । प्रगल्भानायिकाविशेषः । यथा, साहित्यदर्पणे ३ । ७० ।
"स्मरान्धा गाढतारुण्या समस्तरतकोविदा ।
भावोन्नता दरव्रीडा प्रगल्भाक्रान्तनायका" ॥
अस्या उदाहरणं यथा तत्रैव ।
"धन्यासि या कथयसि प्रियसङ्गमेऽपि
विश्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किञ्चिदपि स्मरामि" ॥)

**कामायुः** [स्] पुं, (कामं यथेष्टं आयुर्यस्य ।) गरुडः । इति त्रिकाण्डशेषः ॥

**कामायुधः**, पुं, (कामस्य आयुधमिव मुकुले आकारोऽस्ति अस्य । अर्श आदित्वात् अच् ।) महाराजचूतः । आम्रः । इति राजनिर्घण्टः ॥ कामदेवास्त्रे क्ली ॥

**कामारण्यं** क्ली, (कामं मनोहरं अरण्यम् ।) मनोज्ञवनम् । इति शब्दमाला ॥
(कामस्य अरण्यमिति विग्रहे कन्दर्पवनम् ॥)

**कामारिः**, पुं, (कामस्य अरिः ।) विट्माक्षिकधातुः । इति हेमचन्द्रः ॥ महादेवः कन्दर्पनाशकत्वात् ॥

**कामार्त्तः**, त्रि, (कामेन ऋतः ।) कामपीडितः । कामातुरः । यथा, मेघदूते ५ ।
"कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु" ॥

**कामालुः**, पुं, (कामं यथेष्टं अलति पुष्पविकाशेन पर्य्याप्नोतीति । अल पर्य्याप्तौ + उण् ।) रक्तकाञ्चनवृक्षः । इति शब्दचन्द्रिका ॥

**कामावसायिता**, स्त्री, (कामेन स्वेच्छया अवसाययति सर्व्वाणि अविद्याबासनाजालानि । काम + अव + सो + णिच् णिनि ततो भावार्थे तल् ।) कामान् स्वेच्छया अवसाययितुं शीलमस्य कामावसायी तस्य भावः । इति सारसुन्दरी ॥ शिवस्याणिमाद्यष्टधैश्वर्य्यान्तर्गतैश्वर्य्यविशेषः । इत्यमरः शब्दरत्नावली च ॥ सा तु सत्यसङ्कल्पता ॥ (अष्टैश्वर्य्याणि यथा,
"अणिमा लघिमा प्राप्तिः प्राकाम्यं गरिमा तथा ।
ईशित्वञ्च वशित्वञ्च तथा कामावसायिता" ॥)

**कामावसायित्वं**, क्ली (कामावसायिनो भावः । त्वप्रत्ययः ।) कामावसायिता । इति हेमचन्द्रः ॥

**कामिः**, पुं, (कामयते इति । कम् + णिच् + इण् ।) कामुकः । रत्यां स्त्री । इति मेदिनी ॥

**कामिकः**, पुं, (कामः अस्त्यस्य ठन् ।) कारण्डवपक्षी । इति शब्दरत्नावली ॥ (कामेन निर्वृत्तम् । ठञ् । कामनिर्वृत्तकर्म्मणि क्ली । यथा, महाभारते अनुशासनपर्व्वणि ।
"देवतास्तस्य तुष्यन्ति कामिकं तस्य सिध्यति" ॥)

**कामिनी**, स्त्री, (अतिशयेन कामः अस्या अस्ति इति । काम + इनिः + ङीप् ।) अतिशयकामयुक्ता नारी । इत्यमरः । २ । ६ । ३ ॥ (यथा, मनुः ८ । ११२ ।
"कामिनीषु विवाहेषु गवाम्भक्ष्ये तथेन्धने ।

ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम्” ॥) भीरुस्त्री। वन्दा। इति मेदिनी ॥ दारुहरिद्रा। मदिरा। स्त्रीसामान्यम्। इति राजनिर्घण्टः ॥ (यथा, आर्य्यासप्तशती २७०।
“कर्ण इव कामिनीनां न शोभते निर्भरः प्रेमा”॥)

कामिनीशः, पुं, (कामिन्याः कामिनीप्रियाङ्गनस्य ईशः तत्साधनत्वात्।) शोभाञ्जनवृक्षः। इति शब्दचन्द्रिका ॥

कामी, [न्] पुं, (अतिशयेन कामयते। कम + णिच् + णिनिः।) चक्रवाकः। पारावतः। कामुकः। इति मेदिनी ॥ (यथा, मेघदूते। ७४।
“सभ्रूभङ्गं प्रहितनयनैः कामिलक्ष्येष्वमोघैः” ॥) चटकः। इति शब्दरत्नावली ॥ चन्द्रः। इति त्रिकाण्डशेषः ॥ ऋषभौषधिः। सारसपक्षी। इति राजनिर्घण्टः ॥ (सर्व्वकामवत्त्वात् विष्णुः। यथा, महाभारते १३। १४९। ८३।
“कामदेवः कामपालः कामी कान्तः कृतागमः” ॥)

कामीलः, पुं, (काममनुगच्छति इति खः। पृषोदरादित्वात् साधुः।) रामगुवाकः। इति त्रिकाण्डशेषः ॥ (कामीन इत्यपि दृश्यते ॥)

कामुकः, त्रि, (कामयते इति। “लषपतपदेत्यादिना” । ३। २। १५४। उकञ्।) कामी। तत्पर्य्यायः। कमिता २ अनुकः ३ कम्रः ४ कामयिता ५ अभीकः ६ कमनः ७ कामनः ८ अभिकः ९। इत्यमरः। ३। १। २०॥ (यथा, भागवते ९। २३। १७।
“दुष्मन्तः स पुनर्भेजे स्ववंशं राज्यकामुकः” ॥)

कामुकः, पुं, (कम + उकञ्।) अशोकवृक्षः। अतिमुक्तकलता। इति मेदिनी ॥ चटकः। इति राजनिर्घण्टः ॥

कामुककान्ता, स्त्री, (कामुकानां कान्ता प्रिया।) अतिमुक्तकलता। इति राजनिर्घण्टः ॥

कामुका, स्त्री, (कम + उकञ् + स्त्रियां टाप्। न ङीप्।) धनादीच्छाविशिष्टा। तत्पर्य्यायः। इच्छावती २। इत्यमरः। २। ६। ९॥

कामुकी, स्त्री, (कम + उकञ् + “जानपदकुण्डेति” । ४। १। ४२। ङीष्।) मैथुनेच्छावती। तत्पर्य्यायः। वृषस्यन्ती २। इत्यमरः। २। ६। ९॥ (यथा, नैषधे १९। २४।
“अनिशमवदद्यागारेदं जनः खलु कामुकी
सुभगमभिधास्यत्युद्दामापराङ्गवदावदः” ॥)

कामेश्वरी, स्त्री, (काम्यन्ते इति कामा विषयास्तेषां भोग्यानां प्रदायित्वेन ईश्वरी।) कामाख्यापञ्चमूर्त्यन्तर्गतमूर्त्तिविशेषः। यथा,—
“देव्याश्चापि नरश्रेष्ठ! पञ्च रूपाणि भैरव!।
शृणु वेताल! गुह्यानि देवैरपि सदैव हि ॥
कामाख्या त्रिपुरा चैव तथा कामेश्वरी शिवा।
शारदाथ महोत्साहा कामरूपगुणैर्युता” ॥
इति कालिकापुराणे ६१ अध्यायः ॥ * ॥
अस्या मन्त्रं यथा, श्रीभगवानुवाच।
“देव्याः कामेश्वरीं मूर्त्तिं शृणु वक्ष्यामि भैरव!।
यस्याश्चिन्तनमात्रेण साधको लभते प्रियान् ॥
तन्त्रं तस्याः प्रथमतस्ततोऽनुध्यानगोचरम्।
ततः पूजाक्रमं वक्ष्ये क्रमाद्वेतालभैरव! ॥
प्रजापतिस्ततो वह्निरिन्द्रबीजं ततः परम् ॥
चूडाचन्द्रार्द्धसहितं चतुर्थस्वरसंयुतम्।
इदं कामेश्वरीमन्त्रं सर्व्वकामार्थसाधनम्” ॥ * ॥
तस्या ध्यानं यथा,—
“रूपन्तु चिन्तयेद्देव्याः कामेश्वर्य्या मनोहरम्।
प्रभिन्नाञ्जनसंकाशां नीलस्निग्धशिरोरुहाम् ॥
षड्वक्त्रां द्वादशभुजां अष्टादशविलोचनाम्।
प्रत्येकं षट्सु शीर्षेषु चन्द्रार्द्धकृतशेखराम् ॥
मणिमुक्तादिमाणिक्ययुक्तां मालामुरःस्थले।
कण्ठे च बिभ्रतीं नित्यं सर्व्वालङ्कारमण्डिताम् ॥
पुस्तकं सिद्धसूत्रञ्च पञ्चबाणवरं तथा।
खड्गं शक्तिञ्च शूलञ्च बिभ्रतीं दक्षिणैः करैः ॥
अक्षमालां महापद्मं कोदण्डञ्चाभयं तथा।
चर्म्म पश्चात् पिनाकञ्च बिभ्रतीं वामपाणिभिः ॥
शुक्लं रक्तञ्च पीतञ्च हरितं कृष्णमेव च।
विचित्रं क्रमतः शीर्षं ऐशान्यां पूर्व्वमेव च ॥
दक्षिणं पश्चिमञ्चैव तथैवोत्तरशीर्षकम्।
मध्यञ्चेति महाभाग! क्रमात् शीर्षाणि वर्णतः ॥
शुक्लं माहेश्वरीवक्त्रं कामाख्यारक्तमुच्यते।
त्रिपुरापीतसंकाशं शारदाहरितं तथा ॥
कृष्णं कामेश्वरीवक्त्रं चण्डायाश्चित्रमिष्यते।
धम्मिल्लसंयतकचं प्रतिशीर्षं प्रकीर्त्तितम्।
सिंहोपरिसितप्रेतं तस्मिंश्लोहितपङ्कजम्।
कामेश्वरी स्थिता तत्र ईषत्प्रहसितानना ॥
विचित्रांशुकसंवीता व्याघ्रचर्म्माम्बरा तथा।
एवं कामेश्वरीं ध्यायेत् सर्व्वकामार्थसिद्धये” ॥
इत्यादि कालिकापुराणे ६२ अध्यायः ॥

कामोदकं, क्ली, (कामेन स्वेच्छया दत्तं उदकम्।) मृतोद्देशे स्वेच्छया दत्तोदकम्। इति मिताक्षरा ॥

कामोदा, स्त्री, (कुत्सितो मोदो आमोदो यस्याः। सहृदयमनोहरत्वाभावात्।) रागिणीविशेषः। इति हलायुधः ॥

काम्पिलः, पुं, (कम्पिलः नदीविशेषः तस्य अदूरे भवः अण्।) काम्पिल्यदेशः। इति शब्दरत्नावली ॥ (अयन्तु पाञ्चालस्य दक्षिणांशे वर्त्तते। इति हरिवंशः ॥)

काम्पिल्यः, पुं, (कम्पिल + जातार्थे ष्यञ्।) गुण्डारोचनीनामसुगन्धिद्रव्यम्। इत्यमरटीकायां भरतः॥ (कम्पिलाया अदूरे भवः इति सङ्काशादित्वात् ण्यः।) उत्तरदेशविशेषः। इति शब्दरत्नावली ॥ (यथा, महाभारते। १। १३९। ६८।
“माकन्दीमथ गङ्गायास्तीरे जनपदायुताम्।
सोऽध्यवात्सीत् दीनमनाः काम्पिल्यञ्च पुरोत्तमम्।
दक्षिणांश्चापि पाञ्चालान् यावच्चर्म्मण्वती नदी” ॥)

काम्पिल्लः, पुं, (काम्पिल + अण् निपातनात् साधुः।) गुण्डारोचनी। कमलागुँड़ी इति भाषा। इत्यमरः। २। ४। १४६ ॥ तस्य रूपान्तराणि कम्पिल्लः। कम्पीलः। कम्पिलः। काम्पिल्यः। इति भरतः ॥

काम्पिल्लका, स्त्री, (काम्पिल्ल + स्वार्थे कन् टाप् च।) काम्पिल्लः। इति हारावली ॥ (क्वचित् क्लीवेऽपि दृश्यते। यथा सुश्रुते सूत्रस्थाने ४५ अः।
“चूर्णं काम्पिल्लकं चापि तस्मिंस्तं गुटिकाञ्जनम्”।)

काम्पीलः, पुं, (काम्पिल + अण् निपातनात् साधुः।) काम्पिल्लः। इति शब्दरत्नावली ॥ (“देवीं काम्पीलवासिनीम्”। इति यजुर्व्वेदे ॥)

काम्पीलकः पुं, (काम्पील + स्वार्थे कन्।) काम्पिल्लः। इति रत्नमाला ॥

काम्बलः, पुं, (कम्बलेनावृतः। कम्बल + अण्।) कम्बलावृतरथः। इत्यमरः। २। ८। ५४ ॥

काम्बविकः, पुं, (कम्बुः शङ्खं भूषणत्वेन शिल्पमस्य ठक्।) शङ्खकारः। इत्यमरः। २। १०। ८। शाँखारी इति भाषा ॥

काम्बुका, स्त्री, (कुत्सितं अम्बु यस्याः कप्। कोः कादेशः।) अश्वगन्धा। इति रत्नमाला ॥

काम्बोजः, पुं, (कम्बोजदेशे भवः इति। अण्।) कम्बोजदेशजघोटकः। इत्यमरः। २। ८। ४५ ॥ सोमवल्कः। पुन्नागवृक्षः। इति मेदिनी ॥ (कम्बोजः अभिजनो यस्य सिन्ध्वादित्वात् अण्।) म्लेच्छजातिविशेषः। स तु यवनतुल्यः सगरराजेनास्य सर्व्वशिरोमुण्डनं कृतम्। यथा। हरिवंशे।
“अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्ज्जयत्।
यवनानां शिरः सर्व्वं काम्बोजानां तथैव च”।

काम्बोजी, स्त्री (कम्बोजेषु भवः कच्छादित्वात् अण् ङीप्।) माषपर्णी। माषाणी इति भाषा। इत्यमरः २।४।१३८॥ श्वेतखदिरः। इति मेदिनी ॥ पापिड़ि खयर इति भाषा ॥ गुञ्जा। कुँच इति भाषा। वाकुची। हाकुच इति भाषा। इति राजनिर्घण्टः ॥

काम्यं, त्रि, (काम्यते इति। कम् + णिङ् + कर्म्मणि यत्।) कमनीयम्। सुन्दरम्। इति हेमचन्द्रः ॥ (“काम्यानां स्वफलार्थञ्च दोषघातार्थमेव च।
अतः काम्यं नैमित्तिकं प्रायश्चित्तमिति स्थितिः” ॥ इति जाबालः ॥) कामनायुक्तव्यक्तिः। कर्त्तव्यकर्म्म। यथा, मुग्धबोधटीकाकृद्रामतर्कवागीशधृता स्मृतिः
“यत् किञ्चित् फलमुद्दिश्य यज्ञदानजपादिकम्।
क्रियते कायिकं यच्च तत्काम्यं परिकीर्त्तितम्” ॥

काम्यदानं, क्ली, (काम्यञ्च तत् दानञ्चेति।) कमनीयस्य वस्तुनो वरस्त्रीरत्नादिनो दानं कामनया वा दानं। इति भरतः ॥ तत्पर्य्यायः। प्रवारणम् २। इत्यमरः। ३। २। ३ ॥ (यथा, गरुड़पुराणे।
“अपत्यविजयैश्वर्य्यस्वर्गार्थं यत् प्रदीयते।
दानं तत् काम्यमाख्यातं ऋषिभिर्धर्म्मचिन्तकैः” ॥)

कायं, क्ली, मनुष्यतीर्थम्। इति मेदिनी ॥ (कः प्रजापतिर्द्देवतास्य। “कस्येत्”। ४। २। २५। इत्यण् इदन्तादेशश्च ततः आदिवृद्धिः।) प्राजापत्यतीर्थम्। तच्च स्वल्पाङ्गुल्योर्मूलम्। कनिष्ठानामिकयोरधोभाग इति यावत्। इत्यमरभरतौ ॥ (यथा मनुः २। ५९।
“अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते।
कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः” ॥)

कायः, पुं, (को ब्रह्मास्य देवता “कस्येत्” । ४। २।

ब्राह्मणान् भ्रान्तिवशतः केवलं सुतपसं विना ॥
प्रासादाग्रानद्विजान् यातो दृष्ट्वा सुतपसः प्रिया ।
धवं तिरस्कृतवती यथैतच्छ्रृणु कालिके ! ॥
हे स्वामिंस्त्वां नृपो मूर्खं मत्वा नाहूतवान् मखे ।
केवलं तव पाण्डित्यं मत्समीपे न शोभते ॥

सुतपा उवाच ।

कान्ते ! ब्रवीमि विप्राणां यत् कर्त्तव्यं शृणुष्व तत् ।
याच्ञामात्रं वञ्चनञ्च कान्ते सत्यं न चाधिकम् ॥
विद्यांश्चेद्विद्या दातव्या क्वापि नानार्ज्जवं चरेत् ।
मूर्खश्चेत् केवला सन्ध्या सदोपास्या प्रयत्नतः ॥
प्रिये तेन च वक्तव्यमृतमेवाप्रियन्त्वपि ।
विप्रेण सततं कार्य्यं वैद्यमागमिकञ्च तत् ॥
अतो गच्छेच्च स्वां कान्तां मुदा कालञ्च पातयेत् ।
काली कालादिकं वापि जपेद्विप्रो निरन्तरम् ॥
स्वयं स्वभावतो नृणां स्वान्तादीनां शिवं वचः ।
वक्तव्यं चेन्न गच्छन्ति विप्रहानिर्न तत्क्षतिः ॥

ब्राह्मण्युवाच ।

सुमानुषत्वं ते कान्त ! सुविप्रत्वं धव ! त्वयि ।
तिष्ठत्येव चिरं विप्र तेऽन्तौ मे मरणं शिवम् ।
कास्यकङ्कणवलयौ भङ्गिनौ मे मृतावधि ॥

सुतपा उवाच ।

प्रिये ते क्षुधुना तीव्रं धनान्तःकरणं सदा ।
विना निमन्त्रितेनापि गत्वा चानीयते धनम् ॥
इत्युक्त्वा सुतपाः कान्तां गत्वा राजसभां प्रिये ! ।
रान्तं सुयज्ञं वरणं प्रोवाच नृपतिं द्विजः ॥
रे सुयज्ञ ! विनाह्वानैरगच्छं ते सभामहम् ।
विप्राणां वरणं राजन् ! क्षत्रियाणां तथैव च ॥
कृतं तदपि नाहं रे त्वया दृष्टः स्वचक्षुषा ।
भ्रष्टो भवतु ते यज्ञः शीघ्रं यातु रसातलम् ॥
क्रुधैतदुक्त्वा सुतपास्ततो नृपसदः क्षणात् ।
विप्रो निःसृतवान् राजा भीतेन मनसाब्रवीत् ॥
हे पुरोहित ! हे विप्र ! हेऽङ्गिरोऽसौ गतः स कः ।
रे इत्युक्त्वा सभामध्ये वृत्तान्तं वद विस्तरात् ॥
नृपाज्ञया क्षत्रियार्थं पट्टादिवस्त्रसंकुलम् ।
स्वर्णाङ्गुरीयकमपि चानेतुं गतवान् हि यः ।
कोपमन्दिरमालोक्य राजान्तिकमथागतः ॥
इत्यब्रवीच्च राजानं विप्रस्ते कोपमन्दिरे ।
किञ्चिच्च वस्तु दृष्टं न दृष्टं भक्ष्यभोज्यादिकम् ॥
श्रुत्वैतत् विस्मितो राजाऽब्रवीच्चैतत् पुरोहितम् ।
हे पुरोहित ! विप्र ! त्वं ज्ञातवान् यच्चभूच्च तत् ॥
कोऽपराधोऽस्ति मे विप्रः कथं क्षमा गतः प्रभो ! ।
कोपमन्दिरसंपातसंवादं दत्तवानयम् ॥
कोषे नास्ति धनं किञ्चित् सर्व्वं भक्ष्यभोज्यादिकम् ।
श्रुत्वैतदङ्गिरा ब्रूते सुतपा यत्र तत्पट ॥
ततो दुर्गे स राजा च तृणं स्वर्णकुठारकम् ।
गले बद्धा द्विजकुलैर्गतवान् सुतपोऽन्तिकम् ॥
अङ्गिरादिद्विजाः सर्व्वे तत्राद्य सुतपोद्विजम् ।
स्तुतिवन्तः स राजा च दूरस्थो भक्तितोऽस्तवीत् ॥

अङ्गिरःप्रभृतय ऊचुः ।

धरामरवर ! प्राज्ञ ! नो वरस्त्वं धरातले ।
राज्ञः शिवं नो मानं त्वदुपायामहे उमेशाद्धृत ! ॥
देवस्त्वं देवताश्च त्वं पण्डितानाञ्च पण्डितः ।
दयालो ! नो दयस्व च ! नमस्ते वरतो वर ! ॥
ब्रह्मा ब्रह्मा च एव त्वं ब्राह्मणेश्वर मानद ! ।
राज्ञः शिवं नो मानं त्वद्याचामहे उमेशाद्धृत" ! ॥

सुयज्ञराज उवाच ।

हे नाथ ! हे धरेशेश ! धर्म्मकर्म्मविधायक ! ।
वर्णेश्वर ! नमस्तुभ्यं वन्दे ते चरणाम्बुजम् ॥
हे ब्रह्मण्यदेव ! हे नाथ हे धरामर हे प्रभो ! ।
क्षमां कुरु नमस्तुभ्यं प्रणमामि पदं तव ।
नाहं जानामि ते पूजां नाहं जानामि ते स्तुतिम् ॥
नाहं जानामि ते ध्यानं मूढं मां क्षमया दय ॥

सुतपा उवाच ।

किमर्थं स्तुथ हे विप्राः किमर्थं स्तौषि हे नृप ! ।
गच्छ तात मखं गत्वा सुखेन सफलं कुरु ॥
श्रुत्वेति सुतपोवाक्यं सुयज्ञः सुखमानसः ।
कृताञ्जलिपुटो राजा चाब्रवीदिदमुत्तमम् ॥

राजोवाच ।

निमन्त्रयन्तु विप्रेन्द्र ! भोज्यञ्च सकलोत्तमम् ।
एतत्कापराधसाहस्रं क्षमस्व मे क्षमां कुरु ॥
अपराधसहस्राणि कृतवानहमच्युत ! ।
एतं महाव्रतीं सुव्रतामद्युतां मां क्षमां कुरु ॥
मत्सभास्था द्विजा ह्येते प्रोचुः पाण्डित्यमद्भुतम् ।
गुणांश्च ते वर्णविधान् श्रुत्वाहं सुखमानसः ॥
क्षमस्व नाथ ! मे दोषमेकं प्रश्नोत्तरं वद ।
मत्सभास्थो बुधः कोऽपि न ब्रवीति विदाम्बर ! ॥
आगच्छति कलिर्घोरस्तत्र के भक्तितो द्विजान् ।
अर्चयिष्यन्तीति श्रुत्वा मे वरञ्च मरणं शिवम् ॥
श्रुत्वैतत् सुतपा विप्रोऽब्रवीच्च सदयो नृपम् ॥

सुतपा उवाच ।

हे सुयज्ञ नृपश्रेष्ठ ! ब्राह्मणातिप्रियो नृपः ।
पर्य्यतान् विप्रभृत्यांश्चमासनादिष्विकोष्ठितान् ॥
एतद्घोरकलावेते भविष्यन्ति द्विजार्च्चकाः ।
ज्ञात्वा मसीपाः कायस्था ब्राह्मणेश्वरमानसाः ॥

तथाचोक्तं सुरापेया याञ्पेया द्विजातिभिः ॥
वैष्णवं धर्ममाश्रित्य मद्वाक्यं प्रतिपालय ।
कर्त्तव्यं हि प्रयत्नेन लोकद्वयहिताय वै ॥
अनुशिष्य सुतानेवं चित्रगुप्तो दिवं ययौ ।
धर्मराजस्याधिकारी चित्रगुप्तो बभूव च ॥
स्वयं भीष्म ! मनुष्यस्थाः कायस्था ये प्रकीर्तिताः ।
ये शुष्टासे मया ख्याताः संवादं शृणु सत्वरः ॥
अहं ते कथयिष्यामि विचित्रं परमाद्भुतम् ।
प्रभावं चित्रगुप्तस्य समुद्भूतं यथा पुनः" ॥

पुलस्त्य उवाच ।

"सौदासो नाम राजाभूत् सप्तसे विजितपत्तने ।
सदा पापरतः सोऽथ धर्माधर्मं न विन्दति ॥
स यथा स्वर्गमासाद्य लेभे पुण्यफलं शृणु ।
सर्व्वपापी दुराचारः सर्वधर्मविवर्जितः ॥
राजनीतिगतं धर्मं न जानाति कथञ्चन ।
आतिथ्यजयकर्माणि तत्राप्यधमसत्तमम् ॥
न कर्त्तव्यं द्विजैः क्वापि मयाज्ञप्तैः सदौहिते ।
एवमाज्ञप्तवांल्लोके दैवपित्र्यकर्मणि ॥
परित्यज्य स्वकं देशं ततो देशान्तरं ययौ ।
ये केचिद्वसतिं चक्रुर्लोकेषु ब्राह्मणादिषु ॥
ततः प्रभृति गाङ्गेय ! न यज्ञस्यबं क्वचित्" ॥
"न कोऽपि कुरुते भीष्म ! पुण्यं तत्र निषेधितम् ।
एतोत ब्राह्मणादिभ्यः करं धर्मविदूषकः ॥
अप्तौ धर्मभृतां श्रेष्ठ शृणु कर्म विपाकजम् ॥
कालेनान्येन गाङ्गेय सौदासो विचरन् महीम् ।
कार्त्तिके शुक्लपक्षे च द्वितीया चोत्तमा तिथिः ।
तस्यां कार्य्येश कायस्थैश्चित्रगुप्तस्य पूजनम् ॥
महतीभक्तिभावेन धूपदीपादिभिस्तथा ॥
दैवयोगात्तथायातः सौदासः पर्य्यटन्महीम् ।
श्रद्धायुक्तशरीरेण दृष्ट्वा च पूजनं ततः ।
कृत्वा सुपूजनं तत्र चित्रगुप्तस्य भक्तितः ॥
गतपापोऽभवत् सद्यः सौदासोऽसौ महीपतिः ।
चित्रगुप्तप्रभावेण गतो लोकं सुरालयम् ॥
इदं विचित्रमाख्यानं चित्रगुप्तप्रभावजम् ।
कथितं नृपशार्दूल ! किमन्यत् श्रोतुमिच्छसि ॥
इत्याकर्ण्य ततो भीष्मः प्रत्युवाच मुनिं ततः ।
विधिना केन तत्रापि पूजा कार्य्या महात्मने ! ॥
कां मन्त्रः को विधिस्तत्र सर्व्वं तद्वद मे प्रभो ।
यामासाद्य मुनिश्रेष्ठ ! सौदासः स्वर्गमाप्तवान् ॥

पुलस्त्य उवाच ।

चित्रगुप्तस्य पूजाया विधानं कथयाम्यहम् ।
नैवेद्यैर्घृतपक्वैश्च यथाकालोद्भवैः फलैः ॥
गन्धपुष्पोपहारैश्च धूपदीपैः समासतः ।
चित्रगुप्तञ्च संपूज्य श्रद्धाभक्तिसमन्वितः ॥
नवकुम्भं समानीय पानीयपरिपूरितम् ।
शर्करापूरितं कृत्वा पात्रं तस्योपरि न्यसेत् ॥
पूजान्ते च प्रयत्नेन दातव्यञ्च द्विजन्मने ।
ब्राह्मणान् भोजयेत्तत्र कायस्थानपि मन्त्रवित् ॥
ततो भाजनसंयुक्तः सदा चरति भूतले ।
लेखनीच्छेदनीहस्तचित्रगुप्त ! नमोऽस्तु ते ॥
चित्रगुप्त नमस्तुभ्यं नमस्ते धर्मरूपिणे ।
तेषां त्वं पालको नित्यं ततः शान्तिं प्रयच्छ मे ॥
मन्त्रेणानेन राजेन्द्र चित्रगुप्तस्य पूजनम् ।
एवं संपूज्य विधिवत् सौदासो भक्तिभावतः ॥
अचिरात् पापनिर्मुक्तो राज्यं कृत्वा मृतो नृपः ।
नीतोऽसौ यमदूतैश्च यमलोकं भयानकम् ॥
चित्रगुप्तप्रसादाच्च धर्मराजोऽपि भारत ! ॥

धर्मराज उवाच ।

सौदासोऽसौ दुराचारः पापकर्मरतः सदा ।
यानि कानि च पापानि राजासौ कृतवान् भुवि ॥
दृष्टोऽसौ यमराजेन धर्माधर्मविशारदः ।
धर्मराजं ततः प्राह चित्रगुप्तो महामतिः ॥
विपाकं धर्मजं ज्ञात्वा तं प्रत्युवाच ब्रवीद्वचः ॥

चित्रगुप्त उवाच ।

जानेऽहं पापकर्मासौ राजायं विदितः सदा ।
तत्प्रसादादहं धीर ! पूज्योऽस्मि वसुधातले ॥
मया दत्तं वरं स्वामं भक्तोऽयं सदा प्रियः ।
इति ज्ञात्वा महाप्राज्ञ राजापापोऽस्ति मे मतिः ॥
पूजां चकार राजासौ दृष्ट्वा पूजाञ्च मामकीम् ।
अतस्तुष्टोऽस्मि हे देव ! यातु विष्णुपदं नृपः ॥
यमेनाज्ञापितो राजा वैष्णवं पदमाप्तवान् ।
ये चान्ये पूजयिष्यन्ति चित्रगुप्तं मनीषिणः ॥
कायस्थाः पापनिर्मुक्ता यास्यन्ति परमां गतिम् ।
तस्मात् त्वमपि गाङ्गेय ! पूजां कुरु विधानतः ॥

दत्तात्रेय उवाच ।

मुनेर्वचनमाकर्ण्य भीष्मः प्रयतमानसः ।
चकार पूजनं तत्र चित्रगुप्तस्य सत्वरः ॥
कार्त्तिके शुक्लपक्षे तु द्वितीयायाञ्च भारत ! ।
यमञ्च चित्रगुप्तञ्च यमदूतांश्च पूजयेत् ॥
ततो यमद्वितीयेति संज्ञा लोके बभूव च ।
तेनैव भगिनीहस्ते भोक्तव्यं पुष्टिवर्धनम् ॥

महाविद्योपासकाश्च गुणतः क्षत्रियोपमाः ।
कलौ हि क्षत्रियाभावात् वैश्याभावाच्च सुव्रत ! ॥
एते भक्त्या भविष्यन्ति विप्राणामनुहितावः ।
विप्रप्रिया विप्रभक्ता विप्रमानप्रदा यतः ॥
महाविद्याश्रितश्चैते चाण्डकर्म्मरताः कलौ ।
मस्या रवेश्च इत्यस्मात् मसीशोऽसौ निगद्यते ॥
अस्यासौ विप्रमूर्त्तिस्तु मार्तण्डे सम्भवन्ति तत् ।
कायस्था इति संज्ञाः स्युः सुयज्ञैषां शिवा मतिः ॥
श्रुत्वैतत् सकलं राजा वृत्तान्तं सुतपोमुखात् ।
प्रेमाश्रुभिर्न्नेत्रकारी कृताञ्जलिपुटोऽब्रवीत् ॥

राजोवाच ।

इतः परस्तेऽहमेव्त् क्रिये तदपि मन्त्रिवम् ।
श्रुतं यत्तव जातीनां चाण्डालजाती सुखम् ॥
ततोऽतितुष्टः सुतपा उवाच मधुरं नृपम् ।
सुयज्ञ ! सुमतिस्त्वं हि यतो विप्रप्रियो न हि ॥
मानेन ब्राह्मणानां हि वरञ्च मरणं भवेः ॥

सुयज्ञोवाच ।

हे नाथ सुतपो विप्र ! श्रुतं यन्मेऽद्य त्वन्मुखात् ।
कृपया ब्रूहि तत् सर्व्वं ते जातेर्म्मश्चिमानसु ॥
ब्राह्मणो ब्रह्म जानाति नान्यजातिरिति श्रुतिः ।
ब्रह्मज्ञानी सदा विप्रो न चेद्ब्राह्मणसंज्ञकः ॥
विना प्रयुक्तिं यो विप्र उपकारी स्वयं भवेत् ।
आशीः करोति ब्रूते च तथादीनां शिवं वचः ॥
स एव साक्षाद्ब्रह्मेति विप्राणां जातिलक्षणम् ।
ब्राह्मणाज्ञावचो ये न गृह्णन्ति पालयन्ति च ॥
गुर्व्वाज्ञालङ्घनं पापं स्पृशेत्तेषां शरीरतः ।
मिश्रेति सकलं चोक्तं ते च सन्दिग्धजातयः ॥
वशीकारादि सकलं स्वस्तिश्चित्तिलक्षयश्च यत् ।
प्राकुर्वन्ति हि कर्त्तुं ते विप्राः मिश्रेति चोक्तसु ॥
विनायासैर्मुदा यो यत् विप्राय शक्तितो ददत् ।
मुदा तदेव गृह्णाति विप्राणामिति लक्षणम् ॥
केषामपि न कापद्यं कुरुते ब्राह्मणः क्वचित् ।
विनापराधेन शपेदिति तज्जातिलक्षणम् ॥
हिंस्रे भवति हिंस्रः स शठे शाठ्यं समाचरेत् ।
आर्जवञ्चेन्द्रियग्रामान् स्ववशे स्थापयेच्चिरम् ॥
दयालुश्च सदा विप्र इति पुत्र हृदि स्मरन् ।
भीत्या भक्त्या सदा पूज्यः पितेति श्रुतवांश्च मे ॥
कटूक्त्या यदि गृह्णाति हृदा दुःखेन दाति चेत् ।
तद्विप्रो दुःखं भजते दातुर्नैव शिवं क्वचित् ॥
विलक्षाश्यं गृह्णाश्यं कार्य्यं गोमयतः क्वचित् ।
इत्यप्यात्मजं विप्राश्च श्रुतं शासनसम्मतम् ॥
ब्रूहि पुत्र प्रवक्ष्यामि सावधानं समाचर ।
शस्त्रं वज्रप्रयस्तं वा नैव स्पृशति भूसुरम् ॥
सुतपो नाथ मे पित्रा यद्यदुक्तं तदुक्तवान् ।
त्वञ्चापि ब्राह्मण ब्रह्म यथारुचि तथा कुरु ॥
श्रुत्वैतत् सुतपा विप्र उवाच परमादरम् ।
राजन् वरं वृणु वृणु यत्ते मनसि वाञ्छितम् ॥

सुयज्ञ उवाच ।

भगवे ! वरेण ते नैक उपकार इहाधुना ।
यत्ते समाप्तौ मे भक्तश्चेत्ता रामो भविष्यति ॥

सुतपा उवाच ।

यज्ञं समाप्य सुखतः प्रगच्छेर्विन्ध्यनैऋर्तिम् ! ।
तत्र वै स्वर्णदामध्या मध्ये द्वीपोऽस्ति सुन्दरः ॥
द्वादशक्रोशमानो हि तद्गत्वा वसतिं कुरु ।
यदा परशुरामस्ते कश्चिच्छेत्ता भविष्यति ॥
भविष्यति च कालः स नय ते वाञ्छितं वरम् ।
ततः पुनः कृते राजन् जम्बुद्वीपेश्वरो भवान् ॥
भविष्यतीति त्वं योजनप्रपेण तिष्ठ तत्र हि ।
वरं ते वाञ्छितं गृह्ण तुष्टोऽहं भक्तितस्तव ॥
इत्युक्तः परतो यद्यत् परमानन्द सुसमम् ॥

सुयज्ञराजोवाच ।

नाथ ! नाहं वरं याचे याचे केवलमङ्घ्रि ते ।
चिरं मम मतिस्तिष्ठेदिति देहि वरोत्तमम् ॥
तेऽङ्घ्री पवित्रे परमे सर्व्वत्र सुखदे किल ।
तदेवास्तु इति प्रोच्य सुतपा गतवान् गृहम् ॥
राजापि च मखं कृत्वा विप्रेभ्यो दक्षिणां ददत् ।
परिवारयुतोऽगच्छद्द्वीपे काञ्चनदान्तरे ॥
वसतिं वरतः प्राप्तां चतुर्दिक्षु जलप्लुताम् ।
अत्रस्थाः प्रापटन् विप्राः पण्डिताः स्वस्ववासभूम् ॥
एको मसीशः सर्व्वाख्यः सर्व्वाणीहृदयन्दिनात् ।
कुलप्रदीपः स्वीयानां जातीनां पूतनास्पृहः ॥
बगलेति महाविद्यां गृहीत्वा साधयन् मुदा ।
सर्व्वाणीहृदयाख्यस्य पण्डितस्य प्रसादतः ॥
वरं याचितवान् भक्त्या त्रिलोकाधिपतिं गुरो ! ।
कृपया कुरु मां नाथ ! त्वमेव बगला मम ॥
गुरुश्चापि वरं दत्तो राज्यं भुक्त्वा पुनर्भवन् ।
त्रिलोकाधिपतिर्भूय मुदा तत्र सुखिष्यति ॥
गुर्व्वाज्ञया मसीशः स राज्यभोगी द्विजार्चितः ।
विहाय देहं भूयश्च त्रिधास्यो बभूव च ॥
चित्रगुप्तश्चित्रसेनश्चित्राङ्गद इति त्रयः ।
स्वर्गे मर्त्ये च पाताले राजते चिरमुत्तमः ॥
चित्रगुप्तो महाविद्यां प्राप्य कुक्षाख्यविप्रतः ।
पुत्रान् याचितवान्नैव गुरोर्देवत्वमावहन् ॥
यमान्तिस्थो बभूवापि स्वर्म्मर्त्याधोविवेचकः ।
चिरं शुभाशुभं कर्म्म विविच्य शमनान्तिके ॥
यद्वदेत् सकलानां तु तदेवाभोजयेत् यमः ।
चित्रसेनो महाविद्यां बगलेति गुरोर्नयन् ॥
जप्त्वा संतोष्य पुत्रादीन् याचित्वा प्राप्य मर्त्यतः ।
राज्यं चकार मुद्युक्तश्चित्राङ्गद अधोगतः ॥
अधोगतस्य हेतुं त्वं बगले शृणु कालिके ! ।
बगलेति मनुं प्राप्य विप्रोऽस्मि इति वाञ्छया ॥
तपश्चकार पञ्चाब्दं नाम्नं किञ्चित् गृहीतवान् ।
फलमूलादिकं किञ्चित् सायमत्ति यथा मिलेत् ॥
विहाय विप्रस्य गुरोरपि पूजाञ्च पार्व्वति ! ।
जपेन्नित्यं हि बगलामन्यविप्रञ्च नेक्षयन् ॥
ज्ञात्वेति ब्राह्मणाः सर्व्वे ऊचुश्चित्राङ्गदं क्रुधा ।
वचो हि मधुरं किञ्चित् प्रियाद्भक्ताश्च सुन्दरि ! ॥
रे चित्राङ्गद ! कथन्त्वं वत्स विप्रत्वमिच्छसि ।
कदाप्युपानन्मस्तस्थो नैवेति न हि बुध्यसि ॥
वत्स ! शीघ्रमधो गच्छ चिरं कुरु तपो मुदा ।
ततः श्रुत्वेति शापं स भक्त्यातिशयमानसः ॥
कृताञ्जलिपुटो ब्रूते चित्राङ्गद इतीश्वरि ! ॥

नित्ये यज्ञस्यमायव्यसर्व्वकामार्थसिद्धिदम् ।
दामानि दापयेद्यस्तु भगिन्यै च विशेषतः ॥
काले तत्र च संपूज्य चित्रगुप्तञ्च लेखकम्
चित्रैश्च चित्रपत्रैश्च रक्तचन्दनमिश्रितैः ॥
नैवेद्यं दीयते तस्मै मोदकं गुडमिश्रितम् ॥
भीष्मोक्तप्रार्थना यथा,—
उत्पत्तौ प्रलये चैव भोग्ये दाने कृताकृते ।
लेखकस्त्वं सदा भीमश्चित्रगुप्त नमोऽस्तु ते ॥
चित्रा यत्र सतुष्ट्य समुत्थस्यनीकुरु ! ।
चित्रगुप्त महाबाहो ! मनाय वरदो भव ॥
चित्रगुप्तस्तु सन्तुष्टो भीष्माय च वरं ददौ ।
सम्यग्ध्यायामहाबाहो मृत्युस्ते न भविष्यति ॥
इच्छिष्यसि यदा मृत्युं तदा मृत्युर्भविष्यति ।
इति तस्मै वरं दत्त्वा चित्रगुप्तो दिवं ययौ ॥
अनेन विधिना यस्तु चित्रगुप्तस्य पूजनम् ।
करिष्यति महाबाहो तस्य पुण्यफलं शृणु ॥
इहैव विपुलान् भोगान् भुक्त्वा सर्व्वान् मनोरथान् ।
अन्ते च विष्णुलोकञ्च नरो याति न संशयः ॥
चित्रगुप्तकथां दिव्यां कायस्थोत्पत्तिदीपकाम् ।
भक्तियुक्तेन मनसा ये शृण्वन्ति नरोत्तमाः ॥
दीर्घायुषो भविष्यन्ति सर्व्वव्याधिविवर्जिताः ।
सर्व्वे विष्णुपदं यान्ति यत्र यान्ति तपोधनाः" ॥
इति भविष्यपुराणे चित्रगुप्तकायस्थोत्पत्तिमाहात्म्यकथा समाप्ता ॥ * ॥

"एवं कृत्वाञ्जलिं रामः सन्धाय निशितान् शरान् ।
एक एव ययौ हन्तुं सर्व्वानेवासुरान् नृपान् ॥
केचित् गहनमाश्रित्य केचित् पातालमाविशन् ।
सगर्भा चन्द्रसेनस्य भार्य्या दाल्भ्याश्रमं ययौ" ॥
"ततो रामः समायातो दाल्भ्याश्रममनुत्तमम् ।
पूजितो मुनिना सद्यः पाद्यार्घ्याचमनादिभिः ॥
ददौ मध्याह्नसमये तस्मै भोजनमादरात् ।
रामस्तु याचयामास हृदिस्थं स्वमनोरथम् ॥
याचयामास रामाश्च कामं दाल्भ्यो महामुनिः ।
ततस्तौ परमप्रीतौ भोजनं चक्रतुर्मुदा ॥
भोजनानन्तरं दाल्भ्यः पप्रच्छ भार्गवं प्रति ।
यन्मया प्रार्थितं देव तत् त्वं दातुमर्हसि ॥

राम उवाच ।

तवाश्रमे महाभाग सगर्भा स्त्री समागता ।
चन्द्रसेनस्य राजर्षेः क्षत्रियस्य महात्मनः ॥
तस्मै त्वं प्रार्थितं देहि हिंसेयं तां महामुने ।
ततो दाल्भ्यः प्रत्युवाच ददामि तव वाञ्छितम् ॥

दाल्भ्य उवाच ।

स्त्रियो गर्भमनु बालं तस्मै त्वं दातुमर्हसि ।
ततो रामोऽब्रवीद्दाल्भ्यं यदर्थमहमागतः ॥
क्षत्रियान्तकरश्चाहं तत् त्वं याचितवानसि ।
प्रार्थितश्च त्वया विप्र ! कायस्थो गर्भ उत्तमः ॥
तस्मात् कायस्थ इत्याख्या भविष्यति शिशोः शुभा ॥
एवं रामो महाबाहुर्हित्वा तं गर्भमुत्तमम् ।
निर्जगामाश्रमात् तस्मात् क्षत्रियान्तकरः प्रभुः" ॥
"कायस्थ एष उत्पन्नः क्षत्रिण्यां क्षत्रियात्ततः ।
रामाज्ञया स दाल्भ्येन क्षत्रधर्माद्बहिष्कृतः ॥
कायस्थधर्मोऽस्मै दत्तश्चित्रगुप्तस्य यः स्मृतः ।
तद्गोत्रजाश्च कायस्था दाल्भ्यगोत्रास्ततोऽभवन् ॥
दाल्भ्योपदेशतस्ते वै धर्मिष्ठाः सत्यवादिनः ।
सदाचारपरा नित्यं रता हरिहरार्चने ॥
देवविप्रपितृणाञ्च अतिथीनाञ्च पूजकाः" ॥
इति स्कान्दे रेणुकामाहात्म्यम् ॥ * ॥

चित्राङ्गद उवाच ।
"हे ब्राह्मणा हे गुरवो ! मामेवातिनिरागसम् ।
कथं शेपुर्भवन्तो हि विप्ररूपा च ईश्वराः ॥
मुखाद्वो श्रुतवान् यद्यत्स्तुतिः का तत्समाचरन् ।
उपास्यो यस्तद्भवितुं सर्व्वं स्त्रुग्योगिनः स्युत ॥
जानेऽहं ब्राह्मणो ब्रह्म स्वेच्छया विविधाकृतिः ।
नानालीलामाचरितुं मानुषाकृतिरप्यभूत् ॥
तद्ब्रह्म ब्राह्मणं जाने जाने तत् सर्व्वरूपधृक् ।
राजेति संज्ञाधारी कः किं वा तच्च प्रजाभिधम् ॥
तदेव सकलस्थायि तदेव सर्व्वकर्त्तृ च ।
तदेव सर्व्वपात्र स्यात्तदेव सर्व्वहर्त्तृ च ॥
पुंरूपं चैव स्त्रीरूपं क्लीवरूपञ्च नान्यथा ।
आत्मा एवैकरूपं तत् स्वमेवानेकमाकरोत् ॥
नानाप्रकारजीवादि चात्मनात्मानमेव हि ।
स्थावरं जङ्गमं विप्रास्तदेव नात्र संशयः ॥
भवन्तो हीश्वराः सर्व्वे किमर्थंयथ तत् कथम् ।
कथं चिन्तयथात्मानं देवमर्च्चनकालतः ॥
कलेन भूतशुद्ध्यादि कृत्वा देवाः स्युरेव किम् ।
ईशोऽपि मानुषाकृत्या ईशत्वप्राप्तये पुनः ॥
यद्युद्योगी भवेत्तत् किं मानुषोऽहं न तत्परे ।
अन्यापि न भवेद्ब्रह्म यूयमन्यायिनः कथम् ॥
वगलापि च या जप्या सा च ब्राह्मण एव हि ।
कश्चिद्विशेषो भेदोऽपि वगलायां द्विजेऽपि न ॥
अतस्तद्भवितुं विप्रा अहमप्येव तापसः ।
गुर्व्वाज्ञा मे पुराभूच्च सर्व्वं त्यक्त्वा जपं कुरु ॥
अतोऽहं सकलं त्यक्त्वा केवलां वगलां जपे ।
वगलायां द्विजे नैव कश्चिद्भेदोऽस्ति शासने ॥
अतो विप्रोऽस्मीति कामं कृतवान् जपकर्म्मणि ।
गुरौ विप्रे मन्त्रौ चापि देवे चात्मनि भूसुराः ॥
मसीशजातिः किञ्चिच्च न विशेषं विचिन्तयेत् ।
ब्राह्मणोऽप्यविशेषश्च तस्मिंस्तस्मिंश्च भूसुराः ॥
आत्मन्यात्मनि कीटेऽपि चेति वो ज्ञातिलक्षणम् ।
मूर्खोऽहं यच्च श्रुतवान् प्रभवो ब्राह्मणात्स्यतः ॥
सदाचरितवान् मे को दोषोऽस्ति वदत द्विजाः ।
विनापराधतो विप्रा यूयं वाक्कल्पतः ॥
वणिक्त्वातिप्रियं भक्तमधः प्रास्थापयन् यदि ।
अहं कीटोऽत्र गार्हस्थ्यं किमधो न पटे कथम् ॥
कलाञ्जलिपुटेऽहं वत्सराणां शतसंख्यया ।
प्रथमे स्थाटहं विप्रा गच्छताहमधः पटे ॥
अधोगच्छाम्यहं तत्र किञ्चित् खेदं करोमि न ।
वाञ्छयामीति चाज्ञा वो न लङ्घ्या भवतु क्वचित् ॥
इत्यादि श्रुत्वा हे कालि! लज्जां प्राप्यातिखेदिताः ।
ब्रुवन्ति चातिमधुरं क्रन्दन्त इव ते द्विजाः ॥
हे चित्राङ्गद ! हे विद्वन् ! दौर्म्मनस्यं त्यज वत्सक ! ।
दुश्चिन्तां कुरु मा तात भद्रं ते कथयामि ते ॥
अनन्तपोबलेनैव सर्व्वं भवितुमर्हति ।
नार्हतीशं विना तात ब्राह्मणो भवितुं किल ॥
इतीश्वराज्ञा वेदेऽस्ति प्रतिजानीहि तत्त्वतः ।
वरं प्राप्नोति देवत्वं ब्राह्मणत्वं कदापि न ॥
यथामरत्वमीशेन विना क्वापि न शासने ।
मा दुःखी त्वमधो गच्छ सुखेन वगलां जप ॥
कालेदशसहस्राणि नागलोकेश्वरो भव ।

कायस्थः

ततस्त्रिलोकनाथस्त्वमिन्द्रतुल्यो भविष्यसि ॥
राज्यं भुक्त्वा ततो नैव पुनरावर्त्तनं तव ।
सदा वयं तव शिवं चिन्तयामो न भीं कुरु ॥
के जानन्तीदृशं त्वां हि भक्तश्रेष्ठं विवेचकम् ।
शापं दारुणमाज्ञस्त्वमधुना तन्न खण्डति ॥
तात गच्छ सुखं भुङ्क्ष्व नागलोकेऽपि विस्तरात् ।
तत आनन्दमनसा ततश्चित्राङ्गदस्तदा ॥
स्वस्थानं ब्राह्मणास्तेऽपि चागच्छन् लज्जितान्तराः ।
भूयो मसीशः सर्व्वोऽपि विप्रदासाभिधोऽभवत् ॥
विप्रप्रसादात् शूद्राणामपि श्रेष्ठो बभूव च ।
वगलेति महामन्त्रं सर्व्वेषां सर्व्वकामदम् ॥
केवलेन जपेनैव लक्षेण कालि ! सिध्यति ।
वशीकरणकर्म्मादि दशसाहस्रतो भवेत् ॥
अथ वक्ष्ये महेशानि ! वगलासाधनं तव ।
वगलेति मनोः संख्या पुरश्चरणकर्म्मणि ॥
लक्षेण मन्त्रसिद्धिः स्यात् नात्यत्र युगसंख्यकम् ।
ततो वश्यादि कर्त्तव्यं दशसाहस्रसंख्यया ॥
शरीरारोग्यतो वापि धनेच्छुश्चायुतं जपेत् ।
कलावेतस्य हि मनोः प्रभावं किं ब्रवीमि ते ॥
सहस्रमात्रहोमेन सर्व्वसिद्धिर्न चान्यथा ।
नास्त्यपेक्षा हि ऋष्यादेः स्तुतिपाठादिकस्य वा ॥
स्तुतिर्व्वा कवचं वापि ऋष्यादिन्यास एव वा ।
वगलेति स्वयं सर्व्वं सिद्धविद्या इति प्रिये ! ॥
लयाद्याकल्पया कालि ! स्वयमुक्तं पुरैकदा ।
शरीरारोग्यतो देवि ! वैरिनिग्रहतोऽपि वा ॥
दिवा नक्तञ्च कर्त्तव्या सहस्रमानतो हुतिः ।
केवलाहुतिमात्रेण रोगादारोग्यतां लभेत् ॥
वगले इति यो हिक्षाष्टलोकेश्च धारयेत् ।
पथिस्था विघ्नदाः सर्व्वे पलायन्ते समीक्षिताः ॥
भवेद्धि सफलं कर्म्म वगलेति स्मरन् जनः ।
वगलाजापिनं दृष्ट्वा सर्व्वे भीतिमवाप्नुयुः ॥
केवलं पटलमिदं पठन् प्रगवन् मनोरथम् ।
लभेत् कालि ! वपुस्त्यक्त्वा वगलाञ्च न संशयः ॥
यथा विद्या मसीशेन सदोपास्या न संशयः ।
ब्राह्मणे वगलायाञ्च चिन्तयेदेकरूपतः ॥
विना प्रयुक्तिमपि च मसीशं स्थापयेद्द्विजः ।
श्रावणायां धनाकाङ्क्षी न भवेद्ब्राह्मणोत्तमः ॥
आलस्याद्वा प्रमादाद्वा श्रावयेन्न यदि द्विजः ।
मसीशहत्याभागी स्याच्छ्रावयित्वा तव प्रियः ॥
ब्राह्मणोऽपि वरारोहे ! पठनात् भक्तितत्परः ।
निर्व्वाणं लभते कालि ! निष्कामो कोऽपि चेत् पठेत् ।
एतद्भक्तोऽपि कायस्थः पठनाद्यदि प्रिये ! ।
पटलं काम्यदत्वाशु ब्रह्महत्याफलं लभेत्" ॥
इति आचारनिर्णयतन्त्रे वासुदेवसम्मते हर-
पार्व्वतीसंवादे सप्तविंशतमः पटलः ॥
"चाटचारगचौरेभ्यो वधबन्धभयादिभिः ।
पीड्यमाना प्रजा रक्षेत् कायस्थेभ्यो विशेषतः" ॥
इति वह्निपुराणे पाशुपतदानाध्यायः ॥ * ॥

गौड़देशे तेषामागमनकारणम् । तत्रादौ मङ्गलाचरणं यथा.—
"यस्याभूद्भूमिदेवो वदनसरसिजेद्दभुजेभूमिपालो
यस्योर्व्वोर्व्वैश्य एव द्विजभजनरतिश्च शूद्रःपदाब्जे ।

कायस्थः

यस्माद्भातिश्वतीदं जगदिति प्रकृतिः स्वयं पूर्णब्रह्म
वन्देऽहं देवदेवं त्रिगुणमयवरं सर्व्वलोकानुकम्पम्" ॥

अथ आदिशूरराजप्रशंसा ।
"श्रीमद्राजादिशूरोऽभवदवनिपतिर्धर्म्मराजो नु साक्षात् सल्लोकः सद्विचारैरदितिसुतपतिः स्वर्यथासीदुतथासीत् । प्रतापादिक्षतप्राखिलक्षितिमिररिपुस्तच्चवेशा महात्मा जित्वा बुद्धांश्चकार स्वयमपि नृपतिर्गौड़राज्याधिरक्षाम्" ॥ * ॥ अथादिशूरस्य पार्श्वं प्रति क्रतुश्रमब्राह्मणकुलीनशूद्रयोः प्रश्नस्तस्योत्तरञ्च ।"पार्श्वं पप्रच्छ भूतं परमसुरपदद्वन्द्वपद्मार्च्चकोऽसौ कासन्ते काश्यपीयाः क्रतुकृतिकुशलाः क्वापि शूद्राः कुलीनाः । पार्श्वस्तेषामवोचत् परिचयमखिलं भूपवाक्यात् द्विजास्ते कोलाञ्चस्थाः कुरङ्गा इव किल तपसा नैव केषामधीनाः ॥ कोलाञ्चस्य महीपतिः क्षितिभुजामेकप्रधानः प्रधी लेखे निक्षमतिर्मशाक्षयवरं श्रीवीरसिंहः स्वभूत् । तद्देशवासिनः समाधिकृतिनः पापारिसंहारिणः सन्ति व्याससमाः सभासद इतो गौड़ेन्द्रभूमीश्वराः" ॥ * ॥

अथ वीरसिंहं प्रति लिपिप्रेरणम् ।
"भूपोऽभूद्भवने स्वचेष्टितपरः सद्वृत्तभार्य्यान्वितान्
भूदेवान् सपञ्चान् विचित्रलिखनैरानेतुकामः स्वयम् ।
पार्श्वेण प्रणयप्रमोदरचितां श्रीवीरसिंहे लिपिं
गौड़क्ष्मापतिरेव पुण्यसुमतिर्दूतेन प्रास्थापयत्" ॥*॥

अथ लिपिप्रकारः ।
"सुकृतसुकृतसंघाः सर्व्वशास्त्रार्थदक्षा
अर्पितकृतविपक्षाः सत्त्ववाक्याः श्रुतिज्ञाः ।
सुविततसुगतवृन्दे गौड़राज्ये मदीये
द्विजकुलवरजाताः सानुकम्पाः प्रयान्तु ॥
नृपतिसुकृतिसारः सोमवंशावतारः
प्रबलबलविचारो वीरसिंहोऽतिवीरः ।
मयि वरसखितास्ते भूमिदेवान् सशूद्रान्
पुनरपि मम गौड़े प्रापय त्वं नितान्तम्" ॥*॥

अथ ब्राह्मणशूद्राणां गौड़देशे गमनेच्छा ।
"मुदा गन्तुकामाः पुरावासगौड़ाः
समाहाय कोलाञ्चदेशं क्षितीशम् ।
नृपाज्ञाञ्च लब्ध्वा सदारादिभृत्या
महायोगिनस्ते बभूवुः सशूद्राः" ॥ * ॥

अथादिशूरसमीपे ब्राह्मणप्रेरणम् ।
"महाराजराजादिशूरो महात्मा
त्वया वीरसिंहस्य मेऽस्त्यादिसख्यम् ।
तवाज्ञानुसाराद्धि प्रस्थापयामि
द्विजान् पञ्चगोत्रान् सदारादिभृत्यान्" ॥ * ॥

अथ ब्राह्मणानां गमनम् ।
"चलच्चञ्चलाश्वालियानाः प्रधाना
दहत्यग्न्युग्राग्निशोभानलाभाः ।
श्रुतज्ञाः श्रुतिज्ञाः प्रतिष्ठानसाध्याः
सवर्म्मास्त्रशस्त्राः प्रयाताः प्रयागम् ॥
ततः स्नानदानादि कृत्वा च विप्राः
यदन्तेऽपि वाराणसीं पञ्चगोत्राः ।
ततो विश्वनाथं समालोक्य दाशे-
यशः प्राप्य तस्मादयाभूमिमायुः" ॥ * ॥

अथ ब्राह्मणानां गौड़राज्यप्रवेशो राजसमीपे आशिरर्थं गमनञ्च ।

"पितॄन् बान्धवांस्त्याजयित्वा गयायां
गताः शासितं गौड़राज्येश्वराज्ञम् ।
ततस्तेऽमी ते द्विजा भासयन्तः
श्रुतिं व्याहृतिं भारतीं पाठयन्तः ॥
ततो हस्तदूर्व्वाक्षताः पञ्चगोत्रा
नृपञ्चाशिषं कर्त्तुमेव प्रसक्ताः ।
अमी पञ्च मध्याह्नमार्त्तण्डतुल्या
द्विजाः शासिताश्चाः परश्चेयसञ्च" ॥ * ॥

अथैषां वेशं दृष्ट्वा राज्ञोऽवज्ञा तेषां शुष्ककाष्ठे आशिषो निक्षेपश्च । "दृष्ट्वैवं वेशमेषामवनिपतिरसौ व्याकुलितो द्विजानां नैराशायं न कृत्वा क्षणमपि यदौ गन्तुकामाः पुनस्ते । बुद्धा भूपालबुद्धिं क्षणमपि च बुधाः शुष्ककाष्ठाशिषस्ते तत्कालात् प्राप्य दूर्व्वादलमपि स बभौ शुष्ककाष्ठः सुकाष्ठः" ॥ * ॥ अथ राज्ञा ब्राह्मणानां प्रश्नान्तरं गोत्रनामप्रश्नश्च ।

"सविस्मया वै गलबद्धवस्त्रा
भूपादपस्ते चरणारविन्दम् ।
पवित्रकीर्त्तिं भुवि भूसुराणां
श्रुत्वा च पेतुः सकलाः प्रणम्य ॥
क्षमध्वमस्माकमुपेक्षितवादं
मूढात्मनाञ्चापराधं हि विप्राः ।
भो ब्रूत विप्राः किमु नाम गोत्रं
ततश्च सर्व्वे गदितुं प्रवृत्ताः" ॥ * ॥

अथ पञ्चब्राह्मणानां परिचयः ।

"अभूदन्वयवंशोद्भवो भट्टनारायणोऽयञ्च शाण्डिल्यगोत्रे गरीयान् । तपस्वान् यशस्वान् दयावान् सुविद्वान् विपश्चाग्निवास्यां सभायां विभाति ॥ श्रुतितत्त्वतदर्थविचारकरोऽवनिपालक काश्यपगोत्रवरः । क्षुदक्षसम किल दक्षमहाशयो नाम इति भुवि भाति यतिः ॥ समस्तशास्त्रपण्डितस्वधागतप्रखण्डितः प्रचण्डसर्व्ववैरिदर्पगर्व्वखर्व्वकारकः । सावर्णगोत्रसम्भवोऽत्र भाति वेदगर्भकः छान्दडः प्रभाति भूप वात्स्यगोत्रसम्भवः ॥ यशःसुधाकरोत्पलपङ्क्तिसम्पूर्णीवितानगाम्बुजे महातपस्तपोवशीकृतेन्द्रियः ॥ अयं श्रीहर्षोऽग्निशं श्रीहर्षो महर्षिर्यथास्यां तपोभिः प्रभाति । क्षितीन्द्र! क्षितौ यो भरद्वाजगोत्रेश्वरो विप्रवर्य्यः प्रतापारिशौर्य्यः" ॥ * ॥

अथ शूद्रपरिचयप्रश्नः ।

"के यूयं नाम किं वा कथयत कृतिनः स्वागताः कापि देशात्? कोलाञ्चात् पञ्चशूद्रा वयमपि नृपते! किङ्करा भूसुराणाम् । धन्या यूयं पृथिव्यां परिचयमखिलं ब्रूत भो विप्रभक्ताः श्रुत्वोचुर्व्विप्रवर्य्याः सकलपरिचयं भूपतेरन्ति चैषाम् ॥ * ॥

अथ पञ्चशूद्राणां परिचयः ।

"सुकृतालिकृताम्बर एष कृती
क्षितिदेवपदाम्बुजचारतिः ।
मकरन्द इति प्रतिभाति यतिर्हि
र्द्विजवन्धुकुलोद्भवभक्तगतिः ॥

स च घोषकुलाम्बुजभानुरयं
पृथिमेन्दुयशाःसुरलोकवशाः ।
सततं सुखदो सुमतिश्च सुधीः
शरदिन्दुपयोऽम्बुधिकुन्दयशाः ॥
वसुधाधिपचक्रवर्त्तिनो
वसुतुल्या वसुवंशसम्भवाः ।
वसुधाविदिता गुणार्णवे-
र्नियतं ते जयिनो भवन्तु नः ॥
दशरथो विदितो जगतीतले
दशरथप्रथितः प्रथमः कुले ।
दशदिशां जयिना यशसा जयी
विजयते विभवैः कुलसागरे ॥
यशस्विनां यशोधरः सदा हि सर्व्वसादरः
प्रसन्नसत्त्वमस्तकःशरत्सुधांशुवद्यशः ।
प्रतापतापनोत्पद्विषाक्षियोषिदाक्षिको
विभाति मित्रवंशसिन्धुकालिदासचन्द्रकः ॥
द्विजाङ्घ्रिपालनार्थकोऽप्यसौ च सर्व्वसेवकः ।
कुलाम्बुजप्रकाशको यथान्धकारदीपकः ॥
अयं गुहकुलोद्भवो दशरथाभिधानो महान्
कुलाम्बुजमधुव्रतो विविधपुण्यपुञ्जान्वितः ।
निशम्य गुहभाषितं सकलसभ्यहास्यं व्यभूत्
स वङ्गगमनोद्यतो विविधमानभङ्गो यतः ॥
अयञ्च पुरुषोत्तमः कुलभदद्यगण्यः कृती
सुदत्तकुलसम्भवो निखिलशास्त्रविद्योत्तमः ।
विलोकितुमिहागतो द्विजवरैश्च राज्यं प्रभो!
चकार नृपतिः स तं विनयहीनतो निष्कुलम्" ॥*॥

अथाष्टौ सिद्धमौलिकाः ।

"गौडेऽष्टौ कीर्त्तिमन्तश्चिरवसतिकृता मौलिका ये हि सिद्धास्ते दत्ताः सेनदासाः करगुहसहिताः पालिताः सिंहदेवाः । ये वाणाद्याभिमुख्याः स्थितिविनयजुषः सम्प्रतिस्ते द्विपूर्व्वा छोड़ाद्या वीक्ष्य राज्ञा चरणगुणयुता मौलिकत्वेन साध्याः" ॥*॥

अथ द्विसप्ततिः माध्यमौलिकाः ।

"छोड़ः स्वर भर धरणीवान आइच सोमः पै सुर सामः । भञ्जो विन्दो गुह बल लोधः शर्म्मा वर्म्मा कुड भुड चन्द्रः ॥ रुद्रो रक्षित राजादित्यो विष्णुर्नागः खिल पिल गुहः । इन्द्रो गुप्तः पालो भद्र ओमस्वाङ्कुर बन्धुर नाथः ॥ शांइ हैशश्च मनो गणो राहा राणा राङ्कत साना दाहा दाना गण उपनाना । खामः सोमो धर वैश्यो वीदस्तेजस्वार्णव आशः ॥ शक्तिर्भूतो ब्रह्मः शानः क्षेमो हेमो बर्द्धन रङ्गः । गुइः कीर्त्तिर्यशः कुण्डुर्नन्दी शीलो धनुर्गुणः ॥ * ॥ इति दक्षिणराढ़ीयघटककारिका ॥ * ॥ * ॥ * ॥

अथ वङ्गजकुलाचार्य्यकारिका लिख्यन्ते ।

अथ शूद्रोत्पत्तिः ।

तथा चाग्निपुराणोक्तजातिमालायाम् ।

"आदौ प्रजापतेर्जाता मुखाद्विप्राः सदारकाः ।
बाहोश्च क्षत्रिया जाता उर्व्वोर्वैश्या विजज्ञिरे ॥
पादाच्छूद्रश्च सम्भूतस्त्रिवर्णस्य च सेवकः ।
भीमनामा सुतस्तस्य प्रदीपस्तस्य पुत्रकः ॥
कायस्थस्तस्य पुत्रोऽभूद्बभूव लिपिकारकः ।

कायस्थस्य त्रयः पुत्राः विख्याता जगतीतले ॥
चित्रगुप्तश्चित्रसेनो विचित्रश्च तथैव च ।
चित्रगुप्तो गतः स्वर्गे विचित्रो नागसन्निधौ ॥
चित्रसेनः पृथिव्यां वै इति शूद्रः प्रचक्षते" ॥ * ॥

अथ चित्रसेनादिसुताः ।

"वसुर्घोषो गुहो मित्रो दत्तः करण एव च ।
मृत्युञ्जयश्च सप्तैते चित्रसेनसुता भुवि ॥
करणस्य सुता जाता नागो नाथश्च दासकः ।
मृत्युञ्जयतनूद्भूता देवः सेनश्च पालितः ॥
सिंहश्चैव तथा ख्यातश्चैते पद्धतिकारकाः ।
एते पद्धतिकाराश्च मुनिभिः कथिताः पुरा" ॥ * ॥

अथ द्वादशशूद्रवंशजाः ।

"वसुर्घोषो गुहो मित्रो दत्तो नागश्च नाथकः ।
दासो देवस्तथा सेनः पालितः सिंह एव च ॥
एते द्वादशनामानः प्रसिद्धाः शूद्रवंशजाः" ॥ * ॥

अथ सप्ताशीतिः पद्धतिकाराः ।

"मृत्युञ्जयवंशभूतो नित्यानन्दो नृपेश्वरः ।
तस्यापि वंशसंजाताः सप्ताशीतिः प्रकीर्त्तिताः ॥
तेऽपि पद्धतिकाराश्च मुनिभिः कथिताः पुरा" ॥*॥

तेषां नामानि ।

करो भद्रो धरो नन्दी पालश्चाङ्कुरदामकः ।
नागो धरणिहोड़ौ च वानश्चाइचसोमकौ ॥
पै सुरः शोनकश्चैव भञ्जो विन्दुर्गुहस्तथा ।
बलश्च लोदकश्चैव शर्म्मा वर्म्मा च भूमिकः ॥
कुडश्च रुद्रकश्चैव चन्द्रो रक्षितराजकौ ।
आदित्यविष्णुगुप्ताश्च खिलश्च पीलकस्तथा ॥
चाम्पिर्हैशश्च बन्धुश्च शाम्भिश्च सुमनुस्तथा ।
गणकौ राङ्कश्चैव राणाराङ्कुतदाहकाः ॥
दाना गणश्च मानाश्च खामापक्षेमधारकाः ।
वैतोधवेदकाश्चैन्दश्चाणश्चावशक्तिकः ॥
भूतो ब्रह्मः संज्ञः सोमो बर्द्धनो हेमरङ्ककौ ।
भूम्भिः कीर्त्तिर्यशः कुण्डः शीलश्चैव धनुर्गुणः ॥
दौड़िमनोरितिश्चैव चाकिश्च नन्दनस्तथा ।
श्यामश्चाढ्यश्च पूम्भिश्च तेजको नाद एव च ॥
रोङ्क्रोमश्च हायिश्च ढोलश्च दूतकस्तथा ।
एते पद्धतिकाराश्च सप्ताशीतिः प्रकीर्त्तिताः" ॥

एताः सप्ताशीतिपद्धतयः द्वादशशूद्रपद्धतयश्च मिलित्वा नवाधिकनवतिपद्धतयो भवन्ति ॥ एतेषां पुरोहितगोत्रप्रवरेण गोत्रप्रवरत्वं मुनिभिरुक्तम् ॥*॥

अथ कान्यकुब्जात् पञ्चानां विप्राणां शूद्राणाञ्चागमनमाह देवीवरः ।

"अम्बष्ठकुलसम्भूत आदिशूरो नृपेश्वरः ।
राढ़गौड़वरेन्द्राश्च वङ्गदेशस्तथैव च ॥
एतेषां नृपतिश्चैव सर्व्वभूमीश्वरो यथा ।
अमात्यबान्धवैश्चैव मन्त्रिभिर्द्विजवन्दकैः ॥
एतैः सह महीपाल एकदा स निजालये ।
उपविष्टो द्विजान् प्रष्टुं धर्म्मशास्त्रपरायणः ॥
केन यज्ञेन भगवत्प्रीतिर्भवति निश्चितम् ।
तत् सर्व्वं श्रोतुमिच्छामि कथयध्वं द्विजोत्तमाः ॥
इति श्रुत्वा द्विजाः सर्व्वे खर्व्वीकृतकलेवराः ।
कथयन्ति नृपाग्रे तु सर्व्वे विकृतमानसाः ॥
केन केन विधानेन यज्ञो वा क्रियते बुधैः ।

वयं सर्व्वे न जानीमो विधानं कीदृशं कृतेः ॥
इति तेषां वचः श्रुत्वा चिन्तायुक्तो महीपतिः ।
किं करोमि क्व गच्छामि विलपाय पुनः पुनः ॥
कान्यकुब्जात् समानीतान् दूतेन द्विजपञ्चकान् ।
वेदशास्त्रेष्ववगतान् सर्व्वास्त्रे च विशारदान् ॥
गोयानारोहितान् विप्रान् खड्गचर्म्मादिभिर्युतान् ।
पत्तिवेशान् समालोक्य विषादो जायते हृदि ॥
अश्रद्धा जायते राज्ञ इति ख्यात्वा द्विजोत्तमाः ।
आशीर्व्वादार्थनिर्म्माल्यं मल्लकाष्ठोपरि स्थितम् ॥
तदा काष्ठं सजीवं स्यात् फलपल्लवसंयुतम् ।
इति दृष्ट्वा नृपश्रेष्ठिन् कम्पान्वितकलेवरः ॥
स्तोत्रञ्च बहुधा तेषामकरोत् स नृपोत्तमः ।
आसनं पाद्यमानीय ददौ विनयपूर्व्वकम् ।
उपविष्टा द्विजाः पञ्च तथा च शूद्रपञ्चकाः ॥
राजन्ते कुशलं सर्व्वं प्रोचुस्तेष्ववदत् स तान् ।
अद्य मे सफलं जन्म जीवितञ्च सुजीवितम् ॥
पूतञ्च भवनं जातं युष्माकं गमनं यतः ।
एवञ्च क्रियते स्तोत्रं पृष्टान्यत् शूद्रपञ्चके ॥
युष्माकं गोत्रमाख्या च किमर्थं वा द्विजैः सह ।
तत् सर्व्वं श्रोतुमिच्छामि ब्रूत भोः शूद्रपुङ्गवाः ॥
इति राज्ञो वचः श्रुत्वा कथयन् नामगोत्रके ।
काश्यपे चैव गोत्रे च दत्तनामा महामतिः ॥
तस्य दासो गौतमस्य गोत्रे दशरथो वसुः ।
शाण्डिल्यगोत्रे सम्भूतो भट्टनारायणः कृती ॥
मौकालिनञ्च दासोऽयं घोषः श्रीमकरन्दकः ।
भरद्वाजेषु विख्यातः श्रीहर्षो मुनिसत्तमः ॥
दासस्तस्य विराटाख्यो गुहकः काश्यपः स्मृतः ।
सावर्णगोत्रनिर्द्दिष्टो वेदगर्भमुनिस्त्वयम् ॥
तस्य दासो मित्रवंशो विश्वामित्रस्य गोत्रकः ।
कालिदास इति ख्यातः शूद्रवंशसमुद्भवः ॥
वात्स्यगोत्रेषु सम्भूतश्छान्दडश्चेति संज्ञितः ।
मौद्गल्यगोत्रजो दत्तः पुरुषोत्तमसंज्ञकः ॥
एतेषां रक्षणार्थाय आगतोऽस्मि तवालये ।
इति श्रुत्वा नृपस्तत्र मनसा हर्षमागतः ॥
विधानेनैव निर्व्वर्त्त्य क्रतुञ्च धर्म्मसंस्थितम् ।
ग्रामं सुवर्णं गाश्चैव वस्त्राणि विविधानि च ॥
दक्षिणार्थं द्विजातिभ्यः प्रददौ स नृपोत्तमः ।
अथ देशे कृतावासाः सर्व्वे च द्विजशूद्रकाः ॥
बहुबच्च प्रजा जाता नानादेशनिवासिनः" ॥ * ॥
अथ बङ्गालक्षत्रश्रेणिविभागः ।
"अथ बल्लालभूपश्च अम्बष्ठकुलनन्दनः ।
कुरुतेऽतिप्रयत्नेन कुलशास्त्रनिरूपणम् ॥
आदिशूरानीतविप्रान् शूद्रांश्चैव तथापरान् ।
एतेषां सन्ततीः सर्व्वा आनयत् स निजालये ॥
यत्र यत्र स्थिता विप्रास्तत्र ग्रामे निरोपिताः ।
श्रेणीद्वयन्तु निर्णीतं राढ़ीवारेन्द्रसंज्ञितम् ॥
तथैव द्विविधं प्रोक्तं कुलञ्च सद्विजोत्तमे ।
शूद्रस्याथ चतस्रश्च नृपेण श्रेणयः कृताः ॥
वङ्गदक्षिणराढ़ौ च वङ्गवारेन्द्रकौ तथा ।
इति चतस्रः संज्ञाः शास्त्रसद्देशनिवासनात् ॥
कुलं चतुर्व्विधं तेषां श्रेणीश्रेणीविशेषतः" ॥ * ॥
अथ वङ्गजकायस्थश्रेणिनिर्णयः ।
"तत्र वङ्गेषु यैः शूद्रैर्निवासः क्रियतेऽधुना ।
तेषां निर्णयमावक्ष्ये कुलञ्चैव विशेषतः ॥
वसुवंशे च मुख्यौ द्वौ नाम्ना लक्षणपूषणौ ।
घोषेषु च समाख्यातश्चतुर्भुजमहाकृती ॥
गुहे दशरथश्चैव मित्रे तारापतिस्तथा ।
दत्ते नारायणश्चैव एते च वङ्गजाः स्मृताः" ॥
अपरन्तु ।
"नागे दशरथश्चैव महानन्दस्तु नायकः ।
चन्द्रशेखरदासस्तु सेने गङ्गाधरस्तथा ॥
दामोदरकरः ख्यातो दामस्तथापतिस्तथा ।
पालिते जनसंज्ञः स्यात् चन्द्रे नारायणाख्यकः ॥
पाले श्रावः समाख्यातो राहावंशे च कश्यकः ।
भद्रे दिगम्बरश्चैव धरे तु व्याससंज्ञकः ॥
प्रभाकरस्तु नन्दो स्यात् केशवो देववंशजः ।
श्रीपतिरिति ख्यातः कुण्डवंशे प्रकीर्त्तितः ॥
सोमे वंशधरश्चैव सिंहे रत्नाकरस्तथा ।
नारायणः समाख्यातो रक्षिते च तथापरे ॥
वेदगर्भाङ्कुरश्चैव दैत्यारिर्विष्णुसंज्ञकः ।
आढ्ये त्रिलोचनः ख्यातो नन्दने च उमापतिः ॥
एते वङ्गजनिर्द्दिष्टा बल्लालेन महात्मना ।
अन्येऽपि शूद्रा विख्यातास्तत्र देशनिवासिनः ॥
ते वङ्गजाः समाख्याताः करणेषु प्रतिष्ठिताः" ॥ * ॥
अथ वङ्गजकुलीनादिनिरूपणम् ।
"कुलीन इति संज्ञा स्यात् मध्यन्यञ्च तथापरः ।
महापात्रोऽचलश्चैव इति संज्ञाचतुष्टयम्" ॥
तद्यथा ।
"वसुर्घोषो गुहो मित्रो दत्तो नागश्च नायकः ।
दासः सेनः करो दामः पालितश्चन्द्रपालकौ ॥
राहो भद्रो धरो नन्दो देवः कुण्डश्च सोमकः ।
रक्षिताङ्कुरसिंहाश्च विष्णुराढ्यश्च नन्दनः ॥
चत्वारोऽग्रास्त्रयो मध्या महापात्राः परे तथा ।
सप्तविंशतिः शूद्राणां बल्लालेन प्रशंसिताः" ॥ * ॥
इति कुलीनमध्यन्यमहापात्राः । अथचलान् वक्ष्यामि ।
"होड़श्च आरकश्चैव धरणीवान एव च ।
आइचः पैसुरश्चैव शानश्च भञ्जविन्दकौ ॥
गुहश्च वललोधौ च शर्म्मा वर्म्मा च भूमिकः ।
ऊइश्च रहकश्चैव रायादित्यौ च पीलकः ॥
सिंहश्च गुप्तचाकी च वन्धुश्च शाश्विसंज्ञकः ।
हेशश्च सुमसुर्गाढ्यो रामाराङ्कतदाकाः ॥
दानागणायसमानाख्याः खामः क्षेमश्च तोषकः ।
वैश्यापि धरवेदौ च भूतार्णवकअस्त्रकाः ॥
गन्दश्च शक्तिसकौ च क्षेमाद्यौ वर्द्धनस्तथा ।
हेमश्च वन्धकश्चैव भूञ्जिः कीर्त्तिश्च श्रीककः ॥
धनुर्गुणो यशश्चैव मनोरीतिश्च दाड़िकः ।
चाकिश्च श्याम पूष्णिश्च गडकौ नादकस्तथा ॥
रोहश्च होमकश्चैव आशकश्च तथैव च ।
ढोलश्च दूलकश्चेति द्विसप्तत्यचलाः स्मृताः" ॥
एतेषां प्रतिपुरुषकमेण कुलार्णवात् महापात्रभावो जायते ॥ * ॥ इति वङ्गजघटकरामानन्दशर्म्मकृतकुलदीपिका ॥

कायस्था, स्त्री, (कायस्तिष्ठत्यनया । काय + स्था + घञर्थे कः ।) हरीतकी । इति मेदिनी ॥ धात्री-
फलम् । इति जटाधरः ॥ काकोली । इत्यमरटीकायां भरतः ॥ एलादयम् । तुलसी । इति राजनिर्घण्टः ॥ कायस्थस्त्रीजातिः । कायस्थपत्नी कायस्थी ॥

कायिकः, त्रि, (कायेन निष्पादितः निष्पन्नो वा कायेन निर्वृत्तः इति वा । काय + ठञ् ।) शारीरिकः । कायनिष्पन्नः । यथा ।
"अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम्" ॥
इति तिथ्यादितत्त्वम् ॥ (स्त्री, शरीरसम्बन्धिनी चक्रवृद्धिः । यथा मनुः ८ । १५३ ।
"चक्रवृद्धिः कालवृद्धिः कारिता कायिका च या" ॥)

कायिकावृद्धिः, स्त्री, (गोवलीवर्द्दादीनां कायपरिश्रमसाध्या या वृद्धिः ।) गवादिवलीवर्द्दादिकर्म्मयुता वृद्धिः । यथा ।
"दोह्यवाह्यकर्म्मयुता कायिका समुदाहृता" ॥
इति व्यासः ॥ मूलधनाविरोधिनी प्रत्यब्ददेयपणमदङ्गांदिरूपा वृद्धिः । यथा ।
"कायाविरोधिनी शश्वत् पणार्द्धाद्या तु कायिका" ।
इति नारदः ॥ कुलायुधस्तु पणार्द्धाद्या इत्यत्र पणपादेति पठित्वा पणस्य मूलधनस्य यावदवस्थानं तावत् शश्वत् वर्षसहस्रमपि उत्तमर्णेन या वाह्यते प्राप्यते सा कायिकेति व्याख्यातवान् तत्राद्या भोगलाभान्तर्गता अपरा च तद्भिन्ना इति मिश्राः । इति विवादार्णवसेतुः ॥

कारः, पुं, (कृ हिंसायां + भावे घञ् ।) वधः । निश्चयः । (धातूनामनेकार्थत्वात् अत्र निश्चयार्थेऽपि ।) कं सुखं आच्छादयतेऽनेन । क + आ + छद + करणे + घञ् ।) बलिः । यत्नः । यतिः । (कं सुखं निर्वृतिं आच्छादयतीति । क + आ + कर्त्तरि अण् ।) पतिः । इति शब्दरत्नावली ॥ (कं निष्यन्दजलमाच्छादयतीति ।) तुषारशैलः । इति मेदिनीकरहेमचन्द्रौ ॥ कर्म्मोपपदे कर्तृवाचकः । यथा कर्म्मकारः स्वर्णकार इत्यादि । इति व्याकरणम् ॥ क्रिया । यथा करणं कारः क्रिया । इति रामतर्कवागीशः ॥ (अक्षरान्ते तदक्षरवाचकः । यथा ककारः । मकारः । इत्यादिः ॥)

कारकं, क्ली, (क्रियाभिरन्वितं इति । भाष्यमते तु करोति क्रियां निर्वर्त्तयतीति । कृ + कर्त्तरि ण्वुल् ।) क्रियानिमित्तं लोकतः सिद्धम् । इति दुर्गसिंहः ॥ फणिभाष्यमते पुं, यथा भवितुः स प्रयोजकः कारकः । तत्तु षड्विधम् । कर्म्म १ यथा रामं नमति । करणम् २ यथा नेत्रैः शिवो दृष्टः । कर्त्ता ३ यथा जनैः शिवो दृष्टः । सम्प्रदानम् ४ यथा हरिः भक्ताः सुखं ददातु । अपादानम् ५ यथा विभीषणः पदाद्भ्रष्टः । अधिकरणम् ६ यथा देवे शरदि गोविन्दः । इति वोपदेवः ॥ वर्षोपलोद्भवं जलम् । इति राजनिर्घण्टः ॥

कारकः, त्रि, (करोति कर्म्मादिकम् । कृ + "ण्वुल्तृचौ" । ३ । १ । १३३ । इति ण्वुल् ।) कर्त्ता । इति मेदिनी ॥ (यथा मनुः ७ । २०४ ।
"आदानमप्रियकरं दानञ्च प्रियकारकम्" ॥)

कारकुक्षीयः, पुं, (कारकुक्षि + छः ।) शाल्वदेशः ।

अन्यग्रहसुतानां धातुमतां घातयतीति" ॥ * ॥

अथ भवकेतोर्लक्षणमाह ।

"भवकेतुरेकरात्रं दृश्यः प्राक् सूक्ष्मतारकः स्निग्धः । हरिलाङ्गूलोपमया प्रदक्षिणावर्त्तया शिखया ॥ यावदेव मुहूर्त्तान् दर्शनमायाति निर्द्दिशेन्मासान् । तावदतुलं सुभिक्षं रूक्षे प्राणान्तिकान् रोगान्" ॥ भवकेतुः पूर्व्वस्यां दिशि एकां निशां दृश्यः सूक्ष्मोऽल्पः तारको यस्य स्निग्धो निर्म्मलदेहः शिखयोपलक्षितः । कीदृश्या हरिः सिंहस्तस्य लाङ्गूलं पुच्छं तदुपमया तदाकारया प्रदक्षिणेनावर्त्तो यस्याः तथाभूतया स च यावत्संख्यान् क्षणान् दृश्यते तावन्मासान् समं सुभिक्षं निर्द्दिशेत् यदि स्निग्धः । रूक्षे तु पुनः प्राणान्तिकान् रोगान् वदेत् । तथा च पराशरः । "अथ जलकेतोः कर्म्मसमाप्ताः धूम्रादयः शीतांशोः अष्टौ प्रादुर्भवन्ति । तत्र भवोदशचतुर्द्दशाष्टादशवर्षान्तात् दृश्यते । सुभिक्षा क्षेम्या विपर्य्यया विपरीताः सुजनन्मनाश्च वधाय तेषामष्टानां कर्म्मण्यतीते भवकेतुर्दृश्यते । पूर्व्वेणैकरात्रं यावत् कृत्तिकानामन्तरतो वा तत्प्रमाणया स्निग्धया श्यामया सिंहलाङ्गूलसंस्थानया प्रदक्षिणावर्त्तया शिखयोदितः । स यावन्मुहूर्त्तान् दृश्यते तावन्मासान् भवत्यतीव सुभिक्षाय ॥ रूक्षः प्राणहराणाञ्च रोगाणां प्रादुर्भावायेति" ॥ * ॥

अथ पद्मकेतोर्लक्षणमाह ।

"अपरेण पद्मकेतुर्म्मृणालगौरो भवेन्निशामेकाम् ।
सप्त करोति सुभिक्षं वर्षाण्यतिहर्षयुक्तानि" ॥

पद्मकेतुः पश्चिमायां दिशि रात्रिमेकां दृश्यते कीदृशः मृणालवत् गौरः श्वेत इत्यर्थः । दृष्टः सप्तवर्षाणि अतिहर्षयुक्तानि सुभिक्षं करोति । तथा च पराशरः ।

"सप्तवर्षाण्यनुच्छिन्नं हर्षमावहति जगतः" ॥ * ॥

अथावर्त्तकेतोर्लक्षणमाह ।

"आवर्त्त इति निशार्द्धेऽसव्यशिखोऽरुणनिभोऽपरे स्निग्धः । यावत्क्षणान् स दृश्यस्तावन्मासान् सुभिक्षकरः" ॥ निशार्द्धे पश्चिमायां दिशि दक्षिणदिगाश्रितशिखः स्निग्धो निर्म्मलमूर्त्तिर्दृश्यते स तु यावत्संख्यान् मुहूर्त्तान् दृश्यते तावदेव मासान् सुभिक्षं करोति ।

तथा च पराशरः ।

"अथावर्त्तकेतुः श्वेतकेतोः कर्म्मण्यतीतेऽपरेणार्द्धरात्रेऽस्तोदिताबवाभया प्रदक्षिणेन ताम्रया शिखयोदितः । स यावन्मुहूर्त्तान् दृश्यते तावन्मासान् अतीव सुभिक्षं नित्यकोत्सवं जगत्" ॥ * ॥

अथ संवर्त्तकेतोर्लक्षणमाह ।

"पश्चात् सन्ध्याकाले संवर्त्तो नाम धूम्रताम्रशिखः ।
नभस्त्रिभागमाक्रम्य शूलाग्रसंस्थितो रौद्रः" ॥

यावत एव मुहूर्त्तान् दृश्यो वर्षाणि हन्ति तावन्ति । भूपांश्च शस्त्रनिपातैरुदयर्क्षं चापि पीडयति" ॥ पश्चादिति । पश्चिमायां दिशि यावतो मुहूर्त्तान् दृश्यस्तावन्ति तत्संख्यानि वर्षाणि नाशयति तथा नृपान् संग्रामैर्हन्ति । तथोदयर्क्षं यस्मिन्नक्षत्रे उदितो दृश्यते तच्च पीडयति । तथा च पराशरः । "अथ संवर्त्तको वर्षशतमष्टोत्तरं प्रोष्य पश्चिमेनास्तं गते सवितरि सन्ध्यायां दृश्यते तन्वीं ताम्ररूक्षां शूलाग्रां धूमं विमुञ्चन्तीं दारुणां शिखां कृत्वा नभस्त्रिभागमाक्रम्य यावन्मुहूर्त्तान् निशि तिष्ठति तावद्वर्षाणि घ्नन्ति परस्परं शस्त्रौघमपि पार्थिवाः । यानि नक्षत्राणि समाश्रयति यत्र वोदेति तानि दारुणतरं पीडयति तदाश्रितांश्च देशानिति" ।

तथा च गर्गः ।

"येषां नक्षत्रविषये रूक्षः स ज्वाललोहितः ।
दृश्यते वक्रमूर्त्तिश्च तेषां विद्यात् महाभयम् ॥
अवर्षं शस्त्रपातञ्च कोपं दुर्भिक्षमेव च ।
कुर्य्यान्नृपतिपीडाञ्च स्वचक्रपरचक्रतः ॥
यत्र तिष्ठति नक्षत्रे प्रवासं यत्र गच्छति ।
धूपयेद्वा स्पृशेद्वापि हन्याद्देशांस्तथाश्रयान् ॥
यस्याभिषेकनक्षत्रं जन्मभं कर्म्मभं तथा ।
देशर्क्षं पीडयेद्वापि स शान्तिपरमो भवेत् ॥
स्निग्धः प्रसन्नो विमलः प्रदक्षिणशिखस्तथा ।
दृश्यते येषु देशेषु शिवं तेषु विनिर्द्दिशेत्" ॥

अथ शुभान् केतून् वर्णयित्वाशुभानां नक्षत्रस्पर्शनाधूपनादुक्तफलं वक्ष्यामीत्याह ।

"ये शस्तास्तान् हित्वा केतुभिराधूपितेऽथवा स्पृष्टे ।
नक्षत्रे भवति वधो येषां राज्ञां प्रवक्ष्ये तान्" ॥

ये केतवः शस्ताः प्रशस्तफलास्तान् त्यक्त्वान्यैः केतुभिः नक्षत्रे धूपिते अथवा स्पृष्टे येषां नृपाणां वधो मरणं भवति तान् नृपान् कथयिष्ये तांश्चाधुनाह । "अश्विन्यामश्मकपं भरणीषु किरातपार्थिवं हन्यात् । बहुलासु कलिङ्गेशं रोहिण्यां शूरसेनापतिम्" ॥ अश्विन्यामभिधूपितायां स्पृष्टायां वा केतुना अश्मकानां जनानामधिपतिं नाशयेत् एवं सर्व्वत्र । अन्येष्वाह । "उशीनरमपि भाग्ये उज्जयनीपमार्य्यम्णे । सावित्रे दण्डकाधिपतिं भौजङ्गे असिकेशम् । मघायां अङ्गाधिपं पूर्व्वफल्गुन्यां पाण्ड्यनाथम्" ॥ भाग्ये पूर्व्वफल्गुन्यां उशीनरम् । आर्य्यम्णे उत्तरफल्गुन्यां उज्जयनीपतिम् । सावित्रे हस्तायां दण्डकारण्यनाथम् । भौजङ्गे अश्लेषायां असिका जनास्तेषामीशम् ।

अन्येष्वाह ।

"चित्रासु कुरुक्षेत्राधिपस्य मरणं समादिशेत् ।
वाचा काश्मीरकाम्बोजौ नृपती प्राभञ्जने न स्तः" ॥

चित्रासु केतुनाभिधूपितासु स्पृष्टासु च कुरुक्षेत्राधिपस्य मरणं वधं केतुपचारज्ञः समादिशेत् । प्राभञ्जने स्वात्यां काश्मीरकाम्बोजाधिपौ न स्तः न भवतः । अन्येष्वाह । "इक्ष्वाकुरलकनाथश्च हन्यते यदि भवेद्विशाखासु । मैत्रे पुण्ड्राधिपतिं ज्येष्ठासु च सार्व्वभौमकान्यकुब्जाधिपवधः" ॥ विशाखासु यदि केतुपचारो भवेत् तदा इक्ष्वाकुनाथोऽलकनाथश्च हन्यते । इक्ष्वाकवो जनाः । अलका नगरी । अनुराधायां पुण्ड्राधिपतिं हन्यात् । ज्येष्ठासु च सार्व्वभौमस्य राज्ञो वधः कान्यकुब्जाधिपस्य च वधः । अन्येष्वाह । "मूले नृपमद्रकपती जलदेवे काशिपो मरणमेति । यौधेयकार्ज्जुनायनशिविचैद्यान् वैश्वदेवे च" ॥ मूले केतुनाभिधूपिते स्पृष्टे वा नृपतिं मद्रकपतिं च हन्ति । जलदेवे पूर्व्वाषाढायां काशिपतिर्म्मरणमेति । वैश्वदेवे उत्तराषाढायां यौधेयका आर्ज्जुनायनः शिविः चैद्यः एतान्नृपतीन् हन्ति । अथान्येष्वप्याह । "हन्यात् कैकयनाथं पाञ्चनदं सिंहलाधिपं वङ्गपम् । नैमिषनृपं किरातपं श्रवणादिषु षट्सु षड़िमान् क्रमशः" ॥ षट्सु श्रवणादिषु स्थितेषु षड़िमान्नृपान् क्रमशः क्रमेण हन्यात् । तद्यथा ।

श्रवणे हते कैकयनाथम् । धनिष्ठायां पञ्चनदाधिपतिम् । शतभिषायां सिंहलाधिपतिम् । प्राग्भाद्रपदायां वङ्गाधिपतिम् । उत्तरासु नैमिषनृपम् । रेवत्यां किराताधिपं हन्यात् ॥ * ॥

अथ केतोर्व्विशेषमाह ।

"उल्काभिताड़ितशिखः शिखी शिवः शिवतरोऽभिदृष्टः । अशुभः स एव चोलावगाणसितहूणचीनानाम्" ॥ यः शिखी केतुः उल्काभिमुखेन ताड़िता हता शिखा चूड़ा यस्य स शिवः श्रेयस्करः योऽभिदृष्ट उदितमात्र एव दृष्टः स शिवतरः अतिशयेन शुभप्रदः केतुरेवं विधश्चोलानां वङ्गानां सितानां हूणानां चाशुभः । चीनाद्याः सर्व्व एव जनाः ॥ * ॥

अन्यद्विशेषमाह ।

"नम्रा यतः शिखिशिखाभिमुखा यतो वा-
यर्क्षं च संस्पृशति तत्कथितांश्च देशान् ।
दिव्यप्रभावनिहतान् स यथा गरुत्मान्
भुङ्क्ते ततो नरपतिः परभोगिभोगान्" ॥

यतो यस्यां दिशि शिखिनः शिखा केतुशिखा नम्रा वक्रा तत्र ये देशा यस्यां वा गन्तुं प्रवृत्ता अथ यदि यदृक्षं नक्षत्रं संस्पृशति तत्कथितांश्च देशान् यस्यां दिशि शिखा नम्रा तत्र च ये देशा वक्ष्यमाणास्तांस्तत्कथितान् नरपती राजा ततो भुङ्क्ते स्वीकरोति । कीदृशान् दिव्येनाप्रतिहतेन प्रभावेण पराक्रमेण निहतान् निर्ज्जितान् कीदृशान् परैरन्यैर्भोगिभिर्भुज्यन्ते भोगा ग्रामास्तान् कथं स राजा भुङ्क्ते यथा गरुत्मान् गरुड़ः दिव्यप्रभावनिहतान् परभोगिभोगान् भुङ्क्ते परा उत्कृष्टा ये भोगिनः सर्पास्तेषां भोगाः शरीराण्यङ्गानि च तान् यथा येन प्रकारेण तथा ।

तथा च पराशरः ।

"यस्यां दिशि समुत्तिष्ठेत् तां दिशं नाभियोजयेत् ।
यतः शिखा यतो धूमस्ततो यायान्नराधिपः ॥
प्रतिलोमो यतः केतुर्य्यया ध्यायति पार्थिवः ।
सामान्यवाहनबलन्नाशमधिगच्छति" ॥

इति भट्टोत्पलविरचितायां संहितावृत्तौ केतुचाराध्यायः ॥ * ॥

अन्यच्च ।

"अनभावभिरूपं वा ध्वजशस्त्रगृहोपमम् ।
तुरङ्गगजरूपादिनानारूपाणि केतवः ॥
शतमेकोत्तरं केचित् सहस्रमपरे विदुः ।

नानारूपमनेकञ्चाप्येकमेवाह नारदः ॥
दिव्या नक्षत्रगा भौमाः केतवस्त्रिविधा मताः ।
शुक्लो ह्रस्वतनुः स्निग्ध ऋजुश्चाचिरसंस्थितः ॥
उदितोऽप्यतिवृष्टिः स्यात् सुभिक्षसुखकृच्छिखी ।
विपरीतस्वरूपस्तु धूमकेतुर्न शोभनः ॥
इन्द्रायुधानुकारी च द्विचूडो वा त्रिचूडकः ।
श्वेतः शस्त्राकुलं कुर्य्याल्लोहितश्चापि तं भयम्॥
क्षुद्भयं पीतकः कुर्य्यात् कृष्णो रोगमथोल्बणम् ।
शस्त्राकारो विनाशाय सुखाय मुसलाकृतिः ॥
दीर्घः सूक्ष्मः सुखायैव ह्रस्वः स्थूलो विनाशकृत् ।
मणिवर्णसुवर्णाभ्यां किरणाभ्यां शिखान्विताः ॥
प्राक् पश्चिमदिशोर्दृश्या नृपघ्नाय तेऽर्कजाः ।
वह्निजाः शुक्लवर्णाश्च लाक्षाबन्धूकसन्निभाः ॥
आग्नेय्यां दिशि दृश्यन्ते ते च वह्निभयप्रदाः ।
कृष्णा वक्रशिखा रूक्षा मृत्युजाः पञ्चविंशतिः ॥
याम्यायां ते च दृश्यन्ते नृणां मरकसूचकाः ।
आदर्शवृत्ताकृतयो विशिखाः क्षितिसम्भवाः ॥
सांशवस्तैलतोयाभा ऐशान्यां क्षुद्भयप्रदाः ।
चन्द्रजा हिमकुन्देन्दुकुमुदाभाश्च तैलवत् ॥
जलाभाश्चोत्तरे दृश्याः केतवस्ते सुभिक्षदाः ।
त्रिवर्णस्त्रिशिखश्चैको ब्रह्मजोऽसौ युगान्तकृत् ॥
स चानियतदिक्संस्थो ब्रह्मदण्डः स उच्यते ।
अर्कजा वह्निजा याम्यास्त्रयस्ते तत्त्वसङ्ख्यया (२५) ॥
क्षितिजा जातिसङ्ख्याश्च(२२) त्रयोऽन्ये ब्रह्मजोऽप्ययं ।
एकोत्तरशतं ह्येते सहस्रमथ लक्षणैः ॥
शुक्राश्चतुरशीत्याख्या विपुलाः सिततारकाः ।
स्निग्धास्तीव्रफला ज्ञेयाः सप्रभा द्विशिखाः परे ॥
षष्टिः शनितनूद्भूतास्तेऽतिनष्टफलप्रदाः ।
सर्व्वेच कनकोद्दीप्ता विकचा नाम जीवजाः ॥
शितैकतारा विशिखाः पापा याम्याश्रितास्तु ते ।
नातिव्यक्ताः सूक्ष्मदीर्घाः शुक्ला बुधसमुद्भवाः ॥
पापदास्तस्कराख्यास्ते यथेष्टदिक्प्रभान्विताः ।
त्रिचूडतारा: क्षतजा नानारूपाः कुजात्मजाः ॥
कौङ्कुमाख्या हि ते सौम्य दिक्स्थाः पापफलप्रदाः ।
त्रिशिखाश्च त्रितारा रक्तलोहितरश्मयः ॥
लोहिताङ्गात्मजाः षष्टिः संग्रामभयकारकाः ।
तामसाः कीलकाख्याश्च राहुजाः सूर्य्यबिम्बगाः ॥
दृष्टाः शुभफलास्ते च चन्द्रस्थाः पापदायिनः ।
कबन्धशांत्वशक्राभाश्चन्द्रेऽर्केऽप्यशुभप्रदाः ॥
कृष्णाभाः कृष्णपर्य्यन्ताः संकुलाः कृष्णरश्मयः ।
राहुपुत्रास्त्रयस्त्रिंशत् केतवश्चातिदारुणाः ॥
यथार्कबिम्बे दृश्यन्ते व्यसनन्तन्महीपतेः ।
स्वचक्रं परचक्रेण पीड्यते क्षुद्भयान्वितम् ॥
धनोधनुःक्षेमरूपा नृपविप्लवयावहाः ।
ध्वाङ्क्षो वा कर्णशङ्कुर्व्वा कबन्धो वार्कमण्डले ॥
दृश्यते यत्र तत्रास्तु भूमिपालो विनश्यति ।
दण्डकीलकपीठास्तं दृश्यते सूर्य्यमण्डले ॥
दुर्भिक्षेतिभयव्याधिवह्निचौरादिपीडनम् ।
शृगालान् गर्दभानश्वान् यांश्चान्यान् मृगपक्षिणः ॥
आदित्यमण्डले दृष्ट्वा देशभङ्गं विनिर्दिशेत् ।
मण्डलाभ्यन्तरस्थैश्च कपोतैर्मृगपक्षिभिः॥
परचक्रागमो वाच्यः प्रजानाशस्तथैव च ।
यथार्कबिम्बकाच स्यान्नाशोऽन्यत्र प्रजाक्षयः ॥
एको दुर्भिक्षकृद्दाह्यान्नृपनाशभयप्रदः ॥
सितरक्तहरित्कृष्णैर्व्विद्धो द्विजन्मपादिहा ।
वह्निजा विश्वरूपाख्या ज्वालामालाकुलाः शतम् ॥
श्यामारुणा वितारश्च विकीर्णामरसन्निभाः ।
ताराघुञ्जनिभा रूक्षा वायुजाः सप्तसप्ततिः ॥
ब्रह्मजाश्चतुरस्रास्ते वेदाधिकशतद्वयम् ।
द्वात्रिंशदंशशुक्लाभाः कङ्काख्या वरुणोद्भवाः॥
प्रभाढ्याः शशिवत्ते च ज्ञेयास्तीव्रफलप्रदाः ।
विरूपताराश्चिन्ना वा शिखिनस्तेऽशुभप्रदाः ॥
सर्व्वदिक्प्रभवाः शुक्लाः केतवो भयदायिनः ।
एवं केतुसहस्रञ्च तद्विशेषश्च वक्ष्यते” ॥ * ॥
“उत्तरायतसुस्निग्धो महान् पश्चापरोदयी ।
करोति मरकं सद्यः सुभिक्षञ्च तथोत्तमम् ॥
रूक्षोऽस्थिकेतुः क्षुद्भीत्यै प्राच्यां स्निग्धोऽप्युपप्लवः ।
कपालकेतुर्य्यो दर्शे सधूम्रांशुशिखो भवेत् ॥
प्रागर्द्धचारी नभसः क्षुन्माराणृष्टिकारकः ।
प्रागग्निमार्गाच्छूलाग्रो रूक्षः श्यामलताम्रक ॥
त्रिभागचारी नभसो रौद्राख्यः पूर्व्ववत् फलम् ।
अपरस्यां चलकेतुः शिखया दक्षिणाग्रया ॥
अङ्गुलोच्छ्रायया गच्छेदुत्तराशां यथा यथा ।
तथा दैर्घ्यं समायाति मुनीन् संस्पृश्य सप्त च ॥
ध्रुवं प्रतिनिवृत्तोऽभिजितञ्च नभसोऽर्द्धकम् ।
गत्वाऽस्तं याति याम्येन स प्रयागकुलावधि ॥
अवन्तीं पुष्करारण्यं यावद्धन्यात्तथापरान् ।
देशान् क्वचित् क्वचिद्रोगदुर्भिक्षैः परिपीडितान् ॥
श्वेताख्यस्तु जटाकारो श्यामो व्योमत्रिभागगः ।
निवर्त्ततेऽपसव्येन त्रिभागी कुरुते प्रजाः ॥
आधूम्रशिखया दृश्यः कृत्तिकासंस्थितोऽपरः ।
रश्मिकेतुरिति ख्यातस्त्रिभागी कुरुते प्रजाः ॥
पश्चात् सन्ध्यासु सम्बर्त्तो धूमताम्रशिखो वियत् ।
त्र्यंशमाक्रम्य शूलाग्रावस्थितो रौद्रदर्शनः ॥
मुहूर्त्तान् यावतो दृश्यस्तावद्वर्षाणि हन्ति सः ।
भूपशस्त्रनिपाताद्यैरुदयर्क्षं निपीडयेत्” ॥ * ॥
“चैत्रवैशाखयोर्म्मध्ये कौबेरांस्तु विनिर्द्दिशेत् ।
उच्छ्रितैर्यूपवेदीभिरवाक्छ्रितैर्ध्वजतोरणैः ॥
हविर्धूमाकुला तत्र दृश्यते च वसुन्धरा ।
ज्यैष्ठे चैव तथाषाढे वायुपुत्रांश्च निर्द्दिशेत् ॥
वान्ति चैव तथा वाता महायुद्धं महाभयम् ।
श्रावणप्रौष्ठपदयोर्व्वारुणांस्तु विनिर्द्दिशेत् ॥
आरोहयन्ति ते मेघान् पूर्णां कुर्य्युर्व्वसुन्धराम् ।
धान्यं समार्घतां याति ईतयो न भवन्ति च ॥
आश्विने कार्त्तिके चैव सूर्य्यपुत्रान् विनिर्द्दिशेत् ।
ततो दहति तीक्ष्णांशुः सर्व्वाशानि दिवाकरः ॥
म्रियन्ते च तदा गावः श्वापदाश्च विशेषतः ।
मार्गशीर्षे च पौषे च वह्निपुत्रान् विनिर्द्दिशेत् ॥
शीघ्रं भवति दुर्भिक्षं हाहाभूतमचेतनम् ।
माघे च फाल्गुने चैव यमपुत्रान् विनिर्द्दिशेत् ॥
छर्द्दिर्ज्वरातिसारश्च ग्लानिश्चैवाक्षिवेदना ॥ * ॥
कृत्तिका रोहिणी सौम्यं पृथिव्या मध्यमुच्यते ॥
केतवो यत्र दृश्यन्ते आग्नेया दश पञ्च च ।
आग्नेयेषु च दृष्टेषु लोकानां संक्षयो भवेत् ॥
निर्व्वोद्विग्नाः प्रजाः सर्व्वा भवन्ति हि न संशयः ।
पुनर्व्वसुस्तथा पुष्यः पृथिव्याः पूर्व्वमुच्यते ॥
केतवो यत्र दृश्यन्ते रौद्रास्तेऽप्येकविंशतिः ।
यदा रौद्राः प्रदृश्यन्ते दुर्भिक्षं निर्द्दिशेत्तदा ॥
घूर्णन्ते च प्रजाः सर्व्वा मृत्युक्षुद्रोगपीडिताः ।
अश्लेषापित्र्यभाग्यानि विद्याद्दक्षिणपूर्व्वतः ॥
केतवो यत्र दृश्यन्ते चौहार्णिकसुता दश ।
सुभिक्षं क्षेममारोग्यं सुवृष्टिः शस्यसम्पदः ॥
आर्य्यमणादीनि च त्रीणि विद्याद्दक्षिणभागतः ।
केतवो यत्र दृश्यन्ते काश्यपेयाश्चतुर्द्दश ॥
अनावृष्टिभयं घोरं प्रजानामतिदारुणम् ।
स्वाती विशाखा मित्रश्च भागो दक्षिणपश्चिमः ॥
केतवो यत्र दृश्यन्ते चत्वारो मृत्युसम्भवाः ।
दुर्भिक्षं मरकं घोरमनावृष्टिस्तथैव च ॥
उपद्रवश्च भूतानां तदा भवति दारुणः ।
ज्येष्ठा मूलमथाषाढा भाग उत्तरपश्चिमः ॥
केतवो यत्र दृश्यन्ते अयस्ते सोमसम्भवाः ।
सुभिक्षञ्च सुवृष्टिश्च मही चोत्सवाकुला ॥
उत्तरा श्रवणा चैव नक्षत्रं वसुदैवतम् ।
केतवो यत्र दृश्यन्ते माहेयाः पञ्चविंशतिः ॥
माहेयेषु च दृष्टेषु लोकानां संक्षयो ध्रुवम् ।
तदा राजसहस्राणां मही पिबति शोणितम् ॥
वारुणञ्चैव नक्षत्रं तथा भाद्रपदद्वयम् ।
केतवो यत्र दृश्यन्ते वारुणास्त्रय एव ते” ॥ * ॥
“ऊर्म्मिकेतुः श्वेतकेतुर्धूमकेतुस्तृतीयकः ।
ऊर्म्मिकेतुर्यदा दृश्येत्तदाप्युदकजं भयम् ॥
श्वेतकेतुर्यदा दृश्येत् श्वेतास्थि कुरुते महीम् ।
तदा मानुषमांसानि भक्षयन्तीह मानुषाः ॥
क्षुद्भयार्त्तं जगत् कृत्स्नं चक्रवद्भ्रमते तदा ।
धूमकेतुर्यदा दृश्येत्तस्य वक्ष्यामि लक्षणम् ॥
स हन्ति शिखया योधान् राजानं मन्त्रिणं जनान् ।
रेवत्याश्वयुजञ्चैव नक्षत्रं यमदैवतम् ॥
केतवो यत्र दृश्यन्ते यमपुत्रास्त्रयोदश ।
यमपुत्रेषु दृष्टेषु लोकानां संक्षयो ध्रुवम् ॥
चतुर्व्विधानां भूतानां संक्षयो जायते महान्” ॥ * ॥
“अपरे विविधाः सन्ति वृहस्पत्यादिकेतवः ॥
नृपदेशविनाशाय दुर्भिक्षभयदायकाः ।
कुमुदाभस्तु कुमुदो वारुण्यां प्राक्शिखो निशाम् ॥
एकां दृष्टः सुभिक्षाय दशवर्षाणि सौख्यदः ।
पश्चिमाभ्युदिताश्चान्ये कुर्व्वन्ति प्रबलान् ज्वरान् ॥
पाण्डुरोगं प्रतिश्यायं मुखरोगमरोचकम् ।
क्षीरधारेव शुक्लाभा ऋज्वी सूक्ष्मतरा शिखा ॥
सकृद्यामैकदृश्यास्ते चतुर्म्मासं सुभिक्षदाः ।
जलकेतुस्तु यः पश्चात् शिखया नतया परे ॥
सुभिक्षं कुरुते शान्तिं प्रजानां नवमासतः ।
भवकेतुस्त्वेकरात्रं दृश्यः प्राक् सूक्ष्मतारकः ॥
दक्षिणावर्त्तशिखया हरिणाङ्कूलतुल्यया ।
मुहूर्त्तान् यावतो दृश्यस्तावन्मासान् सुभिक्षदः ॥
स एव रूक्षो दृश्यश्चेद्रोगप्राणान्तकारणम् ।
पद्मकेतुर्म्मृणालाभो निशामेकां प्रदृश्यते ॥
सप्त मासान् सुभिक्षं स हर्षवर्षप्रदायकः ।
आवर्त्तः सव्यशिखयारुणाभश्च निशार्द्धगः ॥

त्रिगर्भो यावतश्चाब्दान् तावतश्चाब्दमासान् सुभिक्षदः।
शुक्रकेतुश्चनियतगतिवर्णाकृतिर्भङ्गः ॥
दिव्यान्तरीक्षभौमोऽयं त्रिविध इष्टः स नान्यथा।
सेनाङ्गेषु महीन्द्राणां देशस्य गिरिशाखिषु ॥
उपस्करेषु गृहिणां दृश्यते च विनाशकृत्।
शुक्रादुल्का यदागत्य केतुर्व्याप्युपधूपयेत् ॥
दुर्भिक्षं मरकश्चैव तदा जगति जायते।
यदा तु भार्गवं प्राप्य धूमकेतुः प्रधूपयेत् ॥
तदा सैन्यानि वर्द्धन्ते यथोद्युक्ता नराधिपाः।
याम्यागताश्च ये सार्था व्रजमन्तश्च ये जनाः ॥
तथा वारणशालाः सर्व्वे भयमृच्छन्ति दारुणम्।
यदा प्रधूपयेत् केतुः सप्तर्षीन् ध्रुवमेव च ॥
तदा लोकाः क्षयं यान्ति सलिलञ्चापि शुष्यति।
धूमकेतुर्यदा राज्ञो दृश्यते विषये क्वचित् ॥
सराष्ट्रः सपुरो राजा क्षिप्रमेव प्रणश्यति।
यावन्त्यहानि दृश्यन्ते तावन्मासान् फलप्रदाः ॥
मासैरब्दान् विजानीयात् प्रथमे तु त्रिपक्षतः" ॥ * ॥
"केतूत्पाते तु सर्व्वस्मिन् समये समुपस्थिते ॥
महाशान्तिं प्रकुर्व्वीत विविधां भूरिदक्षिणाम्।
धनं वा सर्व्वमुत्सृज्य मृत्योर्म्मुच्येत बन्धनात् ॥
दद्याद्वा पृथिवीं सर्व्वां राजा शान्तिं नियच्छति।
अकस्माद्दृश्यते केतुरुदयेऽस्तमयेऽपि वा ॥
निहन्त्यन्तःपुरे राज्ञो ज्वरः पित्तोद्भवो भवेत्।
दधिमधुघृताक्तानां पुष्पाणामयुतं ततः ॥
जुहुयादिन्द्रनीलस्य केतुं दद्याद्द्विजातये।
भूषितं हेमरत्नाद्यैस्ततः सम्पद्यते शुभम्" ॥
इति मथुरानाथविद्यालङ्कारकृतसमयामृते केतूत्पाताः समाप्ताः ॥ केतुगणाः कुशद्वीपजाताः जैमिनिमुनेः सन्तानः षडङ्गुलः धूम्रवर्णः गृध्रवाहनः शूद्रवर्णः विकृताननः सूर्य्याभिमुखः खड्गः धूम्रवसनः वरदः गदाधरश्च। तस्याधिदेवता चित्रगुप्तः प्रत्यधिदेवता ब्रह्मा। इति ग्रहयागतत्त्वम् ॥ अस्य स्वरूपं शनिराहुवत्। स च शिखावान् अनेकरूपः। इति जातकम् ॥ * ॥
रोगः। पताका। (यथा, रघौ ७। ६५।
"सशोणितैस्तेन शिलीमुखाग्रै-
र्निक्षेपिताः केतुषु पार्थिवानाम्" ॥)
उत्पातः। (यथा, मनुः १। ३८।
"उल्कानिर्घातकेतूंश्च ज्योतींष्युच्चावचानि च" ॥)
चिह्नम्। इति मेदिनी। (यथा, रघुः २। ३३।
"तमार्य्यगृह्यं निगृहीतधेनु-
र्मनुष्यवाचा मनुवंशकेतुम्।
विस्माययन् विस्मितमात्मवृत्तौ
सिंहोरुसत्त्वं निजगाद सिंहः" ॥)
दीप्तिः। इति हेमचन्द्रः ॥ (सूर्य्यः। यथा, ऋग्वेदे १०। ८। १। "प्रकेतुना बृहता यात्यग्निः"। तत्रैव। ३। ३४। ४ "प्रारोचयन् मनवे केतुमह्नाम्"। रश्मिः ॥ यथा, ॐ उदु त्यं जातवेदसं देवं वहन्ति केतवः दृशे विश्वाय सूर्य्यम्" ॥)
केतुभः, पुं, (केतुरिव भातीति। भा+कः।) मेघः। इति शब्दमाला ॥
केतुमालं, क्ली, जम्बुद्वीपस्य नवखण्डान्तर्गतखण्डविशेषः। इति त्रिकाण्डशेषः ॥ (क्वचित् पुंलिङ्गोऽपि दृश्यते। यथा, महाभारते ६। ६। ३१।
"मेरोस्तु पश्चिमे पार्श्वे केतुमालो महीपते!।
जम्बुखण्डे च तत्रैव महाजनपदो नृप" ॥
आग्नीध्रराजपुत्त्रः स्वायम्भुवमनोः प्रपौत्रश्च। यथा, भागवते ५। २। २०।
"तस्यामु ह वा आत्मजान् स राजवर आग्नीध्रो नाभिकिम्पुरुषहरिवर्षेलावृतरम्यकहिरण्मयकुरुभद्राश्वकेतुमालसंज्ञान् नवपुत्त्रानजनयत्" ॥
स्त्री, नदी। यथा, महाभारते। ३। ८९। १४।
"ततः पुण्यतमा राजन्! सततं तापसैर्युता।
केतुमाला च मेध्या च गङ्गाद्वारञ्च भूमिप!" ॥)
केतुरत्नं, क्ली, (केतोः रत्नं केतुभिः रश्मिभिः युक्तं वा रत्नम्।) वैदूर्य्यमणिः। इति राजनिर्घण्टः ॥
केदरः, पुं, (के मस्तके दृणाति। दॄ+अच्। केन दीर्य्यते वा। दॄ+अप् कर्म्मणि।) वृक्षविशेषः। इति लिङ्गादिसंग्रहे अमरः। टेरके चि। इति शब्दरत्नावली ॥
केदारः, पुं, (के जले दार आदरो यस्य। यद्वा केन जलेन द्रियते आद्रियते इति। निपातनात् एत्वम्।) क्षेत्रम्। क्षेत् इति भाषा। इत्यमरः। २। ९। ११ ॥ (यथा, मनौ ९। ३८।
"भूमावप्येककेदारे कालोप्तानि कृषीवलैः।
नानारूपाणि जायन्ते बीजानीह स्वभावतः" ॥
क्षेत्रस्थजलधारणाधारविशेषः। यथा, रामायणे ३। २२। १८।
"वृषः पिबति केदारे निश्वासाकुलितं पयः" ॥)
केदारजलगुणाः। मधुरत्वम्। विपाके गुरुत्वम्। दोषलत्वम्। "तदेव बद्धमुक्तन्तु विशेषाद्दोषदं भवेत्"। इति राजनिर्घण्टः ॥ (के मस्तके शिखरदेशे दारः प्रस्रवणादिकारणस्वरूपविदीर्णस्थानं अस्य।) पर्व्वतविशेषः। (के मस्तके शिरःस्थितजटाभ्यन्तरे गङ्गारूपिणी दाराः पत्नी यस्य सर्व्वत्र निपातनात् एत्वम्।) शिवः। भूमिभेदः। आलवालम्। इति मेदिनी ॥ (भ्रूमध्यस्थानविशेषः। यथा, हठयोगदीपिकायाम्। ३। २४।
"कालपाशमहाबन्धविमोचनविचक्षणः।
त्रिवेणीसङ्गमं धत्ते केदारं प्रापयेन्मनः" ॥
"केदारभ्रुवोर्मध्ये शिवस्थानं केदारशब्दवाच्यं तं मनः स्वान्तं प्रापयेत्"। इति तट्टीका ॥ तीर्थविशेषः। यथा, महाभारते। ३। ८३। ६६।
"केदारे चैव राजेन्द्र! कपिलस्य महात्मनः।
ब्राह्मणमधिगत्वा च शुचिः प्रयतमानसः।
सर्व्वपापविशुद्धात्मा ब्रह्मलोकं प्रपद्यते" ॥ * ॥
केदारपर्व्वतस्थलिङ्गभेदः। स तु लिङ्गमूर्त्त्या काश्यामाविर्भावात् तन्नाम्ना ख्यातः तद्विवरणं यथा, काशीखण्डे। ७७ अध्याये।

श्रीपार्व्वत्युवाच।

"नमस्ते देवदेवेश! प्रणमत्करुणानिधे!।
वद केदारमाहात्म्यं भक्तानामनुकम्पया ॥
तस्मिन् लिङ्गे सदा प्रीतिस्तव काश्यामनुत्तमा।
तद्भक्ताश्च जना नित्यं देवदेव! महाधियः ॥

श्रीदेवदेव उवाच।

शृणु पर्णेऽभिधास्यामि केदारेश्वरसंकथाम्।
समाकर्ण्यापि यां पापोऽप्यपापो जायते क्षणात् ॥
केदारं यातुकामस्य पुंसो निश्चितचेतसः।
आजन्मसञ्चितं पापं तत्क्षणादेव नश्यति ॥
गृहाद्विनिर्गते पुंसि केदारगतिनिश्चिते।
जन्मद्वयार्ज्जितं पापं शरीरादपि निर्व्रजेत् ॥
मध्येमार्गं प्रपन्नस्य त्रिजन्मजनितं त्वघम्।
देहगेहाद्विनिःसृत्य निराशं याति निश्वसत् ॥
सायं केदार केदार केदारेति त्रिरुच्चरन्।
गेहेऽपि निवसन्नूनं यात्राफलमवाप्नुयात् ॥
दृष्ट्वा केदारशिखरं पीत्वा तत्रत्यमम्बु च।
जन्मजन्मकृतात्पापात् मुच्यते नात्र संशयः ॥
हरपापह्रदे स्नात्वा केदारेशं प्रपूज्य च।
कोटिजन्मार्ज्जितैनोभिर्मुच्यते नात्र संशयः ॥
सकृत्प्रणम्य केदारं हरपापकृतोदकः।
स्थाप्य लिङ्गं हृदम्भोजे प्रान्ते मोक्षं गमिष्यति ॥
हरपापह्रदे श्राद्धं श्रद्धया यः करिष्यति।
उद्धृत्य सप्त पुरुषान् स मे लोकं गमिष्यति ॥
पुरा रथन्तरे कल्पे यदभूदत्र तत् शृणु।
अपर्णे रम्यकथां त्वं वर्णयामि तवाग्रतः ॥
एको ब्राह्मणदायाद उज्जयिन्या इहागतः।
कृतोपनयनः पित्रा ब्रह्मचर्य्यव्रते स्थितः ॥
स्पर्शी पाशुपतीं काशीं स विलोक्य समन्ततः।
द्विजैः पाशुपतैः कीर्णां जटामुकुटमण्डितैः ॥
कृतलिङ्गसमर्च्चैश्च भूतिभूषितवर्ष्मभिः।
भिक्षाकृताशसन्तुष्टैः पुरैर्गङ्गोदकामृतैः ॥
बभूवानन्दितमना व्रतं जग्राह चोत्तमम्।
हिरण्यगर्भादाचार्य्यान्महत्पाशुपताभिधम् ॥
स च शिष्यो वशिष्ठोऽभूत् सर्व्वपाशुपतोत्तमः
स्नात्वा ह्रदे हरपापे नित्यं प्रातः समुत्थितः ॥
विभूत्याहरहः स्नाति त्रिकालं लिङ्गमर्च्चयन्।
नान्तरं स विजानाति शिवलिङ्गे गुरौ तथा ॥
स द्वादशाब्ददेशीयो वशिष्ठो गणशा सह।
ययौ केदारयात्रार्थं गिरिं गौरीगुरोर्गुरुम् ॥
यत्र गत्वा न शोचन्ति किञ्चित् संसारिणः क्वचित्।
प्राश्योदकं लिङ्गरूपं लिङ्गरूपत्वमागताः।
असिधारं गिरिं प्राप्य वशिष्ठस्य तपस्विनः ॥
गुरुर्हिरण्यगर्भाख्यः पञ्चत्वमगमत् तदा।
पश्यतां तापसानाञ्च विमाने सार्व्वकामिके ॥
आरोप्य तं पारिषदाः कैलासमनयन् मुदा।
यस्तु केदारमुद्दिश्य गेहादर्द्धपथेऽप्यहो ॥
अकालतस्त्यजेत् प्राणान् कैलासे स चिरं वसेत्।
तदाश्चर्य्यं समालोक्य स वशिष्ठस्तपोधनः ॥
केदारमेव लिङ्गेषु बहुमेने सुनिश्चितम्।
अथ कृत्वा स केदारीं यात्रां वाराणसीमगात् ॥
अग्रहीन्नियमं चापि यथार्थं चाकरोत् पुनः।
प्रतिचैत्रं सदा चैत्र्यां यावज्जीवमहं ध्रुवम् ॥
विलोकयिष्ये केदारं वसन् वाराणसीं पुरीम्।
तेन यात्राः कृताः सम्यक् षष्टिरेकाधिका मुदा ॥
आनन्दकानने नित्यं वसता ब्रह्मचारिणा।
पुनर्यात्रां स वै चक्रे मधौ निकटवर्त्मनि ॥

परमोत्साहसन्तुष्टः पलिताकलितोऽप्यहम् ।
तपोधनैस्त्रिधनं प्रश्रमार्गैर्निवारितः ॥
कारुण्यपूर्णहृदयैरन्यैरपि च सद्भिः ।
ततोऽपि न तदुत्साहभङ्गोऽभूद्दृढचेतसः ॥
मध्ये मार्गं मृतस्यापि गुरोरिव गतिर्मम ।
इति निश्चितचेतस्के वशिष्ठे तापसे शुचौ ॥
अमृताप्तपरीपुष्टे तुष्टोऽहं चरिहकेऽभवम् ।
स्वप्ने मया स संप्रोक्तो वशिष्ठस्तापसोत्तमः ।
दृढव्रत ! प्रसन्नोऽस्मि केदारं विद्धि मामिह ॥
अभीष्टञ्च वरं मत्तः प्रार्थयस्वाविचारितम् ।
इत्युक्तवत्यपि मयि स्वप्नो मिथ्येति सोऽब्रवीत् ॥
ततोऽपि स मया प्रोक्तः स्वप्नो मिथ्याशुचिष्मताम् ।
भवादृशामभिथ्यैव स्वाध्यायवशवर्त्तिनाम् ॥
वरं ब्रूहि प्रसन्नोऽस्मि स्वप्नशङ्कां त्यज द्विज ! ।
तव सत्त्ववतः किञ्चित् मयाऽदेयं न किञ्चन ॥
इत्युक्तं मे समाकर्ण्य वरयामास मामिति ।
शिष्यो हिरण्यगर्भस्य तपस्विजनसत्तमः ॥
यदि प्रसन्नो देवेश ! तदा मे सानुगा इमे ।
सर्व्वे मुनिजनुग्राह्या एष एव वरो मम ॥
देवि ! तस्येदमाकर्ण्य परोपकृतिशालिनः ।
वचनं नितरां प्रीतस्तथेति तमुवाच ह ॥
पुनः परोपकरणात् तत्तपोद्विगुणीकृतम् ।
तेन पुण्येन स मया पुनः प्रोक्तो वरं वृणु ॥
स वशिष्ठो महाप्राज्ञो दृढपाशुपतव्रतः ।
देवि ! मे प्रार्थयामास हिमशैलादिह स्थितिम् ॥
ततस्तत्तपसा तुष्टः कलामात्रेण तत्र हि ।
हिमशैले स्थितस्त्वत्र सर्व्वभावेन संस्थितः ॥
ततः प्रभाते संजाते सर्व्वेषां पश्यतामहम् ।
हिमाद्रेः प्रस्थितः प्राप्तः स्तूयमानः सुरर्षिभिः ॥
वशिष्ठं पुरतः कृत्वा सर्व्वसार्थसमायुतम् ।
हरपापह्रदे तीर्थे स्थितोऽहं तदनुग्रहात् ॥
मत्परिग्रहतः सर्व्वे हरपापे कृतोदकाः ।
आराध्य मामनेनैव वपुषा सिद्धिमागताः ॥
तदाप्रभृति लिङ्गेऽस्मिन् स्थितः साधकसिद्धये ।
अविमुक्ते परे क्षेत्रे कलिकाले विशेषतः ॥
तुषाराद्रिं समारुह्य केदारं वीक्ष्य यत् फलम् ।
तत् फलं सप्तगुणितं काश्यां केदारदर्शने ॥
गौरीकुण्डं यथा तत्र हंसतीर्थञ्च निर्म्मलम् ।
यथा मधुस्रवा गङ्गा काश्यां तदखिलं तथा ॥
इदं तीर्थं हरपापं सप्तजन्माघनाशनम् ।
गङ्गायां मिलितं पश्चाज्जन्मकोटिकृताघहृम्" ॥
केदाराख्यः पर्व्वतश्च तीर्थयात्रिभिः प्रायेण वदर्य्याश्रमात् सप्तदिनैः समागमनीयः ॥ * ॥)

केदारकटुका, स्त्री, (केदारस्य शैलस्य कटुका इव ।) कटुका । इति राजनिर्घण्टः । कटकी इति भाषा ॥ (कटुकाशब्देऽस्य विवरणं ज्ञातव्यम् ॥)

केदारजं, क्ली, (केदारात् जायते इति । जन् + डः ।) पद्मकाष्ठम् । इति राजनिर्घण्टः ॥

केदारेशः, पुं, (केदार एतन्नामा पर्व्वतः तत्र य ईशः लिङ्गरूपी महादेवः । यद्वा, केदाराख्यः ईशः ।) काशीस्थशिवविशेषः । यथा,—
"हरपापह्रदे स्नात्वा केदारेशं प्रपूज्य च ।
कोटिजन्मार्ज्जितैनोभिर्म्मुच्यते श्रद्धयान्वितः" ॥
इति स्कान्दे काशीखण्डे ७७ अध्यायः ॥

केदारेश्वरः, पुं, (केदाराख्य ईश्वरः । केदारपर्व्वतस्य ईश्वरो वा ।) काशीस्थशिवविशेषः । यथा,—
"शृण्वपर्णेऽभिधास्यामि केदारेश्वरसंकथाम् ।
समाकर्ण्यापि यां पापोऽप्यपापो जायते क्षणात्" ॥
इति स्कान्दे काशीखण्डे ७७ अध्यायः ॥

केनारः, पुं, (के मूर्द्ध्नि नारः । अलुक्समासः ।) कुम्भिनरकः । इति हेमचन्द्रः । शिरः । कपोलः । सन्धिः । इति मेदिनी ॥

केनिपातः, पुं, (के जले निपात्यतेऽसौ । नि + पत् + णिच् + अप् ।) अरित्रम् । इति शब्दरत्नावली । हालि इति भाषा ॥

केनिपातकः, पुं, (केनिपात + स्वार्थे कन् ।) केनिपातः । इत्यमरः । १ । १० । १३ ॥

केन्दुः, पुं, (कु ईषत् इन्दुरिव । कोः कादेशः ।) तिन्दुकवृक्षः । इति शब्दरत्नावली ॥

केन्दुकः, पुं, (केन्दु + संज्ञायां कन् ।) गालववृक्षः । इति शब्दचन्द्रिका ॥ गाव इति भाषा ॥ तालविशेषः । यथा । "लघुद्वयं विरामान्ततालो केन्दुकसंज्ञके" । लघुद्वयं स्थाने द्रुतद्वयमिति च पाठः । अपरं नियमं विना । इति सङ्गीतदामोदरः ॥

केन्द्रं, क्ली, लग्नम् । लग्नात् चतुर्थसप्तमदशमस्थानानि । तत्पर्य्यायः । कण्टकम् २ । यथा,—
"लग्नाम्बुद्यूनकर्म्माणि केन्द्रमुक्तञ्च कण्टकम् ।
चतुष्टयञ्चात्र खेटो बली स्यात् विशेषतः" ॥
इति नीलकण्ठकृतवर्षतन्त्राख्यजातकम् ॥ स्पष्टग्रहानयनार्थं शीघ्रमन्दसंज्ञकाङ्कद्वयम् । यथा,—
"मृदूच्चेन हीनो ग्रहो मन्दकेन्द्रं
चलोच्चं ग्रहाणां भवेच्छीघ्रकेन्द्रम्" ॥
इति भास्करीयसिद्धान्तशिरोमणौ स्पष्टाधिकारः ॥ ग्रहं संशोध्य मन्दोच्चात् तथा शीघ्रात् विशोध्य च शिष्टं केन्द्रम् । इति सूर्य्यसिद्धान्तः ॥ गोलस्य मध्यस्थानम् । यथा,—
"वृत्तस्य मध्यं किल केन्द्रमुक्तम्
केन्द्रं ग्रहोच्चान्तरमुच्यतेऽतः ।
यतोऽन्तरे तावति तुङ्गदेशा-
न्नीचोच्चवृत्तस्य सदैव केन्द्रम्" ॥
इति सिद्धान्तशिरोमणौ गोलाध्यायः ॥ (यात्रायोगविशेषः । यथा, शब्दार्थचिन्तामणिधृतवचने ।
"आपोक्लिमगते चन्द्रे केन्द्रस्थे सुरपूजिते ।
योगः केन्द्र इति ख्यातो यातुरिष्टार्थसिद्धिदः" ॥
प्रान्तसीमा । यथा, योगशास्त्रे ।
"पृथिव्या उभयोः केन्द्रयोः स्थितौ द्वावेव योगिनौ । एकत्र सान्निध्यस्थितिवत् सन्निकर्षस्थिताविव वा अन्योन्यमालपति" ॥)

केप, ऋ ङ गत्याम् । चाले । इति कविकल्पद्रुमः । (भ्वां-आत्मं-सकं-सेट्-ऋदित् ।) ङ, केपते । ऋ, अचिकेपत् । इति दुर्गादासः ॥

केमद्रुमः, पुं, जन्मकालीनग्रहयोगविशेषः । यथा ।
"रविवर्ज्जं द्वादशगैरनफा चन्द्रात् द्वितीयगैः सुनफा ।
उभयस्थितैर्दुरधुरा केमद्रुमसंज्ञितोऽन्यः" ॥
अनफादियोगः । सच्छीलं विषयसुखान्वितं प्रसुख्यातियुक्तमनफायाम् । सुनफायां धीधनकीर्त्तियुक्तमात्मार्ज्जितैश्वर्यञ्च ॥ बहुभृत्यकुटुम्बारम्भमुद्विग्नचित्तमपि दौरधुरे । भृतकं दुःखितमधनं जातं केमद्रुमे विद्यात् ॥ अनफादिफलम् । इति ज्योतिस्तत्त्वम् ॥ (केमद्रुमयोगे जातस्य फलं यथा, जातकपद्धतौ ।
"नृपतेर्वंशजातोऽपि केमद्रुमभवो नरः ।
मलिनो दुःखितो नीचो निःस्वो दासो भवेत् खलः" ॥
तद्भङ्गस्तु तत्रैव । "चन्द्रे केन्द्रगतेऽथवा ग्रहयुते सर्व्वैश्च दृष्टे विधौ सर्व्वैः कण्टकसंस्थितैर्ग्रहगणैः केमद्रुमो नेष्यते । लग्नाद् विधो र्वा कण्टकैः शुभैः सर्व्वं शुभं फलं । द्वाभ्यां मध्यं तथैकेनाल्पं चेन्नास्ति दरिद्रता" ॥)

केमुकः, पुं, (के शिरोवच्छेदे अमयतीति । अम् रोगे + उक प्रत्ययः ।) कन्दविशेषः । केँउ इति भाषा । तत्पर्य्यायः । पेचुकः २ पेचुनी ३ पेचुः ४ पेचिका ५ दलसारिणी ६ केमुकः ७ । इति रत्नमाला ॥ तस्य मूलगुणाः । कफपित्तनाशित्वम् । रोचनत्वम् । अग्निदीपनत्वञ्च । इति राजवल्लभः ॥ कटुत्वम् । पाके तिक्तत्वम् । ग्राहित्वम् । हिमत्वम् । लघुत्वम् । पाचनत्वम् । हृद्यत्वम् । ज्वरकुष्ठकासप्रमेहास्रनाशित्वम् । वातलत्वम् । पटुत्वञ्च । इति भावप्रकाशः ॥ (एतत् फलं चविष्ठे वर्ज्जनीयम् । क्ली, कन्दशाकविशेषः ॥)

केयूरं, क्ली, (के बाहुशिरसि भूषणतां याति । या गत्यां + ऊरः । अलुक् समासः ।) अलङ्कारविशेषः । ताड इति भाषा । तत्पर्य्यायः । अङ्गदम् २ । इत्यमरः । २ । ६ । १०७ ॥ (यथा, महाभारते । ६ । ६७ । २१ ।
"पादानां भूषणानाञ्च केयूराणाञ्च सर्व्वशः ।
राशयस्तत्र दृश्यन्ते भीष्मभीमसमागमे" ॥)

केयूरः, पुं, रतिबन्धविशेषः । यथा,—
"स्त्रीमङ्के चैव संपीड्य दोर्भ्यामालिङ्ग्य सुन्दरीम् ।
कारयेत् स्थापनं कामी बन्धः केयूरसंज्ञकः" ॥
इति स्मरदीपिका ॥ अपि च ।
"स्त्रीणां जङ्घान्तराविष्टो गाढमालिङ्ग्य सुन्दरीम् ।
कामयेद्विपुलं कामी बन्धः केयूरसंज्ञकः" ॥
इति रतिमञ्जरी ॥

केरलः, पुं, देशभेदः । मालेबोयार इति भाषा । यथा । उग्राः केरलपर्य्यायाः । इति हेमचन्द्रः ॥ वेदयागानधिकारिशस्त्रधारिम्लेच्छविशेषः । पुरैते क्षत्रिया आसन् सगरेणैषां धर्म्मो नाशितः वेशान्यत्वञ्च कृतम् । यथा,—
"निःस्वाध्यायवषट्काराः कृतास्तेन महात्मना ।
शका यवनकाम्बोजाः पारदाः पह्नवास्तथा ॥
कोलिसर्पा माहिषका दर्व्वाश्चोलाः सकेरलाः ।
सर्व्वे ते क्षत्रियास्तात ! धर्म्मस्तेषां निराकृतः" ॥
इति हरिवंशः । (तथा च रघुवंशे । ४ । ५४ ।
"भयोत्सृष्टविभूषाणां तेन केरलयोषिताम् ।
अलकेषु चमूरेणुश्चूर्णप्रतिनिधीकृतः" ॥)

केरली, स्त्री, (केरल + गौरादित्वात् ङीष् ।)

ज्योतिर्ग्रन्थविशेषः । होरा । इति शब्दरत्नावली ॥ (केरलज्योतिर्विद्यायां साङ्केतविशेषो दिङ्मात्रं प्रदर्श्यते गर्गसंहितायां यथा,—

"वर्गवर्णप्रमाणाच्च सखरं ताडितं मिथः ।

पिण्डसञ्ज्ञा भवेत्तस्य यथामार्गेण कल्पना" ॥

अस्यार्थः क च ट त प य श इत्यष्टौ वर्गा एतेरेव प्रश्नादयो यथायथं साङ्केतिकनाममात्राः निष्पाद्यन्ते ॥ केरलदेशोद्भवा स्त्री । यथा, राजेन्द्रकर्णपूरे । ६ ।

"चौडी चूडामरकहरणा कौर्यकर्यावतंसः कर्णाटीनां मुषितमुरली केरलीहारलीलः" ॥)

केल, ऋ चाले । गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-गत्यर्थे सकं-सेट्-ऋदित् ।) ऋ, अचिकेलत् । चालः कम्पः । चालः कैश्चिन्न मन्यते । इति दुर्गादासः ॥

केलकः, पुं, (केल + कर्त्तरि ण्वुल् ।) खड्गधारादिनर्त्तकः । तत्पर्य्यायः । अवकः २ । इति त्रिकाण्डशेषः ॥

केलिः, पुं स्त्री, (केल् + इन् ।) परीहासः । तत्पर्य्यायः । द्रवः २ क्रीडा ३ लीला ४ नर्म्म ५ । इत्यमरः । १ । ७ । ३२ ॥ (नायिकालङ्कारविशेषः । यथा, एतल्लक्षणं साहित्यदर्पणे । ३ । १२२ ।

"विहारे सह कान्तेन क्रीडितं केलिरुच्यते" ॥

यथा, भ्रमराष्टके । ४ ।

"मालत्याः कुसुमेषु येन सततं केलिः कृता हेलया" ॥)

केलिः, स्त्री, (केलति सदा गच्छतीति । "सर्व्वधातुभ्य इन्" । इति इन् ।) पृथिवी । इति शब्दमाला ॥

केलिकः, पुं, (केलिर्विलासः प्रयोजनमस्य इति ठन् ।) अशोकवृक्षः । इति राजनिर्घण्टः ॥ (विवृतिरस्याशोकशब्दे ज्ञेया ॥)

केलिकला, स्त्री, (केलिरूपा कला । शाकपार्थिवादिवत् मध्यपदलोपिसमासः ।) सरस्वतीवीणा । इति शब्दरत्नावली ॥ (केलिः क्रीडा तस्याः कला अंशविशेषः । यथा, भ्रमराष्टके । ७ ।

"अलिरसौ नलिनीवनवल्लभः

कुमुदिनीकुलकेलिकलारसः" ॥)

केलिकिलः, पुं, (केलिना लीलया किलतीति । किल क्रीडायां + कः ।) कुशाश्वकः । स तु शिवस्यानुचरः । नाट्ये नायकवयस्यः । तत्पर्य्यायः । विदूषकः २ वासन्तिकः ३ वैहासिकः ४ प्रहासी ५ प्रीतिदः ६ । इति हेमचन्द्रः ॥ (केलिना परीहासेन किलतीति विग्रहे वाच्यलिङ्गः । यथा, हरिवंशे ।

"स तु केलिकिलो विप्रो भेदशीलश्च नारदः" ॥)

केलिकिला, स्त्री, (केलिना विहारेण किलतीति किल् + कः । ततः टाप् ।) रतिः । सा तु कामदेवपत्नी । इति त्रिकाण्डशेषः ॥

केलिकीर्णः, पुं, (केलिनिमित्तकैः पांशुभिः कीर्णः ।) उष्ट्रः । इति हेमचन्द्रः ॥

केलिकुञ्चिका, स्त्री, (केलीनां कुञ्चिका इव । श्यालिका । इति त्रिकाण्डशेषः । शाली इति भाषा ॥

केलिकोषः, पुं, (केलीनां रङ्गस्थानां क्रीडापरीहासादीनां वा कोष आधार इव ।) नटः । इति शब्दरत्नावली ॥

केलिनागरः, पुं, (केलिनिपुणः प्रधानको वा नागरः ।) सम्भोगवान् । इति जटाधरः ॥

केलिमुखः, पुं, (केलिः मुखं प्रधानमस्य ।) परीहासः । इति त्रिकाण्डशेषः ॥

केलिवृक्षः, पुं, (केलिनिमित्तको वृक्षः ।) कदम्बविशेषः । इति शब्दरत्नावली ॥ केलिकदम्ब इति ख्यातः ॥

केलिसचिवः, पुं, (केलौ क्रीडाविषये सचिवः सहायः ।) नर्म्मदः । क्रीडाविषयकमन्त्री । इति शब्दमाला ॥

केव, ऋ ङ सेवने । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-सकं-सेट्-ऋदित् ।) ङ, केवते । ऋ, अचिकेवत् । इति दुर्गादासः ॥

केवर्त्तः, पुं, (के जले वर्त्तते । वृत् + अच् । अलुक् समासः ।) कैवर्त्तजातिः । इति द्विरूपकोषः ॥ (एषोऽन्त्यजशूद्रः । यथा, ब्रह्मवैवर्त्तपुराणे ।

"रजकश्चर्म्मकारश्च नटो वरुड एव च ।

केवर्त्त मेदभिल्लाश्च षडेते अन्त्यजाः स्मृताः" ॥)

केवलं, क्ली, (केव ङ सेवने + वृषादित्वात् कलच् । यद्वा, के शिरसि मूर्द्धावच्छेदे वलयति । वल + अच् । अलुक् समासः ।) निर्णीतम् । इत्यमरमेदिनीकरौ ॥ ज्ञानभेदः । इति विश्वो हेमचन्द्रश्च ॥ (सांख्यकारिकायां यथा,—"अविपर्य्ययात् विशुद्धं केवलमुत्पद्यते ज्ञानम्" ॥)

शुद्धम् । (यथा, रघौ २ । ६३ ।

"न केवलानां पयसां प्रसूति-

मवेहि मां कामदुघां प्रसन्नाम्" ॥)

कृत्स्नम् । (यथा, रघुवंशे १० । २९ ।

"केवलं स्मरणेनैव पुनासि पुरुषं यतः ।

अनेन वृत्तयः शेषा निवेदितफलास्त्वयि" ॥)

असहायः । इति संक्षिप्तसारे उणादिवृत्तिः ॥ (अद्वितीयः । यथा, कुमारे ५ । ८३ ।

"न केवलं यो महतोऽपभाषते

शृणोति तस्मादपि यः स पापभाक्" ॥)

केवलः, पुं, कुहनः । इति मेदिनी । (कुम्भकविशेषः । यथा, हठयोगदीपिकायाम् । २ । ७१ ।

"प्राणायामस्त्रिधा प्रोक्तो रेचपूरककुम्भकैः ।

सहितः केवलश्चेति कुम्भको द्विविधो मतः" ॥)

केवलः, त्रि, एकः । (यथा, रघुवंशे । ११ । १९ ।

"वाममिभन्नहृदया निपेतुषी

सा स्वकाननभुवं न केवलाम् ।

विष्टपत्रयपराजयस्थिरां

रावणश्रियमपि व्यकम्पयत्" ॥)

कृत्स्नः । इत्यमरमेदिनीकरौ । (यथा, रघुः १० । २९ ।

"केवलं स्मरणेनैव पुनासि पुरुषं यतः ।

अनेन वृत्तयः शेषा निवेदितफलास्त्वयि" ॥)

केवलज्ञानी, [न्] पुं, (केवलं शुद्धं ज्ञानं अस्यास्तीति । इनिः ।) भूतार्हद्विशेषः । इति हेमचन्द्रः ॥

केवलद्रव्यं, क्ली, (केवलं द्रव्यम् ।) मरिचम् । इति शब्दचन्द्रिका ॥

केवली, स्त्री, (केवल + ङीष् ।) ज्ञानभेदः । इति मेदिनी । ग्रन्थविशेषः । इति हेमचन्द्रः ॥

केवली, [न्] पुं, (केवलं शुद्धं ज्ञानमस्यास्तीति । इनिः ।) जैनविशेषः । इति हलायुधः ॥

केविका, स्त्री, (केव गतिचालनयोः + ण्वुल् + टाप् अत इत्वम् ।) पुष्पविशेषः । केवेर इति भाषा लोकेषु प्रसिद्धा । तत्पर्य्यायः । काविका २ केवी ३ भृङ्गारिः ४ बकवल्लभा ५ भृङ्गमारी ६ महागन्धा ७ राजकन्या ८ अलिवाहिनी ९ । अस्या गुणाः । मधुरत्वम् । शीतलत्वम् । दाहपित्तश्रमवातश्लेष्मरोगपित्तच्छर्द्दिविनाशित्वञ्च । इति राजनिर्घण्टः ॥

केशः, पुं, (के मस्तके शेते । शी + अच् । अलुक्समासः ।) मज्जात्मोपधातुविशेषः । चुल इति भाषा । स तु गर्भस्थबालकस्य षष्ठाभिर्मासैर्जायते । इति मुग्धबोधः । (केशादयस्तु पितृतो जायन्ते । यथा, सुश्रुते शारीरस्थाने तृतीयेऽध्याये । "गर्भस्य केशश्मश्रुलोमास्थिनखदन्तसिरास्नायुधमनीरेतःप्रभृतीनि स्थिराणि पितृजानि" ॥ भावप्रकाशे च ।

"केशाः श्मश्रु च लोमानि नखा दन्ताः सिराश्च याः ।

धमन्यः स्नायवः शुक्रमेतानि पितृजानि हि" ॥)

तत्पर्य्यायः । चिकुरः २ कुन्तलः ३ वालः ४ कचः ५ शिरोरुहः ६ । इत्यमरः । २ । ६ । ९५ ॥ शिरसिजः ७ मूर्द्धजः ८ अस्रः ९ वृजिनः १० । इति जटाधरः ॥ (रोगविशेषेणास्योत्पाटनानन्तरमुद्गमोपायाश्च । यथा,—

"वटावरोहकेशिन्योश्चूर्णेनादित्यपाचितम् ।

गुडूचीस्वरसे तैलमभ्यङ्गात् केशरोहणम्" ॥

इति आदित्यपाकगुडूचीतैलम् ॥ * ॥

"मधुकेन्दीवरमूर्व्वा तिलाज्यगोक्षीरभृङ्गलेपेन ।

अचिराद्भवन्ति घनकेशा दृढमूलायतास्तनवः" ॥

"चन्दनं मधुकं मूर्व्वा त्रिफला नीलमुत्पलम् ।

कान्तावटप्ररोहश्च गुडूचीविषमेव च ॥

लौहचूर्णं तथाकेशी शारिवे द्वे तथैव च ।

मार्कवस्वरसेनैव तैलं मृद्वग्निना पचेत् ॥

शिरस्युत्पतिताः केशा जायन्ते घनकुञ्चिताः ।

दृढमूलाश्च स्निग्धाश्च तथा भ्रमरसन्निभाः ॥

नस्येनाकालपलितं निहन्यात्तैलमुत्तमम्" ॥

इति चन्दनाद्यं तैलम् ॥ * ॥

"तैलं सयष्टीमधुकैः क्षीरे धात्रीफलैः शृतम् ।

नस्ये दत्तं जनयति केशान् श्मश्रूणि चाप्यथ" ॥

पक्वावस्थापन्नस्यास्य कृष्णीकरणोपाया यथा,—

"त्रिफलाचूर्णसंयुक्तं लौहचूर्णं विनिक्षिपेत् ।

ईषत्पक्वे नारिकेले भृङ्गराजरसान्विते ॥

मासमेकन्तु निःक्षिप्य सम्यग्गर्भात् समुद्धरेत् ।

ततः शिरो मुण्डयित्वा लेपं दद्याद्भिषग्वरः ॥

सम्वेष्ट्य कदलीपत्रैर्मोचयेत्सप्तमे दिने ।

क्षालयेत्त्रिफलाक्वाथैः क्षीरमांसरसाशिनः ॥

कपालरञ्जनञ्चैव कृष्णीकरणमुत्तमम्" ॥

"उत्पलं पयसा सार्द्धं मासं भूमौ निधापयेत् ।

केशानां कृष्णकरणं स्नेहनञ्च विधीयते" ॥

इति वैद्यकचक्रपाणिसंग्रहे क्षुद्ररोगाधिकारे ॥) तत्समूहार्थवाचकाः शब्दाः यथा, —
"वालाः स्युस्तत्पराः पाशो रचनाभार उच्चयः ।
हस्तः पक्षः कलापश्च केशभूयस्त्ववाचकाः" ॥
इति हेमचन्द्रः ॥ * ॥ (कस्य जलस्य ईशः ।) वरुणः । क्लीवेरम् । इति मेदिनी ॥ (अस्य पर्य्याया यथा,—
"वालं ह्रीवेरवर्हिष्ठोदीच्यं केशोऽम्बुनाम च" ॥
इति वैद्यकरत्नमालायाम् ॥) दैत्यविशेषः । इति हेमचन्द्रः ॥ (कस्य ब्रह्मणोऽपि ईशः । के जले शेते वा ।) विष्णुः । इति शब्दरत्नावली । (काशते प्रकाशते लोके लोकं काशयति वा । काश + अच् पृषोदरात् सत्वे साधुः । सूर्य्याग्निप्रभृतिरश्मिः ।
"ब्रह्म-विष्णु-रुद्र-संज्ञाः शक्तयः केशसंज्ञिताः" ॥
इति भागवतोक्तेः परब्रह्मशक्तिः । ब्रह्मा ।
"केशो योनौ तथा भावे हावलावण्ययोरपि ।
लम्पटे पुरुषे चैव प्रमदायां विशेषतः" ॥
"प्रजापतौ कचे चैव केशशब्दः प्रकीर्त्यते" ॥
इति महाभारतटीकाकृन्नीलकण्ठः ॥)

केशकलापः, पुं, (केशानां कलापः समूहः ।) केशपाशः । केशसमूहः । इति हेमचन्द्रः ॥

केशकारः, पुं, (केशं केशवत् केशाकृतिं वा करोति आत्मानं केशाकारेण वर्द्धयति इति भावः । केश + कृ + "कर्म्मण्यण्" । ३ । २ । १ । इति अण् ।) इक्षुभेदः । करिया कुशियार इति हिन्दी भाषा । अस्य गुणाः । गुरुत्वम् । शीतलत्वम् । रक्तपित्तक्षयापहत्वञ्च । इति भावप्रकाशः ॥

केशगर्भकः, पुं, (केशो गर्भे अभ्यन्तरेऽस्य । कप् ।) कबरी । इति त्रिकाण्डशेषः ॥

केशघ्नं, क्ली, (केशं हन्ति नाशयतीति । हन् + टक् ।) इन्द्रलुप्तकम् । इति हेमचन्द्रः ॥

केशच्छिद्, [ द् ] पुं, केशं छिनत्ति । छिद् + क्विप् ।) नापितः । इति शब्दमाला ॥

केशटः, पुं, (को ब्रह्मा ईशः महादेवः तौ अटतः गच्छतः प्रलये यं । महाप्रलये मूर्त्तिविशेषात् तथात्वम् । यद्वा ब्रह्मशिवाभ्यां अटति गच्छति यः सः । त्रयाणामेकात्मत्वात् ।) विष्णुः । (केशेषु काशादितृणजालेषु अटति चरतीति । अट् + अच् । शकन्ध्वादित्वात् साधुः ।) छागः । (केशेषु मूर्द्धजेषु अटतीति । अट् + अच् शकन्ध्वादित्वात् अलोपे साधुः ।) लोकणः । इति मेदिनी । भ्राता । इति शब्दरत्नावली ॥ (केशेषु कामार्त्तपुरुषनारीषु अटति । अट् + अच् ।) कामदेवस्य शोषणवाणः । इति विश्वः । (केश इव प्रतिमासु नटनद्यादिषु च अटति त्वगात्मनेति यावत् ।) शोणकवृक्षः । इति त्रिकाण्डशेषः ॥

केशधृत्, पुं, (केशमिव धरति । धृ + क्विप् ।) भूतकेशनामकवृक्षभेदः । इति शब्दचन्द्रिका ॥

केशनाम, [न्] क्ली, (केशनामेव नाम यस्य ।) वालम् । इत्यमरः ॥ वाला इति भाषा ॥

केशपक्षः, पुं, (केशानां पक्षः समूहः । बाहुलकात् पक्षादेशो वा ।) केशपाशः इत्यमरः । २ । ६ । ९८ ॥ (यथा, महाभारते । ४ । ३६ । ४१ ।
"उत्तरन्तु प्रधावन्तमनुद्रुत्य धनञ्जयः ।
गत्वा शतपदं तूर्णं केशपक्षे परामृशत्" ॥)

केशपर्णी, स्त्री, (केश इव पर्णान्यस्य । जातित्वात् ङीष् ।) अपामार्गः । इति शब्दरत्नावली ॥

केशपाशः, पुं, (केशानां पाशः समूहः ।) केशसमूहः । यथा,—
"पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे" ॥
इत्यमरः । २ । ६ । ९८ ॥ (यथा, कुमारे । १ । ४८ ।
"तं केशपाशं प्रसमीक्ष्य कुर्य्यु-
र्वालप्रियत्वं शिथिलं चमर्य्यः" ॥)

केशपाशी, स्त्री, (केशपाश + स्वाङ्गात् ङीष् ।) शिरोमध्यस्थशिखा । चूडा । इत्यमरः । २ । ६ । ९७ ॥

केशभूः, पुं, (केशानां भूरुत्पत्तिस्थानम् ।) शिरः । इति राजनिर्घण्टः ॥

केशमथनी, स्त्री, ( केशा मथ्यन्तेऽनया । मन्थ विलोडने + करणे ल्युट् ततो ङीप् । अस्याः कण्टकैः समीपं गन्तुः केशोत्पाटनात् तथात्वम् ।) शमीवृक्षः । इति राजनिर्घण्टः ॥

केशमार्जकं, क्ली, ( केशं मार्ष्टि । मृज शोधने + कर्त्तरि ण्वुल् । ) कङ्कतिका । इति जटाधरः । चिरुणी इति भाषा ॥

केशमार्जनं, क्ली, (केशो मृज्यतेऽनेन । मृज् + करणे ल्युट् वृद्धिश्च ।) कङ्कतिका । इति हेमचन्द्रः । केशशुद्धिश्च । (भावे ल्युट् । केशशोधनक्रियामात्रम् ॥)

केशमुष्टिः, पुं, (केशानां मुष्टिरिव ।) विषमुष्टिवृक्षः । महानिम्बः । इति राजनिर्घण्टः ॥

केशरः, पुं क्ली, (के जले पद्मशिरसि वा । सरतीति । सृ + अच् । पृषोदरात् शत्वम् । यद्वा केश इव केशाकारः अस्यास्तीति । केश + रः ।) किञ्जल्कः । इत्यमरः । १ । १० । ४३ ॥

केशरः, पुं, (केश इव केशाकृतिपदार्थः अस्यास्तीति मत्वर्थीयो रः ।) नागकेशरवृक्षः । (यथा,—गीतगोविन्दे । १ । ३१ । "मदनमहीपतिकनकदण्डरुचिकेशरकुसुमविकाशे" ॥ वकुलवृक्षः । (यथा, कुमारे । ३ । ५५ ।
"स्रस्तां नितम्बादवलम्बमाना
पुनः पुनः केशरदामकाञ्चीम्" ॥)
पुन्नागवृक्षः । (यथा, महाभारते । १ । १२५ । ३ ।
"पलाशैस्तिलकैश्चूतैश्चम्पकैः पारिभद्रकैः ।
कर्णिकारैरशोकैश्च केशरैरतिमुक्तकैः" ॥)
सिंहजटा । इति मेदिनी ॥ (यथा, कादम्बर्य्याम् "मृगपतिरिव स्कन्धावलम्बितकेशरमालः" ॥) हिङ्गुवृक्षः । इत्यमरटीकायां भरतः ॥ नीपः । केलिकदम्ब इति भाषा । यथा, मेघदूते । २२ ।
"नीपं दृष्ट्वा हरितकपिशं केशरैरर्द्धरूढ़ैः" ॥)

केशरञ्जनः, पुं, (केशान् रञ्जयति । रन्ज + णिच् + ल्युः ।) भृङ्गराजवृक्षः । इति राजनिर्घण्टः । भीमराज इति भाषा ॥

केशराजः, पुं, (केशो राजतेऽनेन । राज + करणे घञ् ।) शाकभेदः । केशुरे इति भाषा । तत्पर्य्यायः । भृङ्गराजः २ भृङ्गः ३ पतङ्गः ४ मार्करः ५ । इति रत्नमाला ॥ मार्कवः ६ । इत्यमरः ॥ नागमारः ७ पवनः ८ भृङ्गसोदरः ९ । इति त्रिकाण्डशेषः ॥ केशरञ्जनः १० वीर्य्यः ११ । कुन्तलवर्द्धनः १२ । इति वैद्यकम् ॥ अङ्गारकः १३ एकरजः १४ करञ्जकः १५ भृङ्गरजः १६ भृङ्गारः १७ । इति जटाधरः ॥ अजागरः १८ भृङ्गरजाः १९ मधारः २० । इति शब्दरत्नावली ॥ अपि च ।
"भृङ्गराजो भृङ्गरजो मार्कवो भृङ्ग एव च ।
अङ्गारकः केशराजो भृङ्गारः केशरञ्जनः ॥
भृङ्गराजः कटुस्तिक्तो रूक्षोष्णः कफवातनुत् ।
केश्यस्त्वच्यः कृमिश्वासकासशोथामयापहृत् ॥
दन्त्यो रसायनो बल्यः कुष्ठनेत्रशिरोऽर्त्तिनित्" ॥
इति भावप्रकाशः ॥ अस्य गुणाः । अग्निकारित्वम् । केशवर्द्धितत्वम् । पाण्डुकफापहत्वम् । रसायनत्वञ्च । इति राजवल्लभः ॥

केशराम्लः, पुं, (केशरे तदवच्छेदे अम्लरसो यस्य ।) मातुलुङ्गकवृक्षः । इति जटाधरः ॥

केशरी, [न्] पुं, (केशराः सन्त्यस्य इति इनिः ।) सिंहः । इत्यमरः । २ । ५ । १ ॥ (यथा, रघुवंशे २ । २९ ।
"स पाटलायां गवि तस्थिवांसं
धनुर्द्धरः केशरिणं ददर्श" ॥)
घोटकः । पुन्नागवृक्षः । नागकेशरवृक्षः । इति मेदिनी ॥ वीजपूरकवृक्षः । इति जटाधरः ॥

केशरुहा, स्त्री, (केश इव रोहति अच् । केशरुह + "इगुपधेति" । ३ । १ । १३५ । इति कः ।) महदन्तिकावृक्षः । इति राजनिर्घण्टः ॥

केशरूपा, स्त्री, (केशवद्रूपमस्याः ।) वन्दाकवृक्षः । इति राजनिर्घण्टः । (परगाछा इति भाषा ॥)

केशवः, पुं, (को ब्रह्मा ईशः रुद्रः तौ आत्मनि स्वरूपे वयति प्रलये उपाधिरूपमूर्त्तिद्वयं मुक्ता एकमात्रपरमात्मस्वरूपेणावतिष्ठते इति । यथा, भागवते २ अध्याये चतुःश्लोक्याम् ।
"अहमेवासमेवाग्रे नान्यद् यत् सदसत् परम् ।
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ।
ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि
तद्विद्यादात्मनो मायां यथाभासो यथातमः ॥
यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु ।
प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ॥
एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनात्मनः ।
अन्वयव्यतिरेकाभ्यां यत् स्यात् सर्व्वत्र सर्व्वदा ॥
एतन्मतं समातिष्ठ परमेण समाधिना ।
भवान् कल्पविकल्पेषु न विमुह्यति कर्हिचित्" ॥
तथा, केशं केशिनं वाति हन्ति । केश + वा + कः । यथा, हरिवंशे । ८० । ६६ ।
"यस्मात्त्वया हतः केशी तस्मान्मच्छासनं शृणु ।
केशवो नाम नाम्ना त्वं ख्यातो लोके भविष्यसि" ॥
यद्वा, के जले शववत् भातीति । प्रलयकाले क्षीरोदशायितया तथात्वम् । कश्च अश्च ईशश्च ते केशा ब्रह्मविष्णुरुद्राः नियम्यतया सन्त्यस्य । यद्वा, कश्च ईशश्च तौ केशौ पुत्रपौत्रत्वेन भवतोऽस्य । "केशाद्वोऽन्यतरस्याम्" । ५ । २ । १०९ ।

इति वशब्दयः। अथवा वाति गच्छति तद्वत्तया। वा+कः। अखण्डमतत्त्वेवां भेदाभावादपि वासुदेवे सर्व्वात्मनि परमेश्वरेऽस्य वृत्तिः। अतो विष्णुसंहितायाम्।

"नरसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः" ॥

किञ्च।

"त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः"॥ पूज्यपादैर्भाष्यकृद्भिरपि केशवशब्दस्य निरुक्तिद्वयमवलम्ब्य नामद्वयं समर्थितं तयोराद्ये। अभिरूपाः केशा यस्य स केशवः। कश्च अश्च ईशश्च केशास्त्रिमूर्त्तयस्ते वशे वर्त्तन्ते यस्य सः। केशिदानवहननाद्वा केशवः।

"यस्मात् त्वयैव दुष्टात्मा हतः केशी जनार्द्दन!

तस्मात् केशवनाम्ना त्वं लोके ख्यातो भविष्यसीति"॥ भागवतादिषु। द्वितीये। केशसंज्ञिताः सूर्य्यादिसंक्रान्ता अंशवः तद्वत्त्वेन केशवो वा।

"अंशवो ये प्रकाशन्ते मम ते केशसंज्ञिताः।

सर्व्वज्ञाः केशवं तस्मात् प्राहुर्म्मां द्विजसत्तमाः"॥ इति महाभारतम्। "अयः केशिनः"। इति श्रुतेश्च ब्रह्मविष्णुशिवाख्या हि शक्तयः केशसंज्ञिताः। "मत्केशा वसुधातले" इति भागवते च। यथा, हरिवंशोक्तौ,—

"को ब्रह्मेति समाख्यातः ईशोऽहं सर्व्वदेहिनाम्।

आवां तवांशसम्भूतौ तस्मात् केशवनामवान्"॥ तेनास्य बहुधा निरुक्तिः।) विष्णुः। इत्यमरः। १।१।१८॥ पुन्नागवृक्षः॥ (केशाः प्रशस्ताः सन्त्यस्य। "केशाद्वोऽन्यतरस्याम्"। ५।२।१०९। इति वः।) केशवति त्रि। इति मेदिनी॥ (जलस्थशवदेहः। यथा, विदग्धमुखमुण्डनम्।

"केशवं पतितं दृष्ट्वा द्रोणो हर्षमुपागतः।

रुदन्ति पाण्डवाः सर्व्वे हा! हा! केशव! केशव!"॥

के जले शवं पतितं दृष्ट्वा द्रोणः काकः हर्षं प्राप्तवान् पाण्डवाः शृगालाः रुदन्ति चीत्कारं कुर्व्वन्तीत्यर्थः॥)

केशवर्द्धिनी, स्त्री, (केशाः वर्द्धन्तेऽनया। केश+वृध्+करणे ल्युट् टित्वात् ङीप्।) सहदेवीलता। इति राजनिर्घण्टः॥

केशवायुधः, (केशवस्य विष्णोरायुधाकारं मुकुलमस्य।) आम्रवृक्षः। इति शब्दमाला। (केशवस्य विष्णोः आयुधं अस्त्रम्। इति विग्रहे पुं, विष्णोरस्त्रे, क्ली॥)

केशवालयः, पुं, (केशवस्य आलयः वासस्थानम्।) अश्वत्थवृक्षः। इति त्रिकाण्डशेषः॥

केशवावासः,पुं, (आवसत्यस्मिन् इति। आ+वस्+अधिकरणे घञ्।) केशवस्य आवासः अश्वत्थवृक्षः। इति जटाधरः॥

केशवेशः, पुं, (केशस्य कुन्तलस्य वेशः बन्धनरूपवेशादिभिर्विन्यास इति यावत्।) कवरी। इत्यमरः॥ चुलेरखोँपा इति भाषा। (यथा, आश्वलायनगृह्ये। १।१७।१७। "कुलधर्म्मं केशवेशान् कारयेत्"। "एकशिखस्त्रिशिखः पञ्चशिखो वा" इति बौधायनः। "पूर्व्वशिखः परशिखः" इति कुलधर्म्माः। "तेषु यो यस्य कुलधर्म्मः तेन तस्य केशसन्निवेशान् कारयेत्" इति नारायणोक्तिः॥)

केशहन्त्री, स्त्री, (केशस्य हन्त्री नाशिनी। यद्वा केशान् हन्ति या। केश+हन्+तृच् ततो ङीप्।) शमीवृक्षः॥ इति राजनिर्घण्टः॥

केशहस्तः, पुं, (केशानां केशस्य वा हस्तः समूहः। हस्तादयश्च केशात् समूहार्थे।) केशसमूहः। इत्यमरः॥

केशाकेशि,क्ली, केशेषु केशेषु गृहीत्वा प्रवृत्तं युद्धम्। ("तत्र तेनेदमिति सरूपे"। २।२।२७। इति कर्म्मव्यतिहारे इच् समासे पूर्व्वदीर्घः।) अन्योन्यकेशग्रहणपूर्व्वकप्रवृत्तयुद्धम्। इति व्याकरणम्॥ चुलाचुलि इति भाषा।

(यथा, महाभारते। ३।२८३।३७।

"केशाकेश्यभवद्युद्धं रक्षसां वानरैः सह"॥)

केशारुहा,स्त्री,(केशा आरोहन्त्यनया। आ+रुह+करणे घञर्थे कः।) सहदेवीलता। इति राजनिर्घण्टः॥

केशार्हा, स्त्री, (केशं केशवर्गं अर्हति इति। केश+अर्ह+"कर्म्मण्यण्"। ३।२।१। इति अण्।) महानीली। इति राजनिर्घण्टः॥

केशिकः, त्रि, (प्रशस्तः केशः अस्यास्तीति ठन्।) प्रशस्तकेशयुक्तः। इत्यमरः। २।६।४५॥

केशिका, स्त्री, (केशीव कायति प्रकाशते। केशिन् कै+कः।) शतावरी। इति राजनिर्घण्टः॥

केशिनिसूदनः, पुं, (केशीत्याख्यः दानवः कंसासुरचरस्तं निसूदयति हन्ति। नि+सूद्+कर्त्तरि ल्युः।) श्रीकृष्णः। (यथा, गीतायां १८।१।

"सन्न्यासस्य महाबाहो! तत्त्वमिच्छामि वेदितुम्।

त्यागस्य च हृषीकेश! पृथक् केशिनिसूदन!"॥

केशिदानववधविवरणं हरिवंशे ८० अध्याये दृश्यम्।)

केशिनी, स्त्री, (केशाकाराः सन्त्यस्याः।) जटामांसी। इति राजनिर्घण्टः॥ चोरपुष्पी। प्रशस्तकेशविशिष्टा। इत्यमरः। २।६।४५॥

केशिसूदनः, पुं, (केशिनं तदाख्यया प्रसिद्धं दैत्यं सूदयतीति। केशिन्+सूद+कर्त्तरि ल्युः।) श्रीकृष्णः। इति त्रिकाण्डशेषः॥ (केशिदानव वधविवरणं हरिवंशे ८० अध्याये द्रष्टव्यम्॥)

केशिहा, [न्] पुं, (केशिनं हतवान्। हन्+क्विप्) श्रीकृष्णः। इति हेमचन्द्रः॥

केशी, [न्] त्रि, (प्रशस्ताः केशाः सन्त्यस्य।) प्रशस्तकेशयुक्तः। इत्यमरः। २।६।४५॥

केशी, [न्] पुं, (केशः सर्व्वेषां शासिरस्यास्तीति।) विष्णुः। इति त्रिकाण्डशेषः॥ दैत्यभेदः। इति मेदिनी॥ (यथा, हरिवंशे। ८०।६५।

"यस्मात्त्वया हतः केशी तस्मात् मच्छासनं शृणु।

केशवो नाम नाम्ना त्वं ख्यातो लोके भविष्यसि"॥

केशाः केसराः सन्त्यस्य।) सिंहः। इति शब्दरत्नावली॥

केशी, स्त्री, (केश+स्त्रियां गौरादित्वात् ङीष्।) नीली। इति राजनिर्घण्टः॥ भूतकेशीवृक्षः॥ अजलोमावृक्षः। इति रत्नमाला॥

केशोच्चयः, पुं, (केशानां उच्चयः समूहः।) केशसमूहः। इति हेमचन्द्रः॥

केश्यं, क्ली, (केशाय हितं इति यत्।) कृष्णागुरु। भृङ्गराजे, पुं। इति राजनिर्घण्टः॥ (केशहितकारके, त्रि॥)

कसेरं, क्ली, (के जले सरतीति। सृ+अच्।) हिङ्गुः इति हेमचन्द्रः॥ नागकेसरपुष्पम्। कासीसम्। स्वर्णम्। इति राजनिर्घण्टः॥

केसरः, पुं, (के कण्ठशिरोऽवच्छेदे उच्छ्रितदेशे इत्यर्थः सरति। सृ+अच्।) नागकेशरवृक्षः। तुरङ्गस्कन्धकेशः। (यथा, रघुवंशे। ४।६७।

"विनीताध्वश्रमास्तस्य सिन्धुतीरविचेष्टनैः।

दुधुवुर्वाजिनः स्कन्धान् लग्नकुङ्कुमकेसरान्"॥)

सिंहस्कन्धकेशः। (यथा, पञ्चतन्त्रे। १।२०४।

"व्याकीर्णकेसरकरालमुखा मृगेन्द्रा

नागाश्च भूरि मदराजि विराजमानाः"॥)

वकुलवृक्षः। (यथा, रघुवंशे। ९।३६।

"ललितविभ्रमबन्धविचक्षणं

सुरभिगन्धपराजितकेसरम्"॥)

पुन्नागवृक्षः। किञ्जल्कः। इति हेमचन्द्रः॥

केसरः, पुं क्ली, (के जले सरतीति। सृ+पचाद्यच्। हलदन्तादिति अलुक्समासः।) किञ्जल्कः। हिङ्गुनि, पुं स्त्री। इति रभसः॥

केसरवरं, क्ली, (केसरेषु वरं श्रेष्ठं गुणाधिक्यात्। यद्वा, केसरेण किञ्जल्केन वृणोतीति। वृ+अच्।) कुङ्कुमम्। इति राजनिर्घण्टः॥

केसराम्लः, पुं, (के जलनिमित्तकः सरः अम्लः तत्र सो यस्य।) वीजपूरः। इति राजनिर्घण्टः॥

केसरिका, स्त्री, (के जले सरति खाद्यतया साधुकारितया वा। वुन् अलुक्समासः। ततष्टाप् अत इत्वम्।) सहदेवीलता। इति राजनिर्घण्टः॥

केसरिसुतः, पुं, (केसरी स्वनामख्यातो वानरभेदः तस्य सुतः पुत्त्रः।) हनूमान्। इति हेमचन्द्रः॥ (यथा, महाभारते ३।१४७।२७।

"अहं केसरिणः क्षेत्रे वायुना जगदायुना।

जातः कमलपत्राक्ष! हनूमान् नाम वानरः"॥)

केसरी, [न्] पुं, (केसराः जटाः सन्त्यस्य। केसर+इनिः।) सिंहः। घोटकः। पुन्नागः। नागकेशर। इति मेदिनी॥ रक्तशिग्रुः। इति राजनिर्घण्टः॥ वानरविशेषः। स तु हनूमत्पिता।

(यथा, रामायणे। ७।४०।१९।

"सूर्य्यदत्तवरः स्वर्णः सुमेरुर्नाम पर्व्वतः।

यत्र राज्यं प्रशास्त्यस्य केसरी नाम वै पिता"॥)

कै, शब्दे। इति कविकल्पद्रुमः॥ (भ्वां-परं-अकं-अनिट्।) कायति। एषामादन्तत्वेन दिवादौ पाठेऽपीष्टसिद्धौ आदावैकारान्तत्वेन पाठो गणकृतमनित्यमिति ज्ञापयति। तेन अयधातोरात्मनेपदानित्यत्व प्रायो लुकि च व्योर्लोप इति यत्नोऽपि अयधातौ परे उपसर्गरेफो न इति वक्तव्यात् पराशब्दस्य रेफस्य लकारे "एष कालः समुत्पन्नो यः पलाति स जीवति" इति सिद्धम्। वेदेषु कारवा-

भेदार्थौ भादौ पाठ इति केचित्। इति दुर्गादासः॥

कैकयी, स्त्री, (जनपदात् क्षत्त्रियात् अञ्। यद्वा, केकय + स्वार्थे अण्। कैकय + बाहुलकात् न यादे रियादेशः। तस्यापत्यं स्त्री ङीप्।) केकयी। इति शब्दरत्नावली॥

कैकेयी, स्त्री, (कैकेयः केकयराजः तस्यापत्यं स्त्री ङीप्।) केकयी। सा तु केकयराजकन्या दशरथराजपत्नी च। इति शब्दरत्नावली॥
(यथा, रघौ १२।२।
"तं कर्णमूलमागत्य रामे श्रीर्न्यस्यतामिति।
कैकेयीशङ्कयेवाह पलितच्छद्मना जरा"॥)

कैङ्कर्य्यं, क्ली, (किङ्करस्य भावः किङ्करस्येदं किङ्करस्य कर्म्म वा। किङ्कर + ष्यञ्।) किङ्करत्वम्। दासत्वम्॥ (यथा, भागवते। ३।२।२२।
"सत् तस्य कैङ्कर्य्यमलं भृतान् नो
विग्लापयत्यङ्ग! यदुग्रसेनम्"॥)

कैटजः, पुं, (कुटज एव स्वार्थे अण् वृद्धिः। पृषोदरात् औकारस्य ऐकारत्वम्।) कुटजवृक्षः। इति भावप्रकाशः॥

कैटभः, पुं, स्वनामख्यातो दैत्यविशेषः॥ (अयन्तु विष्णोःकर्णमलोद्भूतयोरसुरयोरन्यतरः। पाद्मकल्पे जातः सन् एकार्णवे योगनिद्रायां स्थितस्य भगवतो नाभिपद्मादाविर्भूतं कमलयोनिं ब्रह्माणं यदा हन्तुमुद्यतः तदा योगनिद्रां विहाय समुत्थितेन भगवता जघनोपरि समुत्थाप्य निहतोऽयं दुर्द्दान्तोऽसुरः।) यथा,— मार्कण्डेयपुराणम्।
"योगनिद्रां यदा विष्णुर्जगत्येकार्णवीकृते।
आस्तीर्य्य शेषमभजत् कल्पान्ते भगवान् प्रभुः॥
तदा द्वावसुरौ घोरौ विख्यातौ मधुकैटभौ।
विष्णुकर्णमलोद्भूतौ हन्तुं ब्रह्माणमुद्यतौ"॥
(एतस्योत्पत्त्यादिकं सविस्तरं हरिवंशे ५२ अध्याये दर्शनीयम्॥)

कैटभजित्, पुं, (कैटभं स्वनामख्यातमसुरं जितवान्। जि + भूते क्विप्। तुगागमश्च।) विष्णुः। इत्यमरः॥ (अस्य विवरणं हरिवंशे ५२ अध्याये द्रष्टव्यम्॥)

कैटभहा, [न्] पुं, (कैटभं स्वनामख्यातं महासुरं हन्ति हतवान् वा। हन् + क्विप् भूते।) विष्णुः। इति हेमचन्द्रः॥ (स च सर्व्वशक्तिर्भगवान् स्वरूपतो निर्गुणोऽपि सृष्ट्यादिकार्य्यसम्पादनार्थं गुणाधिष्ठातृत्वमभ्युपैति, तत्र तु यदा जीवादृष्टवशात् यद्यद्गुणोद्रेकात्मिका क्रियाशक्तिरुपतिष्ठते नितरां गुणाधिष्ठातृकतया भगवानपि तदा तत्तद्गुणोपयोगिक्रियावानिव प्रतिभाति। परं देहाभिमानवतां जीवानामिव तस्य प्रकृतेरुद्रिक्तगुणे मनो न ह्यासज्जते हृषीकेशत्वात् गुणानियन्तृत्वादित्यर्थः देहाभिमानराहित्याच्च। अत एव स कैटभजिन्मधुजिदित्याद्युपाधिकतयोच्यते वस्तुतस्तु जीवैर्यत् किञ्चित् क्रियते तत् सर्व्वमेव गुणपरतन्त्रैरवशत एव। ईश्वरस्य तु भृत्या इव गुणा स्वाधीनाः सन्तः तदाज्ञयैव क्रिया उत्पादयन्ति सम्पादयन्ति च॥)

कैटभा, स्त्री, (कूटा गुणास्तत्कार्य्यं सृष्ट्यादिकं कैटं। कूट + अण् वृद्धिः पृषोदरात् औकारस्य ऐकारत्वं। तेन तैर्वा भाति प्रकाशते या। भा + क्विप्।) दुर्गा। इति त्रिकाण्डशेषः॥

कैटभारिः, पुं, (कैटभस्य स्वनामख्यातस्यासुरभेदस्य अरिः शत्रुः। पक्षे कैटभस्य तमसः अरिर्दमयिता। सगुणावस्थायामपि ईश्वरस्य विष्णोः सत्त्वगुणप्राधान्यात् तथात्वम्।) विष्णुः। इति हलायुधः॥

कैटभी, स्त्री, (कैटभं तदाख्यया प्रसिद्धं असुरं प्रति इः हननक्रियारूपतेजःप्रकाशोऽस्याः।) यद्वा, कूटं तमःप्रधानभावमधिष्ठाय तामसी प्रकृतिरिति विश्रुता देवकार्य्यसाधनानुरोधात् तद्वत्तया भातीति। कूट + अणि वृद्धौ कौटं पृषोदरात् औकारस्य ऐकारत्वं कैटं भा + कः। ततो ङीप् कैटभी तामसीत्यर्थः॥) दुर्गा। इति त्रिकाण्डशेषः। (मधुकैटभौ तद्ब्रह्मणस्तुत्या प्रसादिततया तामस्या विमोहितौ तौ दुर्द्दान्तावसुरौ विष्णुना निहतौ। यथा, मार्कण्डेयपुराणे देवीमाहात्म्ये ८१ अध्याये।
"एवं स्तुता तदा देवी तामसी तत्र वेधसा।
विष्णोः प्रबोधनार्थाय निहन्तुं मधुकैटभौ॥
नेत्रास्यनासिकाबाहुहृदयेभ्यस्तथोरसः।
निर्गम्य दर्शने तस्थौ ब्रह्मणोऽव्यक्तजन्मनः"॥
इत्युपक्रम्य।
"समुत्थाय ततस्ताभ्यां युयुधे भगवान् हरिः।
पञ्चवर्षसहस्राणि बाहुप्रहरणो विभुः॥
तावप्यतिबलोन्मत्तौ महामायाविमोहितौ।
उक्तवन्तौ वरोऽस्मत्तो व्रियतामिति केशवम्"॥)

कैटभेश्वरी, स्त्री, (कैटभस्य कैटभपुर्य्या ईश्वरी कर्त्री। पक्षे कैटभस्य तमोगुणस्य ईश्वरी नियन्त्री।) दुर्गा। यथा।
"कैटभन्तु वशं कृत्वा गृहीता तत्पुरी यथा।
तेन सा गीयते देवी पुराणे कैटभेश्वरी"॥
इति देवीपुराणे ४५ अध्यायः॥

कैटर्य्यः, पुं, (किट् त्रासे + भावे घञ्। केटं त्रासं राति ददाति तिक्तादीनामातिशय्यात्। रा दाने + कः। ततः स्वार्थे ष्यञ्।) कट्फलः। इत्यमरः। २।४।४०॥ निम्बः। महानिम्बः। इति रत्नमाला॥ मदनवृक्षः। इति राजनिर्घण्टः॥

कैडर्य्यः, पुं, (कैटर्य्य + पृषोदरात् डत्वे साधुः।) कट्फलः। पूतिकरञ्जः। कटभीवृक्षः। इति राजनिर्घण्टः॥

कैतकं, क्ली, (केतक्या इदं "तस्येदम्"।४।३।१२०। इत्यण्) केतकीपुष्पम्। यथा। कैतकं तिक्तकटुकमिति राजवल्लभः॥

कैतवं, क्ली, (कितव + स्वार्थे अण्।) कपटः। (कितवस्य भावः कर्म्म वा। युवादित्वादण्।) द्यूतः। इत्यमरः।२।१०।४५॥ वैदूर्य्यमणिः। इति राजनिर्घण्टः॥ (कितवस्य भावः। कपटता। यथा, भागवते १।१।२। "धर्म्मः प्रोज्झितकैतवोऽत्रपरमो निर्म्मत्सराणां सतां वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम्"॥)

कैदारं, क्ली, (केदाराणां क्षेत्राणां समूहः। इति अण्।) क्षेत्रसमूहः। इत्यमरटीकायां भरतः॥ (केदारे क्षेत्रे प्रयत्नेनाणीतं यच्छालं तत्कैदारम्। तद्गुणादिकमुक्तं भावप्रकाशे यथा—
"केदारं क्षेत्रमुद्दिष्टं कैदारं तज्जलं स्मृतम्।
कैदारं वार्य्यभिष्यन्दि मधुरं गुरुदोषकृत्"॥)

कैदारः, पुं, (केदारे क्षेत्रे भवः इत्यण्।) शालिधान्यम्। इति राजनिर्घण्टः॥ (केदारसम्बन्धिनो ये ते कैदारा इत्यर्थः। यथा, भावप्रकाशे।
"कैदारा वातपित्तघ्ना गुरवः कफशुक्रलाः।
कषाया अल्पवर्च्चस्का मेध्याश्चैव बलावहाः"॥)

कैदारकं, क्ली, (केदाराणां समूहः केदारस्य इदं वा। केदार + वुञ्।) केदारसमूहः। क्षेत्रगणः। इत्यमरः। २।९।११॥

कैदारिकं, क्ली, (केदाराणां समूहः केदारे भवं तस्येदं वा। केदार + ठञ्।) कैदारकम्। इत्यमरः। २।९।११॥

कैदार्य्यं, क्ली, (केदाराणां समूहः। केदार + ष्यञ्।) क्षैत्रम्। क्षेत्रसमूहः। इत्यमरः। २।९।११॥

कैमुतिकः, पुं, (किमुत इत्यव्ययं तस्मात् आगतः। ठक्।) न्यायविशेषः। तथा च छन्दोगपरिशिष्टम्।
"वेदाश्छन्दांसि सर्व्वाणि ब्रह्माद्याश्च दिवौकसः।
जलार्थिनोऽथ पितरो मरीच्याद्यास्तथर्षयः॥
उपाकर्म्मणि चोत्सर्गे स्नानार्थं ब्रह्मवादिनः।
पियासूननुगच्छन्ति संहृष्टा स्वशरीरिणः॥
समवायश्च यत्रैषां तत्रान्ये बहवो मलाः।
नूनं सर्व्वे क्षयं यान्ति किमुतैकं नदीरजः"॥
इति प्रायश्चित्ततत्त्वम्॥

कैरवं, क्ली, (के जले रौति कलनादं करोतीति। क + अच् केरवः हंसः तत्पुरुषे कृतीत्यलुक्। तस्य प्रियमित्यण्।) कुमुदम्। श्वेतोत्पलम्। इत्यमरः। १।१०।३७॥ (यथा, महाभारते १।१।८६।
"पुराणपूर्णचन्द्रेण श्रुतिज्योत्स्नाः प्रकाशिताः।
नृबुद्धिकैरवाणाञ्च कृतमेतत् प्रकाशनम्"॥)

कैरवः, पुं, (कुत्सितो रवो यस्य स एव स्वार्थे अण्। पृषोदरात् औकारस्य ऐकारत्वम्।) शत्रुः। कितवः। इति मेदिनी॥

कैरविणी, स्त्री, (कैरव पुष्करादित्वात् इनिः। ततो ङीप्।) कुमुदिनी। इति शब्दरत्नावली॥ (कैरवाणि सन्त्यस्यां इति इनि ङीप् च। कुमुदयुक्ता पुष्करिणी॥)

कैरवी, स्त्री, (कैरवस्य प्रिया इत्यण् ङीप् च।) चन्द्रिका। इति मेदिनी॥ मेथिका। इति राजनिर्घण्टः॥

कैरवी, [न्] पुं, (कैरवं प्रियत्वेन प्रकाश्यत्वेन वा अस्त्यस्य इति इनिः।) चन्द्रः। इति शब्दमाला॥

कैराटकः, पुं, (किरं पर्य्यन्तभूमिं चरमावस्थां मृत्युदशामित्यर्थः अटति प्राप्नोति यस्मात्। किर + अट् + अच्। ततः स्वार्थे कन् अण् च।) स्थावरविषभेदः। इति हेमचन्द्रः॥

कैरातं, क्ली, (किराते पर्य्यन्तभूमौ भवं इत्यण् ।) भूनिम्बः । इति शब्दचन्द्रिका ॥ शम्बरचन्दनम् । इति राजनिर्घण्टः ॥

कैरातः, पुं, (किराते पर्य्यन्तभूमौ भवः । इत्यण् ।) भूनिम्बः । इति राजनिर्घण्टः ॥ (किरात इव शूरः इवार्थे अण् ।) बलवान् पुरुषः । तत्पर्य्यायः । दीर्घः २ श्यामः ३ । इति हारावली ॥ (किरातस्य वेश इव वेशो यस्य । अर्श आद्यच् ततः स्वार्थे अण् । किरातवेशधारिणि, त्रि । यथा, महाभारते १ । २ । ५० ।
"ईश्वरार्ज्जुनयोर्युद्धं पर्व्वकैरातसंज्ञितम्" ॥
तथा, मनसाध्याने । "कैरातीं वरदाभयोद्यतकरां देवीं त्रिनेत्रां भजे" ॥)

कैराणं, क्ली, ( किरं पर्य्यन्तभूमिं अणति पर्य्याप्नोतीति । अण + "कर्म्मण्यण्" इत्यण् । ततः स्वार्थे अण् ।) विड़ङ्गम् इति वैद्यकम् ॥

कराणी, स्त्री, (कैराण + स्त्रियां गौरादित्वात् ङीष ।) विड़ङ्गा । इति राजनिर्घण्टः ॥

कैलासः, पुं, (के जले लासो लसनं दीप्तिरस्य । "हलदन्तात् सप्तम्याः" । ६ । ३ । ९ । इति अलुक् केलासः स्फटिकमणिः तद्वत् शुभ्रः इत्यण् । यद्वा, केलीनां समूहः । कैलं । "तस्य समूहः" । ४ । २ । ३७ । इत्यण् इत्यञ्च । कैलेनास्यतेऽत्र । आस् + अधिकरणे घञ् ।) स्वनामख्यातपर्व्वतः । इत्यमरः । १ । २ । ७४ ॥ स च शिवकुबेरयोः स्थानम् । तस्य परिमाणं यथा । "जठरदेवकूटौ मेरोः पूर्व्वेणाष्टादशयोजनसहस्रमुदगायतौ द्विसहस्रं पृथुतुङ्गौ भवतः । एवमपरेण पवनपारियात्रौ दक्षिणेन कैलासकरवीरौ प्रागायतौ" । इति श्रीभागवतम् ॥ (अयं हि दक्षसंहितायां कूर्म्मविभागे उत्तरस्यामुक्तः ॥)

कैलासनिकेतनः, पुं, (कैलासः निकेतनं यस्य ।) शिवः । इति कविकल्पलता ॥

कैलासौकाः, [ स् ] पुं, (कैलासः ओकः स्थानं आलयोऽस्य ।) कुबेरः । इति हेमचन्द्रः ॥

कैवर्त्तः, पुं, (के जले वर्त्तते । वृत् + अच् अलुक् समासः । ततः स्वार्थे अण् ।) स्वनामख्यातवर्णसङ्करजातिः । स तु वैश्यागर्भे क्षत्रियस्यौरसजातः । इति ब्रह्मवैवर्त्तपुराणम् ॥ तत्पर्य्यायः । दासः २ धीवरः ३ । इत्यमरः । १।१०।१५ ॥ दाशेरकः ४ जालिकः ५ । इति जटाधरः ॥ (यथा, मनुः । १० । ३४ ।
"निषादो मार्गवं सूते दासं नौकर्म्मजीविनम् ।
कैवर्त्तमिति यं प्राहुरार्य्यावर्त्तनिवासिनः" ॥
अस्य टीकायां कुल्लूकभट्टेन यदुक्तं तद्यथा ।
"ब्राह्मणेन शूद्रायां जातो निषादः प्रागुक्तः प्रज्ञातायामायोगव्यां मार्गवं दाशापरनामानं नौव्यवहारजीविनं जनयति । यमार्य्यावर्त्तदेशवासिनः कैवर्त्तशब्देन कीर्त्तयन्ति" ॥)

कैवर्त्तमुस्तं, क्ली, (के जले जलयुक्तभूमौ वर्त्तते जायते इति कैवर्त्तं ततः स्वार्थे अण् । कैवर्त्तं च तत् मुस्तञ्चेति कर्म्मधारयः ।) कैवर्त्तमुस्तकम् । इति शब्दरत्नावली ॥

कैवर्त्तमुस्तकं, क्ली, (कैवर्त्तमुस्त + स्वार्थे कन् । यद्वा कैवर्त्तस्य प्रियं मुस्तकम् ।) कैवर्त्तीमुस्तकम् । इत्यमरटीकायां भरतः ॥

कैवर्त्तिका, स्त्री, (कैवर्त्ती जलस्था इव । इवार्थे कन् ततो ह्रस्वः ।) मालवे प्रसिद्धो लताविशेषः । तत्पर्य्यायः । सुरक्ता २ लता ३ वल्ली ४ दशावला ५ रङ्गिणी ६ वक्षरक्ता ७ सुभगा ८ । अस्या गुणाः । लघुत्वम् । रुच्यत्वम् । कषायत्वम् । कफकासश्वासमन्दाग्निदोषनाशित्वञ्च । इति राजनिर्घण्टः ॥

कैवर्त्तिमुस्तकं, क्ली, (कैवर्त्त्याः कैवर्त्तपत्न्याः प्रियं मुस्तकम् । संज्ञायां "ङ्यापोः" । ६ । ३ । ६३ । इति वा ह्रस्वः ।) कैवर्त्तीमुस्तकम् । इत्यमरटीका ॥

कैवर्त्ती, स्त्री, (के जले वर्त्तते इति । वृत् + अच् । केवर्त्ता जलस्था सा एव इति स्वार्थे अण् ततो ङीप् ।) परिपेलम् । इति वैद्यकम् ॥ कैवर्त्तपत्नी च ॥

कैवर्त्तीमुस्तकं, क्ली, (कैवर्त्त्या कैवर्त्तपत्न्याः प्रियं मुस्तकम् । संज्ञायां "ङ्यापोः" । ६ । ३ । ६३ । इति विकल्पे ह्रस्वविधेरत्र ह्रस्वाभावः ।) मुस्ताप्रभेदः । इति भरतः ॥ केश्योटमुता इति भाषा । केशुर इति लोकोक्तिः । केशुरिया मुथा । इति सारसुन्दरी ॥ तत्पर्य्यायः । कुटन्नटम् २ दशपुरम् ३ वानेयम् ४ परिपेलवम् ५ प्लवम् ६ गोपुरम् ७ गोनर्द्दम् ८ इत्यमरः । २ । ४ । १३१ ॥ दाशपुरम् ९ दाशपूरम् १० दशपुरम् ११ दशपूरम् १२ परिपेलम् १३ पारिपेलम् १४ कैवर्त्तमुस्तकम् १५ कैवर्त्तिमुस्तकम् १६ । इति तट्टीका ॥ वनसम्भवम् १७ । इति रत्नकोषः ॥ धान्यम् १८ शीतपुष्पम् १९ जीर्णबुध्नकम् २० वन्यम् २१ सितपुष्पम् २२ । इति जटाधरः ॥ अस्य गुणाः । कटुत्वम् । उष्णत्वम् । कफवायुव्रणदाहाश्मशूलरक्तदोषनाशित्वञ्च । इति राजनिर्घण्टः ॥ हिमत्वम् । तिक्तत्वम् । कषायत्वम् । कान्तिदत्वम् । पित्तविसर्पकुष्ठकण्डुविषनाशित्वञ्च । इदन्तु विशुष्कनाम्नो वृक्षस्य त्वक् मुस्ताकृति ॥ इति भावप्रकाशः ॥

कैवलं, क्ली, (के शिरोऽवच्छेदे वलते संवृणोति केशादेः अतिसौरभ्यकरणात् के जले वलते गुणाधिक्यात् वर्द्धते वा । वल + अच् ततः स्वार्थे अण् ।) विड़ङ्गम् । इति रत्नमाला ॥ (केवलस्य भावः इति केवलशब्दात् ब्राह्मणादित्वात् ष्यञ् ॥)

कैवल्यं, क्ली, (केवलस्य सर्व्वोपाधिवर्ज्जितस्य भावः इति । केवल + ष्यञ् ।) मुक्तिः । इत्यमरः ।१।५।६॥ (तथा च पातञ्जले कैवल्यपादे ३ सूत्रं यथा,
"निमित्तमप्रयोजकं प्रकृतीनां
वरणभेदस्तु ततः क्षेत्रिकवत्" ॥
निमित्तं धर्म्मादि तत्प्रकृतीनामर्थान्तरपरिणामेन प्रयोजकं न हि कार्य्येण कारणं प्रवर्त्तते । वरणभेदस्तु ततः क्षेत्रिकवत् ततस्तस्मादनुष्ठीयमानाद् धर्म्मात् वरणमावरणकं अधर्म्मादि तस्यैव विरोधित्वात् भेदः क्षयः क्रियते तस्मिन् प्रतिबन्धे क्षीणे प्रकृतयः स्वयमभिमतकार्य्याय प्रभवन्ति । क्षेत्रिकवत् । यथा, क्षेत्रिकः कृषीवलः केदारात् केदारान्तरं जलं निनीषुर्जलप्रतिबन्धकावरणभेदमात्रं करोति । तस्मिन् भिन्ने जलं स्वयमेव प्रसररूपं परिणामं गृह्णाति न तु जलप्रसरणे तस्य कश्चित् प्रयत्नः । फलतः यावत् योगादिप्रभावेण अधर्म्मावरणभेदो न भवेत् तावत् कुतस्तत्त्वज्ञानं किञ्च यावत्तत्त्वज्ञानप्रभावात् सर्व्वा वासना न क्षयं यान्ति तावत् क्वैव कैवल्याशेति ध्येयम् । तथा च तत्रैव । ११ ।
"हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः" ॥
वासनानामनन्तरानुभवो हेतुस्तस्यानुभवस्य रागादयस्तेषामविद्येति साक्षात् पारम्पर्य्येण च हेतुः । फलं शरीरादि स्मृत्यादि च । आश्रयो बुद्धिरालम्बनं यदेवानुभवस्य तदेव वासनानामतः हेतुफलाश्रयालम्बनैरनन्तानामपि वासनानां संगृहीतत्वात्तेषां हेतूनामभावे ज्ञानयोगाभ्यां दग्धबीजकल्पत्वे विहिते निर्म्मूलत्वाच्च वासनाः प्ररोहं न यान्ति न वा कार्य्यमारभन्त इति तासामभावः ॥ अत्र भगवद्गीतायाम् । ४ । ३७ ।
"यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्ज्जुन ! ।
ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुते तथा" ॥
अतएव सत्त्वादिषु गुणेषु कृतार्थेषु भोगापवर्गादिलक्षणेषु पुरुषार्थेषु समाप्तेषु कैवल्यमित्येव सारसिद्धान्तवाक्यम् । यथा, पातञ्जले । ३३ ।
"पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति" ।
समाप्तभोगापवर्गलक्षणपुरुषार्थानां गुणानां यः प्रतिप्रसवः प्रतिलोमस्य परिणामस्य समाप्तौ विकारानुद्भव क्षणेषु यदि वा चिच्छक्तेर्वृत्तिसारूप्यनिवृत्तौ स्वरूपमात्रेऽवस्थानं तत् कैवल्यमुच्यते । इत्थं सर्व्वेष्वेव दर्शनेष्वधिष्ठातृत्वं विहाय नान्यदात्मनोरूपमुपपद्यते । अधिष्ठातृत्वञ्च चिद्रूपत्वं तच्च जड़ात् वैलक्षण्यमेव चिद्रूपतया यदधितिष्ठति तदेव भोग्यतां नयति यच्च चेतनाधिष्ठितं तदेव सकलव्यापारयोग्यं भवति । एवञ्च सति नित्यत्वात् प्रधानस्य व्यापारनिवृत्तौ यदात्मनः कैवल्यमस्माभिरुक्तं तद्विहाय दर्शनान्तराणां नान्या गतिः तस्मादिदमेव युक्तमुक्तं वृत्तिसारूप्यपरिहारेण स्वरूपे प्रतिष्ठा चितिशक्तेः कैवल्यम् । यथा,
"पुरुषस्य शान्तत्वमुक्त्वा चित्तद्वारेण सकलव्यवहारनिष्पत्तिमुपपाद्यपुरुषसत्त्वे प्रमाणमुपदर्श्य कैवल्यनिर्णयाय दशभिः सूत्रैः क्रमेणोपयोगिनोऽर्थानभिधाय शास्त्रान्तेऽप्येतदेव कैवल्यमित्युपपाद्य कैवल्यस्वरूपं निर्णीतम्" । परं जन्मौषधिमन्त्रसमाधिजन्यासु सिद्धिषु सतीष्वपि ज्ञानभक्त्यादियोगेन येन केनचिदुपायेन भगवदनुकम्पालाभ एव कैवल्योपायः । पातञ्जलदर्शनटीकाकृत् महाराजभोजाधीश्वरोऽप्येतदङ्गीकृत्य कैवल्यपादस्य टीकायां मङ्गलाचरणं कृतवान् । यथा,—
"यदाशयेव कैवल्यं विनोपायैः प्रजायते ।
तमेकमजमीशानं चिदानन्दमयं स्तुमः" ॥

ब्राह्मणयजुर्वेदान्तर्गतोपनिषद्विशेषः । यथा, मुक्तिकोपनिषदि । "कठवल्लीतैत्तिरीयक-ब्रह्मकैवल्यश्वेताश्वतरैत्युपक्रम्य ब्राह्मणयजुर्वेदगतानां द्वात्रिंशत्संख्याकानामुपनिषदां सहनाववत्विति शान्तिः" ॥)

कौशिकं, क्ली, ( केशानां समूहः । "केशाश्वाभ्यां यञ्छावन्यतरस्याम्" । ४ । २ । ४८ । इति पक्षे ठक् ।) केशसमूहः । इत्यमरः । २ । ६ । ९६ ॥

कौशिकः, पुं, ( केशेषु केशविन्यासादौ साधुः । केश + ठक् ।) शृङ्गाररसः । इति शब्दरत्नावली जटाधरश्च ॥

कौशिकी, स्त्री, (कौशिक + स्त्रियां ङीप् ।) नाटकवृत्तिविशेषः । यथा । "भारती सात्वती कैशिक्यारभट्यौ च वृत्तयः" ॥ इति हेमचन्द्रः ॥

कैशोरं, क्ली, (किशोरस्य भावः । किशोर + अण् ।) किशोरावस्था । इति शब्दरत्नावली ॥ सा तु दशमवर्षात्तरपञ्चदशवर्षावधिः । इति स्मृतिः ॥

कैश्यं, क्ली, (केशानां समूहः । इति ष्यञ् ।) केशसमूहः । इत्यमरः । २ । ६ । ९६ ॥

कोकः, पुं, (कोकते आदत्ते चन्द्रसुधामिति । कुक् आदाने + पचाद्यच् ।) चक्रवाकः । (यथा, गीतगोविन्दे ५ । १७ । "कोकानां करुणस्वनेन सदृशी दीर्घा मदभ्यर्थना" ॥) वृकः । (यथा, रामायणे । ५ । २६ । ९ । "वने यूथपरिभ्रष्टा मृगी कोकैरिवार्द्दिता" ॥) ज्येष्ठी । खर्ज्जूरीवृक्षः । भेकः । इति मेदिनी ॥ विष्णुः । इति त्रिकाण्डशेषः ॥

कोकड़ः, पुं, (कोकं कोकरवं वृकध्वनिवत् ध्वनिमित्यर्थः जाति ग्रह्णातीति । ला + कः । लस्य डत्वम् ।) विलेशयमृगविशेषः । तत्पर्य्यायः । अविनः २ कोकवाचः ३ विलेशयः ४ चमरपुच्छः ५ लोमशः ६ धूम्रवर्णकः ७ । तन्मांसगुणाः । श्वासानिलकासहरत्वम् । पित्तदाहकरत्वञ्च । इति राजनिर्घण्टः ॥

कोकदेवः, पुं, (कोकश्चक्रवाकः स इव दीव्यति क्रीड़तीति । दिव् + अच् ।) कपोतः । इति राजनिर्घण्टः ॥

कोकनदं, क्ली, (कोकान् चक्रवाकान् नदति नादयति आत्मविकाशेन । कोक + नद् + अन्तर्णीच् ततोऽच् मूलविभुजादित्वात् को वा ।) रक्तकुमुदम् । रक्तपद्मम् । इति मेदिनी ॥ (यथा, गीतगोविन्दे । १० । ५ । "नीलनलीनाभमपि तन्वि ! तव लोचनं धारयति कोकनदरूपम्" ॥ अस्य पर्य्याया यथा,— "रक्तं कोकनदं पद्ममप्यन्यदलोहितम्" ॥ इति वैद्यकरत्नमालायाम् ॥)

कोकनदच्छविः, पुं, (कोकनदस्य रक्तोत्पलस्य छविरिव छविर्दीप्तिर्यस्य ।) रक्तवर्णः । तद्वति त्रि । इत्यमरः ॥

कोकबन्धुः, पुं, (कोकयोः चक्रवाकयुगलयोर्दिवसप्रभया संयोगकारितया बन्धुरिव ।) सूर्य्यः । इति शब्दचन्द्रिका ॥

कोकाघः, पुं, (कोकः खर्ज्जूरीवृक्षस्तद्धृदयभागोऽस्य ।) समष्ठिलवृक्षः । इति राजनिर्घण्टः ॥

कोकाहः, पुं, (कोक इव आहन्ति वेगेन गच्छतीति । आ + हन् + डः ।) श्वेतघोटकः । तत्पर्य्यायः । कर्क्कः २ । इति हेमचन्द्रः ॥ क्वचित् पुस्तके काकाह इति पाठः ॥

कोकिलः, पुं, (कुक् आदाने + "सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच्" । उणां १ । ५५ । इति इलच् ।) स्वनामख्यातकृष्णवर्णमधुरस्वरपक्षी । (यथा, रामायणे । २ । ५२ । २ । "भास्करोदयकालोऽयं गता भगवती निशा । असौ सुकृष्णविहगः कोकिलस्तात ! कूजति" ॥) तत्पर्य्यायः । वनप्रियः २ परभृतः ३ पिकः ४ । इत्यमरः । २ । ५ । १९ ॥ परपुष्टः ५ कालः ६ वसन्तदूतः ७ ताम्राक्षः ८ गन्धर्व्वः ९ मधुगायनः १० वासन्तः ११ कलकण्ठः १२ कामान्धः १३ काकलीरवः १४ कुहूरवः १५ अन्यपुष्टः १६ मत्तः १७ मदनपाठकः १८ । इति राजनिर्घण्टः ॥ (अस्य गुणा यथा,—हारीते १ स्थाने ११ अध्याये । "कोकिलः श्लेष्मलो ज्ञेयः पित्तसंशमनस्तथा" ॥ मूषिककल्पान्तर्गतमूषिक-विष-जातीयविशेषः । तद्दंशनजनितलक्षणानि यथा,— "राज्यथः कोकिलेनोग्रा ज्वरो दाहश्च दारुणः" ॥ इति सुश्रुतेन कल्पस्थाने षष्ठाध्याय उक्तम् ॥) अङ्गारः । इति त्रिकाण्डशेषः । (छन्दोविशेषः । इति वृत्तरत्नाकरः ॥)

कोकिलनयनः, पुं, (कोकिलस्य नयनमिव रक्तवर्णं पुष्पमस्य ।) कोकिलाक्षवृक्षः । इत्यमरटीकायां रमानाथः ॥ (कोकिलाक्षशब्देऽस्य विवृतिर्ज्ञेया ॥)

कोकिलाक्षः, पुं, ( कोकिलस्याक्षीव रक्तं पुष्पमस्य । "अक्ष्णोऽदर्शनात्" । ५ । ४ । ७६ । इति अच् ।) वृक्षविशेषः । कुलियाखाड़ा इति भाषा । तालमखाना इति हिन्दी भाषा ॥ तत्पर्य्यायः । इक्षुगन्धा २ काण्डेक्षुः ३ इक्षुरः ४ क्षुरः ५ । इत्यमरः । २ । ४ । १०४ ॥ शृगाली ६ शृगालघण्टी ९ वज्रास्थिः १० शृङ्खला ११ वज्रकण्टकः १२ इक्षुः १३ इक्षुरकः १४ वज्रः १५ शृङ्खलीका १६ पिकेक्षणा १७ पिच्छिला १८ । इति राजनिर्घण्टः ॥ श्वेतस्य तस्य पर्य्यायः । वीरतरुः २ भिक्षुरः ३ क्षुरकः ४ शुक्लपुष्पः ५ ॥ रक्तस्य तस्य पर्य्यायः ॥ क्षुरकः २ अतिच्छत्रः ३ । इति रत्नमाला ॥ सामान्यस्य तस्य गुणाः । आमवातवातरक्तरोगनाशित्वम् । इति राजवल्लभः ॥ मधुरत्वम् । शीतत्वम् । पित्तातिसारनाशित्वम् । शुक्रकफवलदायिकारित्वम् । सन्तर्पणत्वञ्च । इति राजनिर्घण्टः ॥ (श्वेतकोकिलाक्षमूलं छागीदुग्धेन पिष्टं सत् भक्षितं क्षयरोगं नाशयेत् । यदुक्तं गारुडे १९३ अध्याये । "श्वेतकोकिलाक्षमूलं छागीक्षीरेण संयुतम् । त्रिसप्ताहेन वै पीतं क्षयरोगं क्षयं नयेत्" ॥)

कोकिलाक्षकः, पुं, (कोकिलाक्ष + स्वार्थे कन् ।) कोकिलाक्षवृक्षः । इत्यमरटीकायां स्वामी ॥ (यक्षिणस्य ववचारस्तद्यथा,— "कोकिलाक्षकनिर्य्यूहः पीतस्तच्छाकभोजिना । कृपाभ्यास इव क्रोधं वातरक्तं नियच्छति" ॥ इति वाभटे चिकित्सास्थाने २२ अध्याये ॥)

कोकिलावासः, पुं, (आवसत्यस्मिन् इति । आ + वस् + अधिकरणे घञ् । कोकिलानां आवासः ।) आम्रवृक्षः । इति राजनिर्घण्टः ॥

कोकिलेक्षुः, पुं, (कोकिल इव कृष्णवर्णा इक्षुः ।) कृष्णेक्षुः । इति राजनिर्घण्टः ॥

कोकिलेष्टा, स्त्री, (कोकिलस्य इष्टा प्रिया ।) महाजम्बूः । इति राजनिर्घण्टः ॥

कोकिलोत्सवः, पुं, (कोकिलानां उत्सवोऽत्र ।) आम्रवृक्षः । इति राजनिर्घण्टः ॥

कोङ्कणं, क्ली, (कोङ्कणे भवं कोङ्कणदेशस्थैः कर्म्मकारैर्निर्म्मितमिति भावः । "तत्र भवः" । ४ । ३ । ५३ । इत्यण् तस्य लुक् ।) शस्त्रभेदः । इति हेमचन्द्रः ॥

कोङ्कणाः, पुं, देशविशेषः । इति विश्वः । कोंकण इति भाषा ॥ (यथा, आगमे । "अधाभ्यङ्कं समारभ्य कटिदेशस्य मध्यगे । समुद्रप्रान्तदेशो हि कोङ्कणः परिकीर्त्तितः" ॥ देशोऽयं कूर्म्मविभागे दक्षिणस्यां दिशि वर्त्तते । यथा, महाभारते । ६ । ९ । ५९ । "अथापरे जनपदा दक्षिणा भरतर्षभ" ! । "कौकुट्टकास्तथा चोलाः कोङ्कणा मलवा नराः" ॥ क्वचिदेकवचनत्वमपि दृश्यते । यथा, स्मृतिसंग्रहे । "मालवे गौड़देशे च सिन्धुदेशे च कोङ्कणे । व्रतं चूड़ां विवाहञ्च वर्ज्जयेत् मकरे गुरौ" ॥)

कोङ्कणासुतः, पुं, (कोङ्कणे तदाख्यप्रदेशे भवा । अण् तस्य लुक् च । कोङ्कणा रेणुका तस्याः सुतः पुत्रः ।) परशुरामः । इति शब्दमाला ॥

कोचः, पुं, ( कुच् + ज्वलादित्वात् कर्त्तरि णः । ) जातिविशेषः । स तु मांसच्छेदिगर्भे तीवरस्यौरसजातः । इति ब्रह्मवैवर्त्तपुराणम् ॥

कोजागरः, पुं, (को जागर्त्ति अस्यां पौर्णमासीनिशायां इति लक्ष्मी देव्या उक्तियंत्र समये । पृषोदरात् साधुः ।) आश्विनी पूर्णिमा । तत्पर्य्यायः । शारदी २ द्यूतपूर्णिमा ३ शरत्पर्व्व ४ कौमुदी ५ । इति त्रिकाण्डशेषः ॥ अथ कोजागरकृत्यानि । तत्र ब्रह्मपुराणम् ।
"आश्वयुज्यां पौर्णमास्यां निकुम्भो वालुकार्णवात् ।
आयाति सेनया सार्द्धं कर्त्ता युद्धं सुदारुणम् ॥
तस्मात् तत्र नरैर्मार्गाः स्वगेहस्य समीपतः ।
शोधितव्याः प्रयत्नेन भूषितव्याश्च मण्डनैः ॥
पुष्पार्घ्यफलमूलौघसर्षपप्रकरैस्तथा ।
वेश्मानि भूषितव्यानि नानावर्णैर्विशेषतः ॥
सुस्नातैरनुलिप्तैश्च नरैर्भाव्यं सबान्धवैः ।
दिवा तत्र न भोक्तव्यं मनुष्यैश्च विवेकिभिः ॥
स्त्रीबालवृद्धमूर्खैश्च भोक्तव्यं पूजितैः सुरैः ।
पूर्व्वाह्णे समयैः पश्चैस्तथा द्वारोर्द्ध्वमित्ययः ॥
द्वारोपान्ते सुदीप्तस्तु संपूज्यो हव्यवाहनः ।
यवाऽक्षतहुतोपेतैस्तथा मूलैश्च सुतर्पितः ॥

संपूजितव्यः पूर्णेन्दुः ययता पायसेन च ।
यमः सभार्य्यः कामश्च तथा नन्दीश्वरो मुनिः ॥
गोमद्भिः सुरभिः पूज्या छागवद्भिर्हुताशनः ।
उरभ्रवद्भिर्वरुणो गजवद्भिर्विनायकः ॥
पूज्यः साम्बेश्च देवन्तो यथाविभवविस्तरैः ।
ततः पूज्यो निकुम्भोऽपि समायैस्तिलतण्डुलैः ॥
सुगन्धिभिर्घृतोपेतैः कृशराद्यैश्च भूरिभिः ।
ब्राह्मणान् भोजयित्वा तु भोक्तव्यं मांसवर्जितम् ॥
वाद्यैर्गीतैर्नृत्यैर्नाट्यैर्वा कुर्य्यात् क्रीडाः पृथग्विधाः" ॥ * ॥
लिङ्गपुराणे यथा,—
"आश्विने पौर्णमास्यान्तु चरेज्जागरणं निशि ।
कौमुदी सा समाख्याता कार्य्या लोकविभूतये ॥
कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावतं स्थितम् ।
सुगन्धिर्निशि सद्वेशस्त्वक्षैर्जागरणञ्चरेत् ॥
निशीथे वरदा लक्ष्मीः को जागर्त्तीति भाषिणी ।
तस्मै वित्तं प्रयच्छामि अक्षैः क्रीडां करोति यः ॥
नारिकेलैश्चिपिटकैः पितॄन् देवान् समर्च्चयेत् ॥
बन्धूंश्च प्रीणयेत्तेन स्वयं तदशनो भवेत्" ॥
इति तिथ्यादितत्त्वम् ॥ (अत्र निशायां बन्धुभिः सहैः क्रीडयित्वा लक्ष्मीप्रसादात् धनभाग्भवेत् । अक्ष-क्रीडानियमश्च चतुरङ्गशब्दे द्रष्टव्यः ॥)

कोटः, पुं, (कुट्यते प्रताप्यते शत्रुरत्र अनेन वा । दुर्गमाश्रित्य प्रबलविपक्षमपि प्रतापयितुं शक्यते इत्यर्थः । कुट प्रतापने + अधिकरणे करणे वा घञ् ।) दुर्गम् । इति कुटशब्दार्थे मेदिनी ॥ गड़ कोट्टा इति च भाषा ॥ (कुट् + भावे घञ् । कौटिल्यम् प्रतापनम् ॥)

कोटकः, पुं, (कुट् + कर्त्तरि ण्वुल् ।) गृहकारकः । घरामि इति भाषा । स तु कुम्भकार्य्यां गर्भे अट्टालिकाकारस्यौरसजातः । इति ब्रह्मवैवर्त्त पुराणम् ॥

कोटरं, क्ली पुं, (कोटं कौटिल्याकारं स्थानं गर्त्तमिति यावत् । रातीति । रा + कः ।) वृक्षच्छिद्रगह्वरम् । गाछेर खोड़ोल इति भाषा ॥ तत्पर्य्यायः । निष्कुहः २ । इत्यमरः । २ । ४ । १३ ॥ निर्गूढः ३ कोटरः ४ । इति शब्दरत्नावली ॥ प्रान्तरम् ५ । तरुविवरम् ६ । इति जटाधरः ॥ (कोटशब्दात् चतुरर्थ्यां अश्मरादित्वात् रः । पां, ४ । २ । ८० ॥ दुर्गसन्निहितदेशादौ, त्रि ॥)

कोटरावणं, क्ली, (कोटरान्वितानां वृक्षाणां वनम् । पूर्व्वदीर्घत्वं णत्वञ्च ।) सकोटरवृक्षयुक्तवनम् । इति मुग्धबोधटीकायां दुर्गादासः ॥

कोटरी, स्त्री, (कोटं कौटिल्यं रीणाति गच्छतीति । रीगतौ + क्विप् ।) नग्ना स्त्री । इत्यमरः । २ । ६ । १७ ॥ (कोटं कुटिलस्वभावं राक्षसासुरादिकं रीणाति हन्ति । री + क्विप् ।) चण्डिका ॥ इत्यमरटीका ॥

कोटवी, स्त्री, (कोटं कौटिल्यं निर्लज्जतां वाति गच्छतीति । कोट + वा गमनहिंसयोः "आतोऽनुपसर्गे कः" । ३ । २ । ३ । इति कः । ततो गौरादित्वात् ङीष् ।) विवस्त्रा स्त्री । इत्यमरटीका । (कोटं दुर्गं दुर्गनामानमसुरं वाति नाशयतीति ।) दुर्गा । इति धरणी ॥

कोटिः, स्त्री, (कोट्यते छिद्यतेऽनया । कुट छेदे । "सर्व्वधातुभ्य इन्" । उणां । ४ । ११७ । इति इन् । बाहुलकात् गुणः ।) अस्त्रादेः कोणः । (यथा, रघुवंशे । ७ । ४६ ।
"कृतान्यपि क्षेपणशस्त्रकोटि
व्यालक्ष्यकेशानि चिरेण पेतुः" ॥)
उत्कर्षः । शतलक्षसंख्या । क्रोर इति भाषा ॥ (यदुक्तं अङ्कशास्त्रे ।
"एकं दशं शतञ्चैव सहस्रमयुतन्तथा ।
लक्षञ्च नियुतञ्चैव कोटिरर्ब्बुदमेव च" ॥)
धनुरग्रम् । इत्यमरमेदिनीकरौ ॥
(यथा, महाभारते । १ । ४० । २२ ।
"तस्य स्कन्धे मृतं सर्पं क्रुद्धो राजा समासजत् ।
समुत्क्षिप्य धनुष्कोट्या स चैनं समुपैक्षत" ॥)
(रेखा । यथा, कुमारे । २ । २६ ।
"आवर्ज्जितजटामौलिविलम्बिशशिकोटयः ।
रुद्राणामपि मूर्द्धानः क्षतहुङ्कारशंसिनः" ॥
वादविचारः । संशयनिर्णयाय पूर्व्वपक्षः । यथा, गादाधरीसंशयहेतुक्तिः ।
"विप्रतिपत्तिवाक्यजन्यकोट्युपस्थितिः" ।
लीलावत्युक्तत्रिकोणादिक्षेत्रावयवरेखाभेदः । यथा,
"इष्टाद्बाहोर्यःस्यात् तत्स्पर्द्धिन्यां दिशीतरो बाहुः ।
त्र्यस्रे चतुरस्रे वा सा कोटिः कीर्त्तिता तज्ज्ञैः" ॥
सिद्धान्तशिरोमण्युक्तराशिचक्रस्य तृतीयांशः । यथा,
"त्रिभिर्भैः पदं तानि चत्वारि चक्रे क्रमात् स्युर्युगायुग्मसंज्ञा च तेषां । अयुग्मे पदे यातगेय्यन्तु युग्मे भुजबाहुहीनं त्रिभं कोटिरुक्ता" ॥ छायानिरूपणार्थं कल्प्यमानक्षेत्रावयवरेखाविशेषः । यथा, सिद्धान्तशिरोमणौ ।
"दिक्सूत्रसम्पातगतस्य शङ्को-
श्छायाग्रपूर्व्वापरसूत्रमध्यम् ।
दोर्दोःप्रभा वर्गवियोगमूलं
कोटिर्नरात् प्रागपरा ततः स्यात्" ॥ * ॥
"दिक्सम्पातस्थस्य शङ्कोर्भाग्रं यत्र पतति तस्य पूर्व्वापरसूत्रस्य च यदन्तरं स दोरित्युच्यते । दोश्छाययोर्वर्गान्तरपदं पूर्व्वपरा कोटिः" । इति ॥ चन्द्रस्य शृङ्गोन्नतिज्ञानार्थं क्षेत्रावयवविशेषः । यथा, तत्रैव "योऽधो भवेत् दिनकृतः स विधोर्वदग्रशङ्क्वन्वितो मम मता खलु सैव कोटिः" ॥ अपि च अर्कस्य योऽसौ अधः शङ्कुः यस्य ऊर्द्ध्वशङ्कुना युक्तश्चेत् तदैव कोटिर्मतेति । यथा, तत्रैव ।
"यो रवेरधः शङ्कुरसौ विधोरूर्द्ध्वशङ्कुना युतः । सैव कोटिर्मम मता । अत्रोपपत्तिः । इष्टार्केन्द्वोर्याम्योत्तरभावेन यदन्तरं स भुजः । ऊर्द्ध्वाधोभावेन यदन्तरं सा कोटिः । सा चैव भवति । उदयेऽस्ते वा यदि शृङ्गोन्नतिस्तदार्कविशङ्क्वोरभावात् भुज एव कोटिः । यदा निशि रवेरधःशङ्कुस्तदा स शङ्कुर्विधोरुदयशङ्कुना युतो यावांस्तावत् तयोर्यथास्थयोः ऊर्द्ध्वाधरमन्तरं सैव कोटिरुचिता । अतो मया पूर्व्वमेवानयोऽनयादर्शश्चैन्दोः शशिनः शङ्कुसूत्रसमवर्गोच्चम् । अतः स्वाधस्थानसमसूत्रादूर्द्ध्वकल्पिताः कोट्याः भवितव्यम् । भुजकोटिकर्णैश्च तत्त्र्यस्रं इष्टेऽग्रत आदर्शवत् सम्मुखं यथा भवति तथा कल्प्यम् ॥ किञ्च, अपराऽसूत्रकल्पितक्षेत्रावयवविशेषः । तत्रैव यथा,—
"सूत्राद्दिवा शङ्कुतलं यमाशां
याम्यां गतं हि युनिशं कुजोर्द्ध्वे ।
अधश्च सौम्यां निशि सौम्यमस्मात्
सद्युक्तियुक्तं ग्नतलं निवक्तम् ॥
सौम्याग्रकायाशृतलं हि याम्यं
याम्याग्रकायात् पुनरेव याम्यम् ।
तदन्तरैक्यं समवृत्तखेट-
*मध्यांशकौर्वा हृषि बाहुमाहुः ।*
इनघ्नां श्रुतिं चाथ तयोस्तु कोटिं
पूर्व्वापरां वर्गवियोगमूलम्" ॥
"क्षितिजस्थाहोरात्रवृत्तसम्पातयोर्बद्धं सूत्रमुदयास्तसूत्रम् । ग्रहस्थानात् लम्बः शङ्कुः तस्य तलं उदयास्तसूत्रात् दक्षिणतो भवति । यतः क्षितिजादुपरि दक्षिणतोऽहोरात्रवृत्तं गतम् । अधस्तु उत्तरतो गतम् । अतो निशि उत्तरं शङ्कुतलम् । अथ भुज उच्यते । उत्तरगोलेऽग्रोत्तरं शङ्कुतलं याम्यम् । अतस्तेनोनाग्रा बाहुर्भवति । बाहुर्नाम शङ्कुः प्राचि अपरसूत्रयोरन्तरम् । यदाऽग्रा शङ्कुतलादूना तदा तयोरन्तरं दक्षिणं शङ्कुतलं बाहुः स्यात् । एवं समवृत्तप्रवेशादुपरि दक्षिणगोले तु अग्रा याम्या शङ्कुतलं च याम्यं तयोर्योगे कृते बाहुः स्यात् रविसमवृत्तयोरन्तरांशानां ज्या बाहुः । तत्र या दृग्ज्या स कर्णः । तयोर्वर्गान्तरपदं पूर्व्वापरा कोटिः" ॥)
एका । इत्यमरः ॥ पिड़िङ्ग शाक इति भाषा ॥

कोटिकः, पुं, (कोट्या वक्रसंख्यया काथति प्रकाशते । कै + कः ।) इन्द्रगोपनामकीटः । इति जटाधरः ॥

कोटिजित्, पुं, (कोटिं पण्डितानां समूहं विचारयसे कोटिपरिमितं द्रव्यं वा जितवान् । कोटि + जि + क्विप् तुगागमश्च ।) कालिदासः । इति त्रिकाण्डशेषः ॥ (मेधारुद्रः । इति शब्दार्थचिन्तामणिः ॥)

कोटिपात्रः, पुं, (कोटिरग्रभागः पात्रं यथाकारमस्य । यद्वा, कोटिरग्रं पात्रे जलांशेऽस्य जलक्षेपणादिति भावः ।) केनिपातकः । इति हेमचन्द्रः ॥ केरोयाल इति भाषा ॥

कोटिरः, पुं, (कोटिं अग्रसंख्यां राति ददातीति । रा + कः ।) इन्द्रः । नकुलः । शक्रगोपककीटः । इति मेदिनी ॥

कोटिवर्षं, क्ली, (कोटिसंख्यकानि अस्त्राणि उपस्थितान् शत्रून् प्रति वर्षत्यत्र । कोटि + वृष् + अप् ।) बाणपुरम् । इति शब्दरत्नावली ॥

कोटिवर्षा, स्त्री, (कोटिभिरग्रभागैर्वर्षति मधु । कोटि + वृष् + अप् । स्त्रियां टाप् ।) एका । इत्यमरः ॥ पिड़िङ्ग शाक इति भाषा ॥

(अस्याः पर्य्यायाः यथा ।
"स्पृक्का स्वक् ब्राह्मणी देवी मरुन्माला लता लघुः ।
समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिकेत्यपि" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
गुणाश्चास्याः स्पृक्काशब्दे ज्ञेयाः ॥)

**कोटिशः**, पुं, (कोट्या अग्रेण श्यति नाशयति चूर्णीकरोतीत्यर्थः । कोटि + शो + कः ।) लोष्ट-भञ्जनसाधनमुद्गरः । इति भरतः ॥ मइ इति ख्यात इति केचित् । तत्पर्य्यायः । लोष्टभेदनः २ । इत्यमरः । २ । ९ । १२ ॥ लोष्टघ्नः ३ कोटीशः ४ । इति रत्नकोषः ॥ लोष्टभेदी ५ चूर्णदण्डः ६ लोष्टभञ्ज-र्थमुद्गरः ७ । इति शब्दरत्नावली ॥ लोष्टघ्नः ८ । इति जटाधरः ॥ (कोटिरस्यास्तीति लोमा-दित्वात् शः ।) कोटियुक्ते, त्रि ॥ वासुकीवंशीय-नागविशेषः । यथा, महाभारते । १ । ५७ । ५ ।
"कोटिशो मानसः पूर्णः शलः पालो हलीमकः" ॥)

**कोटिशः**, [स्] अ, (कोटि + वारार्थे शसस् ।) कोटिः कोटिः । इति व्याकरणम् ।
(यथा, रघौ । २ । ४९ ।
"गाः कोटिशः स्पर्शयता घटोध्नीः" ॥)

**कोटी**, स्त्री, (कुट् + "सर्व्वधातुभ्य इन्" । उणां ४ । ११७ । इतीन् ततो वा ङीष् ।) खड्गादेर-ग्रभागः । इत्यमरटीका ॥ एकाशाकम् । इति शब्दरत्नावली । कोटिसङ्ख्या । इति लिङ्गादि-संग्रहटीकायां भरतः ॥ (यथा, महाभारते । ७ । जयद्रथवधपर्व्वणि । ८७ । ३० ।
"प्रतोदैश्चापकोटीभिर्हुङ्कारैः साधु वाहितैः ।
कशापार्ष्ण्यभिघातैश्च वाग्भिरुग्राभिरेव च" ॥)

**कोटीरः**, पुं, (कोटीभिः ईरयति प्रेरयति । कोटी + ईर् + णिच् अच् ।) जटा । इति त्रिकाण्डशेषः ॥ (यथा, आनन्दलहर्य्याम् । ३० ।
"किरीटं वैरिञ्चं परिहर पुरः कैटभभिदः
कठोरे कोटीरे स्खलसि जहि जम्भारिमुकुटम्" ॥)
किरीटम् । इति हेमचन्द्रः ॥

**कोटीवर्षं**, स्त्री, (कोटीसङ्ख्याकानि वाणाद्यस्त्राणि विपक्षान् प्रति वर्षन्ति अत्र । कोटी + वृष् + अप् ।) वाणपुरम् । इति त्रिकाण्डशेषः ॥ (इदानीं देवीकोट इत्याख्यया ख्यायते ॥)

**कोटीवर्षा**, स्त्री, (कोटीं कोटीर्वा वर्षति माधुर्य्यादि-स्वादम् । वृष् + अच् + टाप् ।) कोटिवर्षा । इति शब्दरत्नावली । पिड्डिङ् शाक इति भाषा ॥

**कोटीशः**, पुं, (कोटीं लोष्टादीनां कोटीसंख्यां श्यति चूर्णयतीति । कोटी + शो + कः ।) कोटिशः । इत्यमरटीकायां भरतः ॥

**कोट्टं**, स्त्री, (कुट्टते विभज्यतेऽस्मिन् अत्र वा । कुट्ट + अधिकरणे घञ् । निपातनात् गुणः ।) दुर्गम् । इति हेमचन्द्रः । केल्ला गड इत्यादि भाषा ॥

**कोट्टः**, पुं, (कुट्टाते शत्रवोऽत्र । कुट्ट छेदे + घञ् । निपातनात् गुणः ।) दुर्गपुरम् । इति लिङ्गादि-संग्रहे अमरः ॥

**कोट्टवी**, स्त्री, दुर्गा । इति त्रिकाण्डशेषः ॥ नग्ना स्त्री । इति शब्दरत्नावली ॥ नग्नमुक्तकेशी नारी । "या त्ववासा मुक्तकेशी कोट्टवी नग्निका च सा" ॥ इति जटाधरः ॥ (कोट्टं कुट्टनं छेदनं खड्गघातेति यावत् वाति हिनस्ति निवारयतीत्यर्थः । यद्वा, कोट्टे कुट्टने संग्रामे स्वसुतस्य रक्षार्थं वाति गच्छतीति । कोट्ट + वा गमनहिंसयोः + कः गौरादित्वात् ङीष् ॥) नग्ना स्त्रीरूपधारिणीदुर्गा । "तन्माता कोट्टवी नाम नग्ना मुक्तशिरोरुहा । पुरोऽवतस्थे कृष्णस्य पुत्रप्राणरिरक्षया" ॥ इति भागवते । १० । ६३ । २० ॥
(नग्नीयं स्वयमाद्याशक्तिरूपिणी दुर्गा किन्त्वस्याः अम्बाख्योऽष्टमो भागः । यथा, हरिवंशे वाण-युद्धपर्व्वणि १८२ अध्याये २२-२३ ।
"आविध्यमाने चक्रे तु क्रुद्धेनाप्रतिमौजसा ।
कुमाररक्षणार्थाय बिभ्रती सुतनुं तदा ॥
दिग्वासा देववचनात् प्रातिष्ठत्तत्र कोट्टवी ॥
लम्बा नाम महाभागा भागो देव्यास्त्वथाष्टमः ।
चित्राकनकशक्तिस्तु सा च नग्ना स्थितान्तरे" ॥)

**कोट्टवीपुरं**, स्त्री, (कोट्टव्याः पुरम् ।) वाणपुरम् । इति शब्दरत्नावली ॥

**कोट्टारः**, पुं, (कुट्ट + आरकप्रत्ययः । पृषोदरात् साधुः । कोट्टं कोटं दुर्गमित्यर्थः ऋच्छति प्राप्नोति । कोट्ट + ऋ + "कर्म्मण्यण्" । इति अण् ।) नागरः । कूपः । पुष्करिण्याः पाटकः । इति मेदिनी ॥ दुर्गपुरम् । इति लिङ्गादिसंग्रहटीकायां भरतः ॥

**कोठः**, पुं, (कुठि + अच् निपातनात् नलोपे साधुः ।) चक्राकारकुष्ठरोगः । तत्पर्य्यायः । मण्डलकम् २ । इत्यमरः । २ । ६ । ५४ ॥ दुश्चर्म्मा ३ त्वग्दोषः ४ चर्म्मदूषिका ५ । इति राजनिर्घण्टः ॥ तस्य लक्षणं यथाह माधवकरः ।
"असम्यग्वमनो दीर्णपित्तश्लेष्मान्ननिग्रहैः ।
मण्डलानि सकण्डूनि रागवन्ति बहूनि च ।
उत्कोठः सानुबन्धश्च कोठ इत्यभिधीयते" ॥
अन्यच्च । "वरटीदष्टसंस्थानः शोथः कण्डूमान् लोहितो-ऽस्फरूपपित्तात् । क्षणिकोत्पादविनाशः कोठ इति निगद्यते तज्ज्ञैः" ॥ इति रक्षितः ॥
(अस्य चिकित्सा यथा, वैद्यकचक्रपाणिसंग्रहे शीतपित्तोदर्द्दाद्यधिकारे ।
"अग्निमन्थभवं मूलं पिष्टं पीतञ्च सर्पिषा ।
शीतपित्तोदर्द्दकोठान् सप्ताहादेव नाशयेत् ॥
उदर्द्दोक्तां क्रियाञ्चापि कोठरोगे समासतः ।
सर्पिःपीत्वा महातिक्तं कार्य्यं शोणितमोक्षणम्" ॥)

**कोठरः**, पुं, (कुण्यते क्रियतेऽसौ । कुठ + अरप्र-त्ययः ।) अङ्कोटवृक्षः । इति राजनिर्घण्टः ॥ आँकोड इति भाषा ॥

**कोठरपुष्पी**, स्त्री, (कोठरस्य पुष्पमिव पुष्पमस्याः । कोठरपुष्प + ङीप् ।) वृद्धदारकः । इति राज-निर्घण्टः ॥ (वृद्धदारकशब्देऽस्या गुणादयो ज्ञातव्याः ॥)

**कोणः**, पुं, (कुणति वाद्यत्यनेन कुणति वादयतीति वा । कुण शब्दे + करणे घञ् । कर्त्तरि + अच् वा ।) वीणादिवादनम् । भेरीप्रभृति यन्त्रवाणाद्-वार काठी इति भाषा ॥ (यथा, रामायणे २ । ७१ । २९ ।
"भेरीमृदङ्गवीणानां कोणसंघट्टितः पुनः" ॥)
अस्त्रादेरग्रभागः । तत्पर्य्यायः । पालिः २ अश्रिः ३ कोटिः ४ । इत्यमरः । २ । ८ । ९३ ॥ (यथा, कादम्बर्य्याम् । "कनक कोणैरभिहन्यमानाः" ॥)
वाद्यप्रभेदः । गृहादेरेकदेशः । (यथा, कथा-सरित्सागरे । १९ । ३३ ।
"सप्तहस्तान्तरे तेन खलाः स्वर्णपूरिताः ।
कुम्भाश्चतुर्षु कोणेषु निगूढाः स्थापिता भुवि" ॥)
लगुडः । इति मेदिनी । मङ्गलग्रहः । इति हेम-चन्द्रः ॥ शनिः । इति विश्वः ॥ द्वयोर्दिशोर्मध्य-भागः । इति राजनिर्घण्टः ॥ अस्य विवरणं विदिक्शब्दे द्रष्टव्यम् ॥ (कोणमात्रम् । यथा, तन्त्रसारे ।
"विन्दुत्रिकोणवसुकोणदशारयुग्मम्" ॥)

**कोणकुणः**, पुं, (कोणे मत्कुणैकदेशभागे कुणति विचरतीति । कुण + अच् ।) उत्कुणः । इति हेमचन्द्रः ॥ उकुण इति भाषा । (मत्कुणम् । छारपोका इति भाषा । खटमल इति हिन्दी-भाषा ॥)

**कोणिः**, त्रि, (कुण + "सर्व्वधातुभ्य इन्" । उणां ४ । ११७ । इति इन् बाहुलकात् गुणः ।) कुणिः । इत्यमरटीका ॥ कोणा इति भाषा ॥

**कोथः**, पुं, (कुथ्यते पूतिभवं गम्यते अनेन । कुथ पूतिभवे + करणे घञ् ।) नेत्ररोगभेदः । कायो इति भाषा । (कुथ्यति गुदं स्थिनोति । कुथ् कर्त्तरि अच् । गुह्यक्षतकारकभगन्दर रोग-विशेषः । यथा, सुश्रुते ।
"मूढेन मांसलुब्धेन यदस्थिशल्यमन्नेन सहाभ्यव-हृतं यदावगाढपुरीषोन्मिश्रमपानेनाधः प्रेरितं असम्यग्गागतं गुदं क्षिणोति तत्र क्षतनिमित्तः कोथ उपजायते" । भावे घञ् । गलनम् । यथा, तत्रैव ।
"तस्मिन् क्षते पूयवधिरावकीर्णमांसकोथे भूमाविव जलक्लिन्नायां कृमयो जायन्ते" ॥)
शटिते मथिते च त्रि । इति मेदिनीकार-हेमचन्द्रौ ॥

**कोदण्डं**, स्त्री, (कु शब्दे + विच् । कौः शब्दायमानो दण्डोऽस्य ।) धनुः । इत्यमरः । २ । ८ । ८३ ॥
(यथा, भागवते ३ । २१ । ५२ ।
"विस्फूर्ज्जच्चण्डकोदण्डो रथेन त्रासयन्नघान्" ॥)

**कोदण्डः**, पुं, (कोदण्डं धनुः तत्सदृशमाकारो विद्यते अस्य । अर्श आदित्वादच् ।) भ्रूः । जनपदविशेषः । इति मेदिनी ॥

**कोद्रवः**, पुं, (कु + विच् । कौः सन् द्रवतीति । द्रु + अच् । द्रवः । कौ द्रव इति कर्म्मधारयः । केन वायुना द्रवति वा पृषोदरात् पूर्ब्बस्य ओकारा-देशे साधुः ।) धान्यविशेषः । कोदो इति भाषा । तत्पर्य्यायः । कोद्रूषः २ । इत्यमरः । २।९।१६ ॥ कुद्रवः ३ । इति तट्टीका ॥ कुद्दालः ४ मदनाग्रकः ५ कोरदूषः ६ कोरदूषकः ७ । इति शब्दरत्नावली ॥

(यथा श्रुतौ। "अयज्ञिया वै कोद्रवाः"॥) अपि च।
"कोद्रवः कोरदूषः स्यादुद्दालो वनकोद्रवः।
कोद्रवो वातलो ग्राही हिमः पित्तकफापहः।
उद्दालस्तु भवेदुष्णो ग्राही वातकरो भृशम्"॥
इति भावप्रकाशः॥ अस्य गुणाः। मधुरत्वम्। तिक्तत्वम्। व्रणिनां पथ्यकारकत्वम्। कफपित्तहरत्वम्। रूक्षत्वम्। मोहकारित्वम्। नूतनस्य तु गुरुत्वञ्च। इति राजनिर्घण्टः॥ परमग्राहित्वम्। वातलत्वम्। इति राजवल्लभः॥

**कोपः**, पुं, (कुप्यते इति। कुप्+भावे घञ्।) क्रोधः। इत्यमरः। १। ७। २६॥
(यथा, विष्णुपुराणे १। ११। १३।
"वत्स! कः कोपहेतुस्ते कश्च त्वां नाभिनन्दति"॥)

**कोपक्रमं**, क्ली, (उपक्रम्यते आरभ्यते यत् तत् उपक्रमं कृष्टादिकम्। उप+क्रम्+कर्म्मणि घञ्। कस्य ब्रह्मणः उपक्रमं सृष्टिः।) ब्रह्मणः सृष्टिः। इत्यमरटीकायां रायमुकुटः॥ (कोपेन क्रम्यते इति। यद्वा, कोपस्य क्रमः उद्योगोऽस्य।) कोपयुक्ते, त्रि॥

**कोपनः**, त्रि, (कुप्+युच्।) कोपविशिष्टः। इति जटाधरः॥ (यथा, महाभारते १। २९। १६।
"आसीद्विभावसुर्नाम महर्षिः कोपनो भृशम्"॥
पुं, बलिवंशीयः कोपनो नामासुरः।
यथा, हरिवंशे। ४१। ८४।
"शरभः शलभश्चैव कुपनः कोपनः क्रथः"॥
क्ली, कुप्+णिच् भावे ल्युट्। दोषविकारकारकव्यापारविशेषकोपनिष्पादनम्। यथा, महाभारते अनुगीतायाम्। १४। १७। १३।
"स्वदोषकोपनाद्रोगं लभते मरणान्तिकम्।
अपि वोद्बन्धनादीनि परीतानि व्यवस्यति"॥)

**कोपनकः**, पुं, (कोपनः कोपशील इव कायति प्रकाशते। कै+कः।) चोरकनामगन्धद्रव्यम्। इति राजनिर्घण्टः॥

**कोपना**, स्त्री, (कुप्यतीति। कुप्+ताच्छील्ये युच्+टाप्।) कोपवती। तत्पर्य्यायः। भामिनी २। इत्यमरः। २। ६। ४॥ चण्डी ३। इति जटाधरः॥ भीमा ४। इति शब्दरत्नावली॥ (यथा, कुमारे। ३। ८।
"कयासि कामिन् सुरतापराधात्
पादानतः कोपनयावधूतः।
तस्याः करिष्यामि दृढानुतापं
प्रवालशय्याशरणं शरीरम्"॥)

**कोपलता**, स्त्री, (कोपहेतुर्लता।) कर्णस्फोटालता। इति राजनिर्घण्टः॥

**कोपी**, [न्] त्रि, (अवश्यं कुप्यति इति आवश्यके णिनिः।) क्रोधनः। इत्यमरः। ३। १। ३२॥
(यथा, मार्कण्डेये २८। २९।
"सर्व्वसङ्गपरित्यागी ब्रह्मचर्य्यमकोपिता।
यतेन्द्रियत्वमावासे नैकस्मिन् वसतिश्चिरम्"॥)
जलपारावते, पुं,। इति राजनिर्घण्टः॥

**कोमलं**, क्ली, (कौति शब्दायते वाय्वादियोगेन स्रोतोवेगेन वा। कु शब्दे वृषादित्वात् कलच् तस्य मुट् च। बाहुलकात् गुणः।) जलम्॥ इति मेदिनी॥

**कोमलः**, त्रि, (कमु कान्तौ+बाहुलकात् कलच् अत उत्वं गुणश्च॥) अकठिनः। नरम इति भाषा। तत्पर्य्यायः। सुकुमारः २ मृदुलः ३ मृदुः ४। इत्यमरः। ३। १। ७८। पेलवः ५। इति जटाधरः॥ मनोज्ञः। इति शब्दरत्नावली॥
(यथा, रघुः। ९। ३५।
"श्रुतिसुखभ्रमरस्वनगीतयः
कुसुमकोमलदन्तरुचो बभुः।
उपवनान्तलताः पवनाहतैः
किसलयैः सलयैरिव पाणिभिः"॥)

**कोमलकं**, क्ली, (कोमल+संज्ञायां कन्।) मृणालम्। इति शब्दचन्द्रिका॥ (स्वार्थे कन्। जलम्॥)

**कोमला**, स्त्री, (कोमल+स्त्रियां टाप्।) क्षीरिका। इति शब्दचन्द्रिका॥ (वृत्त्यनुप्रासघटकवृत्तिभेदः। क्षीरिकाशब्देऽस्य विवरणं ज्ञेयम्॥)

**कोमासिका**, स्त्री, (कु ईषत् उमा अतसीवृक्षः स इव आस्ते। आस्+ण्वुल्+टाप् अत इत्वम्। कोः कादेशः।) आलिका। इति हारावली॥ फलेर आलि इति भाषा॥

**कोयष्टिः**, पुं, (कं जलं यष्टिरिवास्य पृषोदरात् अत उत्वे गुणत्वे च साधुः।) जलकुक्कुभपक्षी। इति त्रिकाण्डशेषः॥ (यथा, मनौ। ५। १२।
"प्रतुदान् जालपादांश्च कोयष्टिनखविष्किरान्"॥)

**कोयष्टिकः**, पुं, (कोयष्टि+संज्ञायां कन्।) पक्षिभेदः। कोँड़ापक्षी इति भाषा। इत्यमरः। २। ५। ३५॥

**कोरकः**, पुं, (कुल संस्त्याने+कर्त्तरि ण्वुल्। लस्य रत्वम्।) कलिका। इत्यमरः। २। ४। १६॥ ("कलिका कोरकः पुमान्" इत्यमरवाक्यं प्रायिकाभिप्रायेण इति बोध्यम्। यतः "कोरकं कुड्मलेऽपि स्यात् कक्कोलकमृणालयोरिति" "कोरकोऽस्त्री कुड्मले स्यादिति" च विश्वमेदिनीकाराभ्यामुक्तम्॥)

**कोरकः**, पुं क्ली, (कुल्+ण्वुल्। लस्य रः।) मुकुलम्। (यथा, माघे। ७। २६।
"मदनवनितं रजोवधूभ्यः
समुपहरन् विचकार कोरकाणि"॥)
कक्कोलकम्। मृणालम्। इति मेदिनी॥ चोरनामगन्धद्रव्यम्। इति जटाधरः॥

**कोरङ्गी**, स्त्री, (कुरिति कोरङ्गीत्याख्यां गच्छतीति कुर्+अङ्गच् गौरादित्वात् ङीष्।) सूक्ष्मैला। इत्यमरः। २। ४। १२५॥ (अस्याः पर्य्यायाः यथा, "सूक्ष्मोपकुञ्चिका तुच्छा कोरङ्गी द्राविडी त्रुटिः"॥ इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥) पिप्पली। इति राजनिर्घण्टः॥

**कोरदूषः**, पुं, (कोलं संस्त्यानं दूषयति। दुष्+णिच् "कर्म्मण्यण्"। ३। २। १। इत्यण्। लस्य रत्वम्।) कोद्रवः। इत्यमरः। २। ९। १६॥ (यथा, महाभारते। ३। १९०। १८—१९।
"ईदृशो भविता लोको युगान्ते पर्य्युपस्थिते।
वस्त्राणां प्रवरा शाणी धान्यानां कोरदूषकाः।
भार्य्यामित्राश्च पुरुषा भविष्यन्ति युगक्षये"॥
अस्य गुणा यथा,—
"स कोरदूषः श्यामाकः कषायमधुरो लघुः।
वातलः कफपित्तघ्नः शीतसंग्राहि शोषणः"॥
इति सूत्रस्थाने सप्तविंशेऽध्याये चरकेणोक्तम्॥)

**कोलं**, क्ली, (कुल्+अच् गौरादित्वात् ङीष्। कोली तस्याः फलमित्यण् तस्य लुक् "लुक्तद्धितलुकि"। १। २। ४९। इति ङीषो लुक्।) वदरीफलम्। तत्पर्य्यायः। कुवलम् २ फेनिलम् ३ सौवीरम् ४ वदरम् ५ घोण्टा ६। इत्यमरः। १। ४। ३६॥ पिच्छिलम् ७ स्वादुफलम् ८ वदरीफलम् ९। इति शब्दरत्नावली॥ कोलिफलम् १०। इति जटाधरः॥ अपि च।
"पुंसि स्त्रियाञ्च कर्कन्धुर्वदरीकोलमित्यपि।
फेनिलं कुवलं घोण्टा सौवीरं वदरञ्च तत्॥
अजाप्रिया कुहा कोलिविषमो भयकण्टकः"॥
अथ वदरविशेषाणां लक्षणानि गुणाश्च।
"पच्यमानं सुमधुरं सौवीरं वदरं महत्।
सौवीरं वदरं शीतं भेदनं गुरु शुक्रलम्॥
बृंहणं पित्तदाहास्रक्षयतृष्णानिवारणम्।
सौवीरात्तु लघु संपक्वं मधुरं कोलमुच्यते॥
कोलन्तु वदरं दाहि रथ्यमुष्णञ्च वातहृत्।
कफपित्तकरं चापि गुरु सारकमीरितम्॥
कर्कन्धुः क्षुद्रवदरं कथितं पूर्व्वसूरिभिः।
अम्लं स्यात् क्षुद्रवदरं कषायं मधुरं मनाक्॥
स्निग्धं गुरु च तिक्तञ्च वातपित्तापहं स्मृतम्।
शुष्कं भेद्यग्निकृत् सर्व्वं लघु तृष्णाक्लमास्रजित्"॥
इति भावप्रकाशः॥ वदरादित्रयं शृगालकोली। वदरीसदृशा घोण्टा शृगालकोलिः। यदुक्तम्।
"वदरीसदृशाकारो वृक्षः सूक्ष्मफलो भवेत्।
अटव्यामेव सा घोण्टा गोपघोण्टेति चोच्यते"॥
इति सुभूतिः॥
"वृत्तिकोलिर्गोपघोण्टा घोण्टा च वदरीच्छदा।
शृगालकोलिः कर्कन्धुः" इति। रत्नकोषः॥ केचित्तु कोलादित्रयं वदरीफले सौवीरादित्रयं शृगालकोलावित्याहुः॥ स्वामी तु "कर्कन्धुर्वदरी कोलिर्घोण्टा कुवलफेनिलौ। सौवीरं वदरं कोलम्"॥ इति पठति। तन्नाद्यास्त्रयो वृक्षार्थाः अन्ये फलार्थाः घोण्टा तूभयस्पृगिति व्याचष्टे। "सौवीरं वदरं कोलं वदरीणां फलं मतम्"। इति कोषान्तरञ्च। इति भरतः॥ *॥ अस्य गुणाः। अम्लत्वम्। वायुकफनाशित्वञ्च॥ पक्वस्यास्य गुणाः। वायुपित्तनाशित्वम्। स्निग्धत्वम्। सुमधुरत्वम्। सारकत्वञ्च॥ शुष्कस्यास्य गुणाः। कफवायुनाशित्वम्। पित्तविरोधित्वञ्च॥ पुरातनस्यास्य गुणाः। श्रमतृष्णानाशित्वम्। स्निग्धत्वम्। लघुत्वञ्च॥ अस्य मज्जगुणाः। मधुरत्वम्। पित्तच्छर्द्दितृष्णानाशित्वञ्च। इति राजवल्लभः॥ *॥ तोलकपरिमाणम्। इति वैद्यकपरिभाषा॥ (यथा, चरके कल्पस्थाने १२ अः।
"शाणौ द्वौ द्रङ्क्षणं विद्यात् कोलं वदरमेव च"॥) मरिचम्। इति राजनिर्घण्टः॥ चव्यम्। इति वैद्यकम्॥

**कोलः**, पुं, (कोलति कामपि बाधां न मत्वैव शत्रुं प्रतिधावतीति। कुल+अच्।) शूकरः। (कोलति श्रयते

जले इति।) प्लवः। इत्यमरः। १।१०।११॥ भेला भाड़ इत्यादि भाषा। अङ्कपालिः। शनिः। चित्रम्। चिता इति भाषा। (कोलन्ति व्याप्नुवन्त्यन्यान्। कुल + अधिकरणे हलश्चेति घञ्।) क्रोडम्। इति मेदिनी। देशविशेषः। इति शब्दरत्नावली॥ अस्त्रभेदः। इति धरणी॥ वर्णसङ्करजातिविशेषः। (यथा, हरिवंशे। ३२।१२३।
"पाण्ड्यश्च केरलश्चैव कोलश्चोलश्च पार्थिव!।
तेषां जनपदाः स्फीताः पाण्ड्याश्चोलाः सकेरलाः"॥)
स तु वेटात् तीवरकन्यायां जातः। इति ब्रह्मवैवर्त्तपुराणम्॥ म्लेच्छधारिम्लेच्छजातिविशेषः। स च पूर्व्वं क्षत्त्रिय आसीत् सगरराजेनासौ वेदपाठादावनधिकारी कृतः। एतद्विवरणं हरिवंशे १४ अध्याये द्रष्टव्यम्॥
(अयन्तु कोलः ययातिवंशीयस्य राज्ञो दुष्मन्तस्य पौत्रेष्वन्यतमः॥ इदानीं पार्व्वत्यः असभ्यजातिविशेषः। उत्कलदेशादुत्तरभागे ह्यस्य वसतिः। इयन्तु कोलजातिः सत्यप्रिया सरलप्रकृतिः आतिथ्यसत्कारप्रिया चेति उच्यते॥)

कोलकं, क्ली, (कोल + संज्ञायां कन्। कुल + कृञादित्वात् वुन् वा।) गन्धद्रव्यविशेषः। काँकला इति भाषा। मरिचम्। इत्यमरः। २।९।३६॥

कोलकः, पुं, (कुल + कर्त्तरि ण्वुल् कृञादित्वात् वुन् वा।) अङ्कोठवृक्षः। इति राजनिर्घण्टः॥ वक्कारवृक्षः। इति जटाधरः॥

कोलकन्दः, पुं, (कोल इव कन्दोऽस्य।) महाकन्दविशेषः। तत्पर्य्यायः। क्रमिघ्नः २ पञ्चलः ३ वस्त्रपञ्चलः ४ पुटालुः ५ सुपुटः ६ पुटकन्दः ७। अस्य गुणाः। कटुत्वम्। उष्णत्वम्। क्रमिदोषनाशित्वम्। वान्तिविच्छर्द्दिशमनत्वम्। विषदोषनिवारणत्वञ्च। इति राजनिर्घण्टः॥

कोलकर्कटिका, स्त्री, (कोल इव कर्कटिका।) मधुखर्ज्जूरिका। इति राजनिर्घण्टः॥

कोलदलं, क्ली, (कोलं बदरीफलं तद्वद्दलमस्य।) नखीनामगन्धद्रव्यम्। इत्यमरः। २।४।१३०॥ (नखीशब्देऽस्य गुणादयो ज्ञातव्याः॥)

कोलनाशिका, स्त्री, (कोलस्य शूकरस्य नाशिका नाशिनी। नश् + ण्वुल् टाप् अत इत्वम्।) वृश्चीववृक्षः। इति हारावली॥

कोलपुच्छः, पुं, (कोलस्य शूकरस्य पुच्छ इव पुच्छोऽस्य।) कङ्कपक्षी। इति हारावली॥

कोलमूलं, क्ली, (कोलस्य बदरीफलस्य मूलवत् मूलमस्य। यद्वा, कोलं बदरीफलमिव मूलमस्य।) पिप्पलीमूलम्। इति राजनिर्घण्टः॥

कोलम्बकः, पुं, (कुल् + बाहुलकात् अम्बच्। ततः संज्ञायां कन्।) वीणायाः कायः। इत्यमरः। १।७।७॥ स तु तन्त्रीदण्डादिसमुदायः शरीरम्। अलाबुदण्डककुभसमुदायस्तन्त्रीहीन इत्यन्ये। इति भरतः॥

कोलवल्ली, स्त्री, (कोलो वराहः तल्लोमवत् वल्ली। वराहलोमतुल्यशूकवत्त्वात् तथात्वम्।) गजपिप्पली। इत्यमरः। २।४।९७॥ चव्यम्। इति राजनिर्घण्टः॥ (अस्याः पर्य्याया यथा,—
"चविकायाः फलं प्राज्ञैः कथिता गजपिप्पली।
कपिवल्ली कोलवल्ली श्रेयसी वशिरश्च सा"॥
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥)

कोलशिम्बी, स्त्री, (कोलस्य शूकरस्य पादाकारा शिम्बिरस्याः। ततो वा ङीष्।) लताविशेषः। आलकुशी इति भाषा। तत्पर्य्यायः। कृष्णफला २ खड्गा ३ शूकरपादिका ४ काकाण्डोला ५ दधिपुष्पा ६ काकाण्डा ७ पर्य्यङ्कपादिका ८। अस्या गुणाः। वायुनाशित्वम्। गुरुत्वम्। उष्णत्वम्। कफपित्तकारित्वञ्च। इति राजनिर्घण्टः॥
(तत्पर्य्यायगुणाः। यथा, भावप्रकाशे।
"कोलशिम्बी कृष्णफला तथा पर्य्यङ्कपाकिका।
कोलशिम्बी समीरघ्नी गुर्व्वी कफपित्तहृत्।
शुक्राग्निस्वादकृद्रुक्ष्या रुचिकृत् बहुविड्गुरुः"॥)

कोला, स्त्री, (कुल + ज्वलादित्वात् णः ततष्टाप्।) कोलिवृक्षः। इति शब्दरत्नावली॥ पिप्पली। (अस्याः पर्य्याया यथा,—
"पिप्पली चपला शौण्डी वैदेही मागधी कणा।
कृष्णोपकुल्या मगधी कोला स्यात्तिक्ततण्डुला"॥)
चव्यम्। इति मेदिनी॥ (अस्याः पर्य्याया यथा,—
"चव्यं तेजोवती कोला नाकुली च विकोषणा"॥
इति वैद्यकरत्नमालायाम्॥)

कोलाञ्चः, पुं, देशविशेषः। इति शब्दरत्नावली॥ तत्र पुरं कान्यकुब्जम्॥

कोलाहलः, पुं, (कोल एकीभूताव्यक्तशब्दविशेषः तं आहलति आलिखतीति। हल विलेखने + अच्।) बहुविधदूरगाव्यक्तध्वनिः। तत्पर्य्यायः। कलकलः २। इत्यमरः। १।६।२५॥ कालकीलः ३। इति शब्दरत्नावली॥ (यथा, रामायणे। ३। ३१। ४१।
"ततो हलहलाशब्दः पुनः कोलाहलो महान्।
महान् राक्षसनादस्तु पुनस्तूर्य्यरवो महान्"॥)

कोलिः पुं स्त्री, (कुल् + "सर्व्वधातुभ्य इन्"। उणां ४।११७। इतीन्।) वृक्षविशेषः। कुलगाछ इति भाषा। तत्पर्य्यायः। कर्कन्धुः २ बदरी ३। इत्यमरः। २।४।३६॥ कर्कन्धूः ४ बदरः ५ कोली ६ कोला ७ कुवली ८। इति तट्टीकायां भरतः॥ कोलः ९। इति तट्टीका सारसुन्दरी॥ (यथा, गारुडे १९४ अध्याये।
"आतीपत्रं कोलिपत्रं तथाचैव मनःशिला।
एभिश्चैव कृता वर्त्तिर्वदरामौ महेश्वर!॥
धूमपानं कासहरं नात्र कार्य्या विचारणा"॥)

कोली, स्त्री, (कोलति पीनत्वेन जायते वर्द्धते वा। कुल् + अच् + गौरादित्वात् ङीष्। यद्वा, कोलि + वा ङीष्।) कोलिवृक्षः इत्यमरटीकायां भरतः॥ (अस्याः पर्य्याया यथा,—
"पुंसि स्त्रियान्तु कर्कन्धुर्बदरी कोलमित्यपि।
फेनिलं कुवलं घोण्टा सौवीरं वदरं महत्।
अजप्रिया कुहा कोली विषमोभयकण्टका"॥
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥
न्यग्रोधादिगणे व्यवहारोऽस्य यथा,—
"कोली कदम्बविरला मधुकं मधूकम्"॥
इति सूत्रस्थाने पञ्चदशेऽध्याये वाभटेनोक्तम्॥)

कोल्या, स्त्री, (कोलमर्हतीति यत्।) पिप्पली। इति रत्नमाला॥

कोविदः, त्रि, (कुङ् शब्दे विच् कौः वेदः तं वेत्ति जानातीति। विद् + "इगुपधेति"। ३।१।१३५। इति कः।) पण्डितः। इत्यमरः। २।७।५॥ (यथा, भागवते। १।१२।२९।
"इति राज्ञ उपादिश्य विप्रा जातककोविदाः।
लब्धोपचितयः सर्व्वे प्रतिजग्मुः स्वकान् गृहान्"॥)

कोविदारः, पुं, (कुं भुवं विदृणाति विदारयति भूमिं विदार्य्योद्गच्छतीत्यर्थः। दृ + "कर्म्मण्यण्"। ३।२।१। इति अण्। ततः पृषोदरात् साधुः।) रक्तकाञ्चनवृक्षः। तत्पर्य्यायः। चमरिकः २ कुद्दालः ३ युगपत्रकः ४। इत्यमरः। २।४।२२॥ काञ्चनारः ५ काञ्चनारकः ६ कान्तपुष्पः ७ करकः ८ कान्तारः ९ यमलच्छदः १० काञ्चनालः ११ ताम्रपुष्पः १२ कुदारः १३ रक्तकाञ्चनः १४। इति जटाधरः॥ विदलः १५। इति शब्दरत्नावली॥ अपि च।
"काञ्चनालः काञ्चनको गण्डारिः शोणपुष्पकः"॥
अथ काञ्चनारभेदः।
"कोविदारश्चमरिकः कुद्दालो युगपत्रकः।
कुण्डली ताम्रपुष्पश्चाश्मान्तकः स्वल्पकेशरी॥
काञ्चनारो हिमो ग्राही तुवरः श्लेष्मपित्तनुत्।
क्रमिकुष्ठगुदभ्रंशगण्डमालाव्रणापहः॥
कोविदारोऽपि तद्वत्स्यात् तयोः पुष्पं लघु स्मृतम्।
रूक्षं संग्राहि पित्तास्रप्रदरक्षयकासनुत्"॥
इति भावप्रकाशः। अस्य गुणाः। कषायत्वम्। संग्राहित्वम्। व्रणरोपणत्वम्॥ दीपनत्वम्। कफवातमूत्रकृच्छ्रनाशित्वञ्च। इति राजनिर्घण्टः॥ तत्पुष्पगुणाः। धारकत्वम्। रुचिकारित्वम्। रक्तपित्तरोगे सुपथ्यत्वञ्च। इति राजवल्लभः॥ (यथा, पाकशास्त्रे।
"कोविदारकलिकातिकोमला
तक्रसिद्धतिलतैलपाचिता।
हिङ्गुवासकसुवासवासिता
वेसवारलुलितातिशोभदा"॥
पारिजातः। हरिवंशे कोविदारस्य व्युत्पत्तिकथने एतद्विवृतिर्यथा। १२४। ७०-७१।
"कोऽप्ययं दारविलाङ्कुरजानन्तो यतो जनाः।
कोविदार इति ख्यातस्ततः स सुमहातरुः॥
मन्दारः कोविदारश्च पारिजातश्च नामभिः।
स वृक्षो ज्ञायते दिव्यो यस्यैतत् कुसुमोत्तमम्"॥)

कोशः, पुं, (कुश्यते संश्लिष्यते। कुश संश्लेषणे + घञ्कर्त्तरि चेति अधिकरणादौ घञ्।) अण्डम्। इति शब्दरत्नावली॥ कुश्यते आक्रुश्यते आयस्थानेभ्यः कोषः। कुश ण निष्कर्षे घञ् कोषो मूर्द्धन्यान्तः तालव्यान्त इत्यन्ये। इति भरतः। कृताकृतं हेमरूप्यम्। तत्पर्य्यायः। हिरण्यम् २। इत्यमरः। २।९।९१॥ कृताकृतं हेम-

खरघातन:, पुं, ( खरं उग्रं दोषविशेषं घातयतीति । हन् + स्वार्थे णिच् + कर्त्तरि ल्युः । ) नागकेशरः । इति शब्दचन्द्रिका ॥ (खरं एतन्नाम्ना प्रसिद्धं राक्षसं घातयतीति । श्रीरामचन्द्रः । इति व्युत्पत्तिलब्धोऽर्थः ॥)

खरच्छद:, पुं, (खरस्तीक्ष्णश्छदः पत्रमस्य ।) उलूपम् । उलुखड़ इति भाषा ॥ इत्कटः । ओकड़ा इति भाषा । इति रत्नमाला ॥ क्षुद्ररत्नम् । इति राजनिर्घण्टः ॥

खरणस:, त्रि, ( खरा तीक्ष्णा नासिका यस्य । "खुरखराभ्यां वा नस् ।" इति वार्त्तिकं पक्षे "अच् नासिकायाः ।" ५ । ४ । ११८ । इत्यच् नसादेशश्च । ततः "पूर्ब्बपदात् संज्ञायामगः ।" ८।४।३। इति णत्वम् । ) तीक्ष्णनासिकः । तत्पर्य्यायः । खरणाः २ । इत्यमरः । २ । ६ । ४६ ॥

खरणा:, [स्] त्रि, (खरा तीक्ष्णा नासिका यस्य । "खुरखराभ्यां वा नस् ।" वार्त्तिं इति नसादेशः । "पूर्ब्बपदात् संज्ञायामगः ।" ८।४।३। इति णत्वम् ।) तीक्ष्णनासिकः । इत्यमरः । २ । ६ । ४६ ॥

खरत्वक्, स्त्री, (खरा तीक्ष्णा त्वक् यस्याः ।) अलम्बुषा । लज्जालुप्रभेदः । इति भावप्रकाशः ॥

खरदण्डं, क्ली, ( खरः कर्कशः दण्डो नालं यस्य कण्टकावृततयेति भावः ।) पद्मम् । इति धरणी ॥

खरदला, स्त्री, (खरं कर्कशं दलं पत्रमस्याः ।) घोमाफला । इति शब्दचन्द्रिका ॥ डुमुर इति भाषा ॥

खरदूषण:, पुं, ( खरं उग्रं दूषणं मादकताजनकदोषो यस्य । ) धुस्तूरः । इति शब्दचन्द्रिका ॥ खरेण राक्षसेन सह दूषणश्च ॥ ( त्रि, बहुदोषः ॥ )

खरध्वंसी [ न् ] पुं, ( खरं तन्नामविश्रुतं राक्षसं ध्वंसयतीति । ध्वन्स् + णिच् + णिनिः । ) श्रीरामः । इति शब्दरत्नावली ॥ ( खरं कंसचरं दैत्यं ध्वंसयतीति । कृष्णः । इति व्युत्पत्तिलब्धोऽर्थः ॥ )

खरनादिनी, स्त्री, ( खरं कर्कशं नदतीति । नद् + णिनिः । ततः स्त्रियां ङीप् । ) रेणुकानामगन्धद्रव्यम् । इति शब्दचन्द्रिका ॥

खरपत्र:, पुं, ( खरं पत्रमस्य । ) शुभ्रपत्रतुलसी । शाकाख्यवृक्षः । इति रत्नमाला ॥ यावनालशरः । हरिद्गर्भः । मरुवकः । इति राजनिर्घण्टः ॥

खरपत्रक:, पुं, ( खरपत्र + कन् संज्ञायां कन् वा । ) तिलकवृक्षः । इति शब्दचन्द्रिका ॥

खरपत्री, स्त्री, ( खरपत्र + गौरादित्वात् ङीष् । ) गोजिह्वावृक्षः । काकोडुम्बरिका । इति राजनिर्घण्टः ॥

खरपात्रं, क्ली, ( खरं कठोरं कठिनं वा पात्रम् । ) लौहपात्रम् । इति त्रिकाण्डशेषः ॥

खरपादाढ्य:, पुं, ( खरैः दृढैः पादैर्मूलैराढ्यः । ) कपित्थवृक्षः । इति शब्दचन्द्रिका ॥

खरपुष्प:, पुं, ( खरं पुष्पमस्य । ) मरुवकवृक्षः । इति रत्नमाला ॥

खरपुष्पा, स्त्री, ( खरं पुष्पं खराणि पुष्पाणि वा यस्याः । ) बर्ब्बरा । इत्यमरः । २ । ४ । १३६ ॥ बावुइ तुलसी इति भाषा ॥ (यथास्याः पर्य्यायाः । "बर्ब्बरी तुवरी तुङ्गी खरपुष्पाजगन्धिका ॥" इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥ व्यवहारोऽस्या यथा चरके विमानस्थानेऽष्टमेऽध्याये कटुकस्कन्धे । "एला-कुष्ठ-भल्लातकास्थि-हिङ्गु-किलिम-मूलक-सर्षप-लशुन-करञ्ज-शिग्रुक-मधुशिग्रुक-खरपुष्पा" इत्यादिषु ॥)

खरप्रिय:, पुं, ( खलः धान्यकलायादिमर्द्दनस्थानं प्रियोऽस्य । लस्य रत्वम् । ) पारावतः । इति शब्दमाला ॥

खरमञ्जरी, स्त्री, ( खरा मञ्जरी यस्याः । ) अपामार्गः । इत्यमरः । २ । ४ । ८६ ॥ (खर्ज्जिकाद्यतैलेऽस्या व्यवहारो यथा,—
"खर्ज्जिकासिन्धुदन्त्यग्निरूपिकानलनीलिका ।
खरमञ्जरीबीजेषु तैलं गोमूत्रपाचितम् ।
दुष्टव्रणप्रशमनं कफनाडीव्रणापहम् ॥"
इति वैद्यकचक्रपाणिसंग्रहे नाडीव्रणाधिकारे ॥)

खररोमा [ न् ] पुं, ( खरं रोम अस्य । ) नागभेदः । इति जटाधरः ॥

खरवल्लिका, स्त्री, ( खरा वल्लरी ततः स्वार्थे कन् टाप् च ईकारस्य ह्रस्वत्वं रस्य लत्वञ्च । ) नागबला । इति रत्नमाला ॥ गोरक्षचाउलिया इति भाषा ॥

खरशब्द:, पुं, ( खर उग्रः शब्दोऽस्य । ) कुररपक्षी । इति राजनिर्घण्टः ॥

खरशाक:, पुं, ( खरं शाकमस्य । ) भार्गी । इति भावप्रकाशः ॥ बामनहाटी इति भाषा ॥

खरस्कन्ध:, पुं, ( खरः स्कन्धोऽस्य । ) प्रियालवृक्षः । इति राजनिर्घण्टः ॥

खरस्कन्धा, स्त्री, ( खरः स्कन्धोऽस्याः । ) खर्ज्जूरी । इति राजनिर्घण्टः ॥

खरस्वरा, स्त्री, ( खरं रौद्रं स्वराति शापयतीति । स्वृ + अच् । ) वनमल्लिका । इति रत्नमाला ॥

खरा, स्त्री, (खं आकाशं लाति गृह्णातीति । ला + कः । लस्य रत्वम् ।) देवताड़वृक्षः । इत्यमरः । २ । ४ । ९८ ॥

खरांशु:, पुं, ( खरा अंशवो रश्मयो यस्य । ) सूर्य्यः । इति त्रिकाण्डशेषः ॥

खरागरी, स्त्री, (खरं आगिरतीति । आ + गॄ + अच् । ततो गौरादित्वात् ङीष् । ) देवताड़वृक्षः । इत्यमरटीकायां रायमुकुटः ॥ (पर्य्यायोऽस्या यथा, वैद्यकरत्नमालायाम् ।
"वेणी जीमूतकश्चाखुविषाणिलोमशच्छदः ।
खरागरी कदम्बश्च सुद्धाको देवताड़कः ॥")

खराब्दाङ्कुरकं, क्ली, (खराब्दात् तीव्रगर्ज्जनमेघात् अङ्कुरयतीति । अङ्कुरि + ण्वुल् । अस्य हि मूलवज्जलदध्वनेरङ्कुरोत्पत्तेस्तथात्वम् । ) वैदूर्य्यमणिः । इति राजनिर्घण्टः ॥

खराश्वा, स्त्री, ( खरैरश्यते भुज्यतेऽसौ । अश भोजने + "उल्वादयश्च ।" उणां । ४ । ९५ । इति वः ।) मयूरशिखा । वनजटा इति ख्याता । चैत्रयमानिका इति केचित् । इत्यमरभरतौ ॥ (यथास्या गुणाः ।
"खराश्वा कफवातघ्नी वस्तिरोगरुजापहा ॥"
इति चरके सूत्रस्थाने सप्तविंशेऽध्याये ॥)

खराह्वा, स्त्री, (खरं तीव्रगन्धं आह्वयतीति । ह्वे + कः । स्त्रियां टाप् । ) अजमोदा । इति राजनिर्घण्टः ॥ ( पर्य्यायोऽस्या यथा,—
"अजगन्धाजमोदाख्या खराह्वा कारवी च सा ॥"
इति वैद्यकरत्नमालायाम् ॥)

खरिका, स्त्री, (खात् शून्यात् गन्धविशेषं रातीति । रा + कः ततः संज्ञायां कन् टाप् अत इत्वञ्च ।) कस्तूरीभेदः । सा तु चूर्णाकृतिः । इति राजनिर्घण्टः ॥

खरु:, पुं, ( खन् + "खरुशङ्कुपीयुनीलङ्गुलिगु ।" उणां १ । ३७ । इति कुः रश्चान्तादेशः । ) शिवः । हयः । दर्पः । दन्तः । इति मेदिनी । रे । २१ ॥ कामदेवः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ शुक्लवर्णः । इति हेमचन्द्रः ॥

खरु:, त्रि, ( खन् + "खरुशङ्कुपीयुनीलङ्गुलिगु ।" उणां १ । ३७ । इति कुः रश्चान्तादेशः । ) श्वेतः । इति मेदिनी । रे । २२ ॥ निषिद्धकाङ्क्षी । इति हेमचन्द्रः ॥ निर्बोधः । क्रूरः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ तीक्ष्णः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

खर्ज्ज, व्यथामृजोः । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) खर्ज्जति । मृट् मार्ज्जनम् । इति दुर्गादासः ॥

खर्ज्जिका, स्त्री, (खर्ज्ज + ण्वुल् + स्त्रियां टाप् अत इत्वञ्च । ) अवदंशः । इति शब्दचन्द्रिका ॥

खर्ज्जु:, पुं, ( खर्ज्ज + उन् । ) खर्ज्जूरी । कण्डुः । कीटः । इति हेमचन्द्रः ॥

खर्ज्जुरं, क्ली, ( खर्ज्ज + उरच् । ) रौप्यम् । इत्यमरटीकायां रमानाथः ॥

खर्ज्जू:, स्त्री, ( खर्ज्ज व्यथने + "कृषिचमितनीति ।" उणां १ । ८२ । इति ऊः । ) कण्डुः । कीटः । इत्युणादिकोषः ॥

खर्ज्जूघ्न:, पुं, ( खर्ज्जूं कण्डूयनं हन्तीति । हन् + टक् । ) चक्रमर्द्दः । धत्तूरः । अर्कवृक्षः । इति राजनिर्घण्टः ॥

खर्ज्जूरं, क्ली, ( खर्ज्जूरस्य फलम् । फले विहितस्याणो लुप् । ) खर्ज्जूरफलम् । अस्य गुणाः । मधुरत्वम् । शीतलत्वम् । गुरुत्वम् । क्षयाभिघातदाहवातपित्तरोगे हितत्वम् । हृद्यत्वम् । शुक्रवृद्धिकारित्वञ्च । इति राजवल्लभः ॥ ("अपक्वखर्ज्जूरफलं त्रिदोषशमनं मतम् ।
पक्वमेव हितं श्रेष्ठं त्रिदोषशमनं परम् ॥"
इति प्रथमे स्थाने दशमेऽध्याये हारीतेनोक्तम् ॥ यथा च चरके सूत्रस्थाने सप्तविंशेऽध्याये ।
"मधुरं बृंहणं वृष्यं खर्ज्जूरं गुरु शीतलम् ।

श्चयेऽभिघाते दाहे च वातपित्ते च तद्धितम् ॥”) रौप्यम् । हरितालम् । इति हेमचन्द्रः ॥ खलः । इति मेदिनी ॥

**खर्ज्जूरः**, पुं स्त्री, ( खर्ज्ज माज्जने + “खर्ज्जिपिञ्जादिभ्य ऊरोलचौ ।” उणां ४ । ९० । इति ऊरः । ) खर्ज्जूरीवृक्षः । खेजुर गाछ इति भाषा ॥ अस्य मस्तिष्कगुणाः । स्वादुत्वम् । तिक्तत्वम् । कषायत्वम् । मूत्रातङ्करोगनाशित्वम् । बलप्राणशुक्रवृद्धिकारित्वञ्च । इति राजवल्लभः ॥

(“खर्ज्जूरञ्च विषं हन्ति तदा वै नात्र संशयः ।” इति वैद्यकभैषज्यग्रन्थान्तरीयस्थे विषाधिकारे ॥) वृश्चिकः । इति मेदिनी ॥

**खर्ज्जूरिका**, स्त्री, ( खर्ज्जूर + स्त्रियां गौरादित्वात् ङीष् ततः संज्ञायां कन् टाप् च ततो ह्रस्वः । ) मिष्टान्नविशेषः । इति पाकराजेश्वरः । मिटा गजा इति भाषा ॥

**खर्ज्जूरी**, स्त्री, ( खर्ज्जूर + गौरादित्वात् ङीष् । ) वनखर्ज्जूरः । इत्यमरः । २ । ४ । १७० ॥ खर्ज्जूरवृक्षः । खेजुरगाछ इति भाषा । तत्पर्य्यायः । स्वरस्कन्धा २ दुष्प्रधर्षा ३ दुरारुहा ४ निश्रेणी ५ कषायी ६ यवनेष्टा ७ चरप्रिया ८ । अस्या गुणाः । कषायत्वम् । पक्वे गौल्यत्वम् । कषायित्वम् । पित्तघ्नत्वम् । वृंहणत्वम् । कफशुक्रवृद्धिकारित्वञ्च । इति राजनिर्घण्टः ॥ तत्पर्य्यायगुणाः ।

“भूमिखर्ज्जूरिका स्वाद्वी दुरारोहा मृदुच्छदा ।
तथा स्वल्पफला काककर्कटी स्वादुमस्तका ॥ * ॥
पिण्डखर्ज्जूरिका त्वन्या सा देशे पश्चिमे भवेत् ।
खर्ज्जूरी गोस्तनाकारा परद्वीपादिहागता ॥
जायते पश्चिमे देशे सा च्छोहारेति कीर्त्त्यते ।
खर्ज्जूरीत्रितयं शीतं मधुरं रसपाकयोः ॥
स्निग्धं रुचिकरं हृद्यं क्षतक्षयहरं गुरु ।
तर्पणं रक्तपित्तघ्नं पुष्टिविष्टम्भशुक्रदम् ॥
कोष्ठमारुतहृद्बल्यं वान्तिवातकफापहम् ।
ज्वराभिघातक्षुत्तृष्णाकासश्वासनिवारकम् ॥
मदमूर्च्छामरुत्पित्तमद्योद्भूतगदान्तकृत् ।
महतीभ्यां गुणैरल्पा स्वल्पा खर्ज्जूरिका स्मृता ॥ * ॥
खर्ज्जूरीतरुतोयन्तु मदपित्तकरं भवेत् ।
वातश्लेष्महरं रुच्यं दीपनं बलशुक्रकृत् ॥ * ॥
सुलेमानी तु मृदुला वल्लिहीनफला च सा ।
सुलेमानी श्रमभ्रान्तिदाहमूर्च्छास्रपित्तहृत् ॥”
इति भावप्रकाशः ॥

**खर्द्द**, दशने । इति कविकल्पद्रुमः ॥ ( भ्वा-परं-सकं-सेट् । ) दशनं दन्तकरणकक्रिया । खर्द्दति मत्कुणो लोकः । केचित्तु दन्दशूके इति पठित्वा दन्दशूकः दन्दशूककर्त्तृकक्रियेत्याहुः । इति दुर्गादासः ॥

**खर्परः**, पुं, ( कर्परः । पृषोदरात् खत्वम् । ) तस्करः । धूर्त्तः । भिक्षापात्रम् । कपालम् । इति मेदिनी ॥ छत्रम् । इति त्रिकाण्डशेषः ॥

**खर्परी**, स्त्री स्त्री, ( खर्परं उपधातुभेदकारकत्वेनास्त्यस्या इति अच् ततो गौरादित्वात् ङीष् । ) कर्परीतुत्थम् । इत्यमरटीका ॥

**खर्परीतुत्थं**, क्ली, ( खर्पर्य्येव तुत्थं खर्परीरूपं तदाख्यं तुत्थं वा । ) तुत्थविशेषः । तत्पर्य्यायः । खर्परीरसकम् २ चक्षुष्यम् ३ अमृतोत्पन्नम् ४ तुत्थम् ५ खर्परिका ६ । अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । चक्षुर्हितत्वम् । रसायनत्वम् । त्वग्दोषशमनत्वम् । दीप्तत्वम् । बलपुष्टिप्रदत्वञ्च । इति राजनिर्घण्टः ॥

**खर्व्व**, गतौ । इति कविकल्पद्रुमः ॥ ( भ्वा-परं-सकं-सेट् । ) खर्व्वति । इति दुर्गादासः ॥

**खर्व्वं**, क्ली, ( खर्व्व + अच् । ) संख्याविशेषः । इति मेदिनी ॥ तत्तु दशार्ब्बुदसंख्या । इति लीलावती ॥ दशवृन्दसंख्या । १०,०००,०००,००० । इति स्मृतिः ॥ ( सहस्रमहापद्मसंख्या । इति गोः रामायणम् । यथा, तत्रैव । ६ । ४ । ५६-५९ ।
“शतं शतसहस्राणां कोटिमाहुर्मनीषिणः ।
शतं कोटिसहस्राणां शङ्ख इत्यभिधीयते ॥
शतं शङ्खसहस्राणां वृन्दमाहुर्मनीषिणः ।
शतं वृन्दसहस्राणां महावृन्दमिति स्मृतम् ॥
महावृन्दसहस्राणां शतं पद्मं परिश्रुतम् ।
शतं पद्मसहस्राणां महापद्मं विभाव्यते ॥
महापद्मसहस्राणां तथा खर्व्वमिहोच्यते ॥”)

**खर्व्वः**, पुं, ( खर्व्व + अच् । ) कुवेरस्य निधिविशेषः । इति शब्दरत्नावली ॥ दशवृन्दसंख्या । इति स्मृतिः ॥ कुब्जकवृक्षः । इति राजनिर्घण्टः । ( वामनः । इत्यमरः । २ । ६ । ४६ ॥ स्त्री । गायत्त्रीस्वरूपा भगवती । यथा, देवीभागवते । १२ । ६ । ३८ ।
“खड्गखेटकरा खर्व्वा खेचरी खगवाहना ॥”)

**ख(र्व्व)र्व्वः**, त्रि, ( खर्व्व + अच् । ) क्षुद्रः । खाटो छोट इत्यादि भाषा । तत्पर्य्यायः । न्यक् २ नीचः ३ वामनः ४ ह्रस्वः ५ । इत्यमरः । ३ । १ । ७० ॥ निखर्व्वः ६ खडलः ७ खर्व्वशाखः ८ । इति हेमचन्द्रः ॥ अनुचः ९ अनायतः १० । इति जटाधरः ॥

**खर्व्वशाखः**, त्रि, ( खर्व्वा शाखा हस्तपदाद्यवयवाः यस्य । ) वामनः । खर्व्वः । इति हेमचन्द्रः ॥

**खर्म्मः**, पुं, ( खुर + बाहुलकात् मक् पृषोदरात् उकारस्य लोपः । ) पौरुषम् । कौषेयांशुकम् । पट्टवस्त्रम् । इति मेदिनी ॥

**खर्व्व**, गर्व्वे । इति कविकल्पद्रुमः ॥ ( भ्वा-परं-अकं-सेट् । ) अन्तःस्थवकारान्तोऽयम् ॥ खर्व्वति । इति दुर्गादासः ॥

**खर्व्वः**, त्रि, ( खर्व्व + अच् । ) ह्रस्वः । वर्ग्यबकारान्तखर्व्वशब्दार्थोऽप्यत्र ॥

**खर्व्वटः**, पुं स्त्री, ( खर्व्व + अटन् ) चतुःशतग्राममध्यस्थलम् । इति भूरिप्रयोगः ॥ पर्व्वतप्रान्तग्रामः । इति श्रीभागवतटीकायां श्रीधरस्वामी ॥

**खर्व्वुरा**, स्त्री, ( खर्व्व + उरच् टाप् च । ) तरटीवृक्षः । इति राजनिर्घण्टः ॥

**खर्व्वुजं**, क्ली, ( खर्व्व + जन् + डः । ) मधुतुम्बा । इति भावप्रकाशः ॥ खरमुजा इति भाषा ( अस्य नामानि गुणाश्च यथा,—
“दशाङ्गुलन्तु खर्व्वुजं कथ्यते तद्गुणा अथ ।
खर्व्वुजं मूत्रलं बल्यं कोष्ठशुद्धिकरं गुरु ॥
स्निग्धं स्वादुतरं शीतं वृष्यम्पित्तानिलापहम् ।
तेषु यच्चाम्लमधुरं सक्षारञ्च रसाद्भवेत् ॥
रक्तपित्तकरन्तत्तु मूत्रकृच्छ्रकरम्परम् ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**खल**, चलनार्थे । इति कविकल्पद्रुमः ॥ ( भ्वा-परं-अकं-सेट् । ) चलनार्थश्चालचयौ । चालनञ्च खलनम् । खलति खलो धर्म्मात् । इति दुर्गादासः ॥

**खलं**, क्ली, ( खल + अच् । ) भूः । स्थानम् । कल्कः । इति मेदिनी । खलाधानम् । इति हेमचन्द्रः ॥ धान्यमाड़िवार खामार इति भाषा ॥ ( यथा, मनुः । ११ । १७ ।
“खलात् क्षेत्रादगाराद्वा यतो वाऽप्युपलभ्यते ॥”)

**खलः**, पुं, ( खल + अच् ) सूर्य्यः । इति भूरिप्रयोगः ॥ तमालवृक्षः । इति शब्दचन्द्रिका ॥ धत्तूरवृक्षः । इति राजनिर्घण्टः ॥ (प्रवाहिकारोगे भेषजादिविहितपथ्यविशेषः । यथा, चिकित्सास्थाने नवमेऽध्याये वाभटेनोक्तम् ।
“कल्को विल्वशलाटूनां तिलकल्कश्च तत्समः ।
दध्नः सरोऽम्लः सस्नेहः खलो हन्ति प्रवाहिकाम् ॥”)

**खलः**, त्रि, नीचः । अधमः । इति मेदिनी ॥ क्रूरः । ( यथा, मृच्छकटिकायां १ मे अङ्के ।
“खलस्वभावं भवितव्यता तथा
चकार सर्व्वं किल शूद्रको नृपः ॥” )
तत्पर्य्यायः । दुर्ज्जनः २ पिशुनः ३ । इत्यमरः । ३ । १ । ४७ ॥ दुर्व्विधः ४ विश्वकद्रुः ५ नृशंसः ६ घातुकः ७ क्रूरः ८ पापः ९ । इति जटाधरः ॥

**खलतिः**, पुं, ( स्खलन्ति केशा अस्मात् । स्खल सञ्चलने + “खलतिः ।” उणां ३ । ११२ । इति निपातनात् साधुः । ) इन्द्रलुप्तरोगयुक्तः । टाकपड़ा माथा इति भाषा । तत्पर्य्यायः । खल्वाटः २ ऐन्द्रलुप्तिकः ३ शिपिविष्टः ४ बभ्रुरथः ५ । इति हेमचन्द्रः ॥ खलीटः ६ । इति त्रिकाण्डशेषः । खलिटः ७ । इति शब्दरत्नावली ॥
(“रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम् ॥
प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः ।
रोमकूपान् रुणद्ध्यस्य तेनान्येषामसम्भवः ॥
तदिन्द्रलुप्तं रुढ्याख्यं प्राहुश्चाचेति चापरे ।
खलतेरपि जन्मैवं शातनं तत्र तु क्रमात् ॥”
इति वाभट्टे उत्तरस्थाने चतुर्विंशेऽध्याये ॥)

**खलपूः**, त्रि, (खलं भूमिं पुनाति परिष्कृतं करोतीति । खल + पू + क्विप् । ) मार्ज्जनकारी । झाड़ुदार फराश इत्यादि भाषा । तत्पर्य्यायः । बहुकरः २ । इत्यमरः । ३ । १ । १७ ॥

**खलमूर्त्तिः**, पुं, ( खल इव अनिष्टकारकत्वात् उग्रा मूर्त्तिरस्य । ) पारदः । इति शब्दचन्द्रिका ॥ पारा इति भाषा ॥

खलाधारा, स्त्री, ( खल आधारो यस्या: ।) तैल-पायिका । इति जटाधर: ॥ आरसुला इति भाषा ॥

खलि:, पुं, ( खल+इन् । ) तैलकिट्टम् । इति राजनिर्घण्ट: ॥ (यथा, भास्तरत्नाकरे । ४।६८ ।
"स्थाल्यां वैदूर्य्यमय्यां पचति तिलखलिं चन्दनै-रिन्धनौघै: ॥")

खलिन:, पुं स्त्री, ( खे अश्वमुखच्छिद्रे लीन: पृषो-दरादित्वात् वा ह्रस्व: ।) खलीन: । इत्यमर-टीकायां रायमुकुट: ॥ ( यथा, कादम्बर्य्याम्
"उभयत: खलिनकनककटकावलम्बाभ्यां मदे मदे लालाकुसुमस्तबकाभ्यां पुरुषाभ्यामवलम्ब्यमानाम् ।"
चन्द्रापीडस्याश्वमिदमित्यर्थ: ॥ )

खलिनी, स्त्री, (खलानां समूह: । "इनि चकड्यच ।" ४ । २ । ५१ । इति इनि: । ततो ङीप् । ) खलसमूह: । धानेर अनेक खामार इति भाषा ॥ तत्पर्य्याय: । खल्या २ । इत्यमर: । ३ । २ । ४२ ॥ तालमूली । इति रत्नमाला ॥

खलिश:, पुं, ( खे जलादूर्द्ध्वाकाशे लिशति ईषदुद्-गच्छतीति । यद्वा, खे जलाभ्यन्तरे छिद्रादौ लिशति स्वल्पीभावेन तिष्ठतीति । लिश् + क: ।) खगामख्यातमत्स्य: । खलिशामाछ इति भाषा ॥ तत्पर्य्याय: । शकुलार्भक: २ खलेशय: ३ । इति शब्दरत्नावली ॥ अस्य गुणा: । पाचित्वम् । कषायत्वम् । वायुकोपनत्वम् । रूक्षत्वम् । लघुत्वम् । शूलहरत्वम् । किञ्चिदामविनाशित्वञ्च । इति राजवल्लभ: ॥ खलिशोऽपि पाठ: ॥

खलीकार:, पुं, ( खल+कृ+घञ् । अभूततद्भावे च्वि: ।) अपकार: । इति जटाधर: ॥ (निर्भर्त्सनम् । इति चिन्तामणि: ॥ )

खलीन:, पुंस्त्री, (खे अश्वमुखच्छिद्रे लीन: ।) कविका । इत्यमर: । २ । ८ । ४९ ॥ काँड़याल इति भाषा ॥ (यथा, महाभारते । १ । १६६ । १५ ।
"शतं रथानां वरहेममालिनां
चतुर्युजां हेमखलीनशालिनाम् ॥")

खलु, व्य, ( खल्+बाहुलकात् उन् । ) निषेध: । वाक्यालङ्कार: । ( यथा, माघे । २ । ७० ।
"अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम् ।
सामानाधिकरण्यं हि तेजस्तिमिरयो: कुत: ॥"
[sic as printed:] "अलङ्घ्यत्वाज्जनैरन्यैः क्षुभितोदन्वदूर्जितम् ।"

"सम्प्रत्यसाम्प्रतं वक्तुमुक्ते मुषलपाणिना ।
निर्द्धारितेऽर्थे लेखेन खलूक्त्वा खलु वाचिकम् ॥"
"अत्राद्यखलुशब्द: प्रतिषेधार्थे द्वितीय: वाक्यालङ्कारे ॥" इति तट्टीकायां मल्लिनाथ: ॥) जिज्ञासा । (यथा, शकुन्तले । "स खल्वधीते वेदम् ?") अनुनय: । इत्यमर: । ३ । ४।१८ ॥ (यथा, शकुन्तले ।
"न खलु न खलु मुग्धे ! साहसं कार्य्यमेतत्" ॥) निश्चितम् । (यथा, कुमारे । ४ । २८ ।
"दयितास्वनवस्थितं नृणां
न खलु प्रेम चलं सुहृज्जने ॥")
पदवाक्यादिपूरणम् । ( यथा, रामायणे । ३ । ४१ । ६ ।
"वध्या: खलु न वध्यन्ते सचिवास्तव रावण ! ।
ये त्वामुत्पथमारूढं न निगृह्णन्ति सर्व्वश: ॥" )
वीप्सा । इति शब्दरत्नावली ॥ (यथा,—
शाकुन्तले १ मे अङ्के ।
"न खलु न खलु बाण: सन्निपात्योऽयमस्मिन्
मृदुनि मृगशरीरे तूलराशाविवाग्नि: ॥")

खलुक्, [ज्] पुं, ( खं इन्द्रियं इन्द्रियज्ञानं लुञ्च-यति हन्तीति । ख+लुञ्च+क्विप् ।) अन्धकार: । इति त्रिकाण्डशेष: ॥

खलुरेष:, पुं, (खलुरिष्यते गम्यतेऽसौ । खलु+रिष् + कर्म्मणि घञ् ।) मत्स्यभेद: । इति शब्दचन्द्रिका ॥

खलूरिका, स्त्री, ( खलु+रिष्+निपातनात् साधु: ।) शस्त्राभ्यासभूमि: । इति हेमचन्द्र: ॥

खलेधानी, स्त्री, ( खले धीयन्ते वृषभा अस्मिन् । धा+अधिकरणे ल्युट् ततो ङीप् । ) मेधि: । खलेपशुबन्धनदारु । इति जटाधर: ॥

खलेवाली, स्त्री, ( खले वाल्यन्ते चाल्यन्तेऽत्र वृषभा इति । वल+अधिकरणे घञ् गौरादित्वात् ङीष् । ) खले गोबन्धनदारु । इति हेमचन्द्र: ॥ मेइ काठ इति भाषा ॥ ( यथा, कात्यायनश्रौतसूत्रे । २२ । ३ । ४८ ।
"खलेवालीयूपो लाङ्गलेषा ॥")

खलेश:, पुं, ( खे जलादूर्द्ध्वाकाशे गमनकाले लिशति संश्लिष्यतीति । लिश् + अच् ।) खलिशमत्स्य: । इति हारावली ॥

खलेशय:, पुं, ( खलेशं जलादूर्द्ध्वस्थाकाशसंसर्गं यातीति । या+क: । ) खलिशमत्स्य: । इति शब्दरत्नावली ॥

खल्या, स्त्री, (खलानां समूह: । यत् ।) खलिनी । इत्यमर: । ३ । २ । ४२ ॥ धानमाड़ार अनेक खामार इति भाषा ॥

खल्ल:, पुं, ( खलतीति क्विप् खल् तं लातीति । ला आदाने+क: । ) वस्त्रप्रभेद: । गर्त्त: । चर्म्म । चातकपक्षी । इति मेदिनी ॥ दृति: । इति हेमचन्द्र: ॥ मशक इति भाषा । औषधमर्द्दनपात्रम् । खल इति भाषा । इति वैद्यकम् ॥
("अजाशकृत्तुषाग्निश्च भूगर्भे द्वितयं क्षिपेत् ।
तस्योपरिस्थितं खल्लं तप्तखल्लमिति स्मृतम् ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधिकारे ॥)

खल्लिका, स्त्री, ( खल्ल+संज्ञायां कन् ततष्टाप् । कापि अत इत्वम् । ) भर्ज्जनम् । पिष्टकादिभर्ज्जनपात्रम् । इति शब्दचन्द्रिका ॥

खल्लिट:, त्रि, (खल्ल+इन् । खल्लि इव टलतीति । टल् + ड: ।) खलति: । इति शब्दरत्नावली ॥

खल्ली, स्त्री, ( खल्ल+गौरादित्वात् ङीष् । ) हस्तपादावमर्द्दनाख्यरोग: । इति मेदिनी ॥ तस्य लक्षणं यथा, माधवकर: ।
"खल्ली तु पादजङ्घोरुकरमूलावमोटनी ॥"
तच्चिकित्सा यथा, भावप्रकाशे ।
"कुष्ठसैन्धवयो: कल्कश्चुक्रतैलसमन्वित: ।
सुखोष्णो मर्द्दने योज्य: खल्लीशूलनिवारण: ॥"
अपि च भैषज्यरत्नावल्याम् ।
"खल्लां स्निग्धाम्ललवणै: स्वेदोष्णासेचनाहनम् ॥"

खल्लीट:, त्रि, ( खल्लीव टलतीति । टल्+बाहुलकात् ड: । ) खलति: । इति त्रिकाण्डशेष: ॥ (तच्चिकित्सा यथा, गारुडे । १८०।१ ।
"समरात्मप्रजायन्ते खल्लीटस्य कचा: शुभा: ।
हस्तिदन्तमसीयुक्तात् छागाक्षीररसाञ्जनात् ॥")

खव, श भूतिप्रादुर्भावे । इति कविकल्पद्रुम: ॥ ( क्र्यां-परं-अकं-सेट् । ) भूति: सम्पत्ति: पूति: पवित्रता तयोरुत्पत्ति: प्रादुर्भाव: ॥

खवल्ली, स्त्री, ( खे आकाशे स्थिता वल्ली । ) आकाशवल्ली । इति राजनिर्घण्ट: ॥ (अस्या: पर्य्याया गुणाश्च । अथ आकाशवल्ली । अमरवेलि इति च भाषा ।
"आकाशवल्ली तु बुधै: कथितामरवल्लरी ।
खवल्ली ग्राहिणी तिक्ता पिच्छिलाक्ष्यामयापहा ।
तुवराग्निकरी हृद्या पित्तश्लेष्मामनाशिनी ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

खवारि, क्ली, ( खे आकाशे स्थितं वारि उदकम् । खादागतं वारि वा । ) दिव्योदकम् । इति राजनिर्घण्ट: ॥

खवाष्प:, पुं, (खे आकाशे शून्ये स्थितो वाष्प: ।) हिमम् । इति हारावली ॥

खश:, पुं, देशविशेष: । इति त्रिकाण्डशेष: ॥ (तद्देशवासिनि तद्देशनृपे च बहुषु अणो लुक् ।) तथा हि मनु: । १० । ४४ ।
"पौण्ड्रकाश्चौड्रद्रविडा: काम्बोजा यवना: शका: ।
पारदा: पह्लवाश्चीना: किराता दरदा: खशा: ॥")

खशा, स्त्री, मुरानामगन्धद्रव्यम् । इति शब्दचन्द्रिका ॥ ( कशयोस्तुल्यार्थत्वात् ख: प्रजापतिर्दक्ष: आदौ तद्गर्भे कन्यात्मकबीजभावेन शेते इति । ख+शी+ड: ततष्टाप् । ) दक्षकन्या । सा च काश्यपपत्नी । यथा,—
"धर्म्मपत्न्य: समाख्याता: काश्यपस्य वदाम्यहम् ।
अदितिर्दितिर्दनु: काला अनायु: सिंहिका मुनि: ॥
कद्रु: प्राधा इरा क्रोधा विनता सुरभि: खशा ॥"
"इरा वृक्षलतावल्ली: तृणजातीश्च सर्व्वश: ।
खशा च यक्षरक्षांसि मुनिरप्सरसस्तथा ॥"
इति गारुडे ६ अध्याय: ॥

खश्टिट:, पुं, ( खं श्टिटति इति । श्टिट् अनादरे अच् । अस्य गमनसमये सत्त्वानादरत्वेन गतियोग्यत्वाभावेऽपि सत्त्वानादरेण गमनात्तथात्वम् । ) खलिशमत्स्य: । इति त्रिकाण्डशेष: ॥

खश्वास:, पुं, ( खस्य आकाशस्य श्वास इव । ) वायु: । इति त्रिकाण्डशेष: ॥

खष, वधे । इति कविकल्पद्रुम: ॥ ( भ्वा-परं-सकं-सेट् । ) खषति । इति दुर्गादास: ॥

खष्यं, क्ली, ( खन्+"खष्यशिष्यचाय्येति ।" उणां ३ । २८ । इति यप्रत्ययात् निपातनात् सिद्धम् ।) क्रोध: । बलात्कार: । इत्युणादिकोष: ॥

खस:, पुं, (खं इन्द्रियादीन्द्रियं स्यति निश्चलीकरोतीति । सो+क: ।) पामा । खोस इति भाषा ॥ तत्पर्य्याय: । पाम २ कच्छू: ३ विचर्च्चिका ४ । इति हेमचन्द्र: ॥ ( पामन्शब्देऽस्य विवरणं ज्ञातव्यम् ॥)

खसकन्द:, पुं, ( खस इव कन्दोऽस्य । ) चीरकञ्चुकीतृण: । इति रत्नमाला ॥ खसगन्धोऽपि क्वचित् पाठ: ॥

खसतिल:, पुं, ( खसपूय इव तिलति स्निह्यतीति । तिल स्नेहे + क: । अस्य शुक्लत्वेऽपि खरत्वात् तथात्वम् । ) खखस: । इति राजनिर्घण्ट: ॥ ( गुणादयोऽस्य यथा,—

"तिलभेद: खसतिल: कासश्वासहर: स्मृत: ।
स्वाद्वा खसफलोद्भूतं वल्कलं शीतलं लघु ॥
ग्राहि तिक्तं कषायञ्च वातलञ्च कफासकृत् ।
धातूनां शोषकं रूक्षं मदकृद्वाग्विवर्द्धनम् ॥
मुहुर्मोहकरं रुच्यं सेवनात् पुंस्त्वनाशनम् ॥"

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ )

खसम:, पुं, ( खेनाकाशेन सम: । ) बुद्ध: । इति त्रिकाण्डशेष: ॥

खसम्भवा, स्त्री, ( खे सम्भवतीति । सम् + भू + अच् । ) आकाशमांसी । इति राजनिर्घण्ट: ॥

खसर्पण:, पुं, ( खे शून्ये सर्पणमस्य योगप्रभावात् । ) बुद्धविशेष: । इति त्रिकाण्डशेष: ॥

खसात्मज:, पुं, ( खसाया: कश्यपपत्न्या आत्मज: । ) राक्षस: । इति त्रिकाण्डशेष: ॥

खसृम:, पुं, विप्रचित्तिदैत्यपुत्र: । यथा,—

"सिंहिकायां समुत्पन्ना विप्रचित्तिसुतास्तथा ।
वंश: शल्यश्च बलवान् नभश्चैव महाबल: ॥
वातापिर्नमुचिश्चैव इल्वल: खसृमस्तथा ।
अन्तको नरकश्चैव कालनाभस्तथैव च ॥
निवातकवचा दैत्या: प्रह्लादस्य कुलेऽभवन् ॥"

इति गारुडे ६ अध्याय: ॥

खस्खस:, पुं, ( खस + पृषोदरात् द्वित्वम् । ) क्षुपविशेष: । पोस्ता इति भाषा ॥ तत्पर्य्याय: । क्षुद्रबीज: २ क्षुद्रतण्डुल: ३ सुबीज: ४ । अस्य गुणा: । पाके मधुरत्वम् । कान्तिवीर्य्यबलप्रदत्वञ्च । इति राजनिर्घण्ट: ॥ ( खसतिलशब्देऽस्य गुणादयो ज्ञातव्या: ॥ )

खस्खसरस:, पुं, ( खस्खसस्य क्षुद्रबीजक्षुपविशेषस्य रस: । ) अहिफेन: । इति राजनिर्घण्ट: ॥ आफिं इति भाषा ॥

खस्तनी, स्त्री, ( खं आकाशं स्तनवदस्या: मेघवारिपतनेन शस्याद्युत्पत्ते: पुत्रस्थानीयानां पृथिवीस्थजीवानां जीवनधारणात् तथात्वम् । ) पृथिवी । इति त्रिकाण्डशेष: ॥

खस्फाटिक:, पुं, ( खवत् निर्म्मल: स्फाटिक: । यद्वा खस्फाटिक: सूर्य्य: स अधिष्ठाताऽस्य । ) सूर्य्यकान्तमणि: । चन्द्रकान्तमणि: । इति हेमचन्द्र: ॥

खाखस:, पुं, ( खस प्रकारे द्वित्वं तत: पृषोदरात् साधु: । ) बीजविशेष: । पोस्तदाना इति भाषा । तत्पर्य्यायगुणा: ।

"तिलभेद: खसतिल: खाखसश्चापि स स्मृत: ।
स्वाद्वा खसफलोद्भूतं वल्कलं शीतलं लघु ॥
ग्राहि तिक्तं कषायञ्च वातकृत् कफकासहृत् ।
धातूनां शोषकं रूक्षं मदकृद्वाग्विवर्द्धनम् ॥
मुहुर्मोहकरं रुच्यं सेवनात् पुंस्त्वनाशनम् ॥

अथ अहिफेनम् ।
उक्तं खसफलक्षीरमाफुकमहिफेनकम् ।
आफुकं शोधनं ग्राहि श्लेष्मघ्नं वातपित्तलम् ॥
तथा खसफलोद्भूतं वल्कलप्रायमित्यपि ।

अथ खसबीजम् ।
उच्यन्ते खसबीजानि ते खाखसतिला अपि ॥
खसबीजानि बल्यानि वृष्याणि सुगुरूणि च ।
जनयन्ति कफं तानि शमयन्ति समीरणम् ॥"

इति भावप्रकाश: ॥

खाजिक:, पुं, ( खे ऊर्द्धदेशे आज: क्षेप: तत्र साधु: । ठन् । ) लाजा: । इति हारावली ॥ खै इति भाषा ॥

खाट:, पुं, स्त्री, ( खे ऊर्द्ध्वमार्गे अटत्यनेन । अट् + करणे घञ् । ) शववरथ: । इति शब्दरत्नावली ॥ मरार खाट् इति भाषा ॥

खाटि:, स्त्री, ( खट् काङ्क्षायां बाहुलकात् इञ् । ) असङ्गम: । किण: । शववरथ: । इति मेदिनी ॥

खाटिका, स्त्री, ( खाटि + स्वार्थे संज्ञायां वा कन् ततष्टाप् । ) खाट: । शववरथ: । इति शब्दरत्नावली ॥

खाण्डवं, क्ली, ( खाण्डवाख्यदाख्यया प्रसिद्धाया नगर्य्या वनम् । खाण्डवी + अण् । यदुक्तं कालिकापुराणे ९० अध्याये ।

"पुरा तु विजयो राजा खाण्डवीं नाम तां पुरीम् ।
भङ्क्त्वा वनं ततश्चक्रे तेन तत् खाण्डवं वनम् ॥" )

वनविशेष: । तद्विवरणं यथा,—

"विरूपस्याभवन्नाधिर्नाधेर्भिम्बोऽभवत् सुत: ।
तेषां कल्योऽभवद्राजा कल्यात्तु विजयोऽभवत् ।
स वै विजित्य क्षितिं सर्व्वां पार्थिवान् भूरितेजस: ।
शक्रस्यानुमते चक्रे खाण्डवं शतयोजनम् ॥
अत् मयसाची ह्यदहत् पाण्डुपुत्त्र: प्रतापवान् ।
आवहन् परमां प्रीतिं ज्वलनस्य महात्मन: ॥

ऋषय ऊचु: ।
कथं स खाण्डवं चक्रे विजय: शतयोजनम् ।
तद्वयं श्रोतुमिच्छाम: कथयस्व तपोधन ! ॥

मार्कण्डेय उवाच ।
सोमवंशेऽभवद्राजा महात्मा स महाबल: ॥
धीर: सुदर्शनो नाम चारुरूप: प्रतापवान् ।
स वै हिमवतो नातिदूरे भङ्क्त्वा महावनम् ॥
सिंहान् व्याघ्रान् समुत्सार्य्य क्वचिच्चापि तपोधनान् ।
खाण्डवीं नाम नगरीमकरोत्तच्च शोभनाम् ॥
त्रिंशद्योजनविस्तीर्णामायतां शतयोजनम् ।
उच्चप्राकारसंयुक्तां साट्टालामुच्चतोरणाम् ॥
निम्नाभिरतिदीर्घाभि: परिखाभि: समावृताम् ।
दीर्घिकाभिश्चोपवनैर्बहुभिश्च सरोवरै: ॥
आकीर्णाञ्च तथावासैस्तत्समैरपि मानवै: ।
मोदन्ते सततं यत्र जना देवा दिवि स्थिताः ॥
स्वर्गे स सदा युक्ता व्याप्ता भोगसमन्विता: ।
स वै सुदर्शनो राजा स्नात्वा भूमिं विदार्य्य च ॥
गङ्गां कनखलां देवीं वाहयामास खाण्डवीम् ।
आनाय्य खाण्डवीमध्ये तेन स्नातैश्च वर्त्मभि: ॥
चक्रासु चक्रगा भूत्वा याति जीता नदीं प्रति ।
स जित्वा सकलान् भूपान् विनाश्याहृत्य भूरिश: ॥
राज्यं चकार खाण्डव्या मध्ये इन्द्रैरिवैकश: ।
अन्येषां नगरेष्वस्तु जनानानीय भूपति: ॥
खाण्डव्यां वासयामास हठादपि सुदर्शन: ।
देवदानवगन्धर्व्वान् जित्वा जित्वा सुधा सती ॥
देवरूपं देवरत्नं देवीश्चापि तथैव हि ।
खाण्डव्यां रोपयामास बलात्मा सुदर्शन: ॥
अलङ्कृत्य सतो जित्वा भूपतिर्भुक्तिं सुदर्शनम् ।
ततश्चकार बहुधा देवानाञ्च तथा शुभाम् ॥
नाराकञ्चपतिं वीरं विजयं जयशालिनम् ।
अभ्याय ज्ञात्वा साचिवं तत्रैवासौ न्ययोजयत् ॥
विजयो विवरं प्राप्य महाबलपराक्रम: ।
सुदर्शनस्य नृपतेरवस्कन्दमथाकरोत् ॥
नागहृत् सोऽप्यवस्कन्दं विजयस्य सुदर्शन: ।
चतुरङ्गबलेनाशु युद्धायाभिमुखोऽभवत् ॥
विजयी रथमारुह्य नियुज्य चतुरङ्गिणीम् ।
सेनां सुदर्शनं योद्धुं सम्मुखोऽभवदञ्जसा ॥
तदा महद्युद्धमासीद्विजयेन महात्मना ।
सुदर्शनस्य नृपतेर्बलवासवयोरिव ॥
तत: सुदर्शनो राजा हारितो गदयाऽपतत् ।
तस्मिन्निपतिते वीरे सेनाभिस्तस्य सैनिका: ॥
भयात् संप्राद्रवन्सर्व्वादिश: प्रदिश एव च ।
नष्टेषु तस्य सैन्येषु विजय: खाण्डवीं पुरीम् ॥
प्रविश्य ददृशे तत्र राज्ञीभूतान् गिरीनिव ।
सुवर्णानाञ्च रत्नानां सञ्चयान् बहुश: पुर: ॥
दृष्ट्वा सरांसि तत्राथ प्रफुल्लकमलानि तु ।
हंसकारण्डवानादनादितानि समन्तत: ॥
राशीन् सुवर्णरत्नानां पर्व्वतानिव विस्तृतान् ।
पुष्पितान् देववृक्षांश्च भ्रमद्भ्रमरभूषितान् ॥
प्रासादान् विपुलान् शुभ्रान् कैलाससदृशान् गजान् ।
विस्फुटांश्च सुगन्धाढ्यान् प्रतिगेहे व्यवस्थितान् ॥
उत्फुल्लनयनो राजा विजय: परवीरहा ।
मेनेऽमरावतीं तान्तु पुरीं क्षितिगतामिव ॥
तं वीक्ष्य नरपतिं नगरीं तां सुरेश्वर: ।
समेत्य विजयं प्राह सान्त्वयन् श्लक्ष्णया गिरा ॥

इन्द्र उवाच ।
राजन्नाहवनमिदमासीद्देवगणावृतम् ।
नरगन्धर्व्वयक्षाणां सुनीनाञ्च मनोहरम् ॥
सर्व्वास्वृतुस्वार्य्यं देवादीनाम चाप्यप्रिये रत: ।
भङ्क्त्वा वनमिदं शुभ्रं समुत्साद्य तपोधनम् ॥
खाण्डवीं नगरीं चक्रे हठाद्राजा सुदर्शन: ।
तदिदं पुनरेव त्वं वनं कुरु नृपोत्तम ! ॥
तत्राहं विहरिष्यामि तपकेन समं रत: ।
सुनीनाञ्च तप: स्थानं भक्तस्ते प्रसादत: ॥
भविष्यति च यत्नात्ते किन्नराणाञ्च पार्थिव ! ॥

मार्कण्डेय उवाच ।
एतत् श्रुत्वा वचस्तस्य शक्रस्य विजयस्तदा ।
वनमेवाकरोत्तान्तु खाण्डवीं शक्रगौरवात् ॥
गच्छन्तु भो यथास्थानं प्रजा: सर्व्वा यथेच्छया ।

येषां नामाह्नि लोकानां महाध्वजमनी पुनः ॥
वाराणसीं ते गच्छन्तु मयैव प्रतिपालिताम् ।
तवस्तस्य वचः श्रुत्वा जनाः केचिन्निजं पदम् ॥
अगच्छन् वाराणसीं केचिद्विजयेनाभिपालिताम् ।
ततो धनानां तानाद्रीन्नानाश्च पृथक् पृथक् ॥
अन्नानां नगनागानां कुप्यानां विजयस्तदा ।
धीवरैर्व्याचयामास पुरीं वाराणसीं प्रति ॥
गन्धर्व्वाणाश्च देवानां यदासीत् च्युतात् पुरा ।
रत्नदार्व्वादिकं यत्तु विभवं तत् प्रवाह्य च ॥
तैस्तैर्नीतन्तु स्वाण्डवाः स्वस्थानं प्रति हर्षिताः ।
विंशद्योजनविस्तीर्णां शतयोजनमायताम् ।
तां पुरीं विजयश्चक्रे न चिरादेव वै वनम् ।
तस्मिन् प्रकल्प्य सकला तत्रत्यः पक्षिनो गणैः ॥
उवास सुचिरं तत्र ततोऽभूनिर्ज्जनं वनम् ।
तत्र देवाः सगन्धर्व्वाः क्रीडन्तोऽप्सरसां गणाः ॥
आप्रोत्सर्यंश्च विजयं रत्नेषु विजयावहम् ॥"*॥
"अष्टाविंशतिमे प्राप्ते युगे द्वापरसंभवः ॥
वह्निर्व्राह्मणरूपेण भिक्षां जिष्णुमयाचत ।
दातुमङ्गीकृते भिक्षां तदा पाण्डुसुतेन वै ॥
वह्निः स्वरूपमास्थाय जिष्णुं वचनमब्रवीत् ।
अहमग्निः पाण्डुपुत्र ! यज्ञभागातिभोजनात् ॥
व्याधितोऽहं ततो व्याधिं मम त्वं नाशयाधुना ।
खाण्डवं नाम विपिनं सर्पसिंहगरादयम् ॥
यदि त्वं मां भोजयितुं शक्नोषि श्वेतवाहन ! ।
तदा ममात्यसौ व्याधिरपयास्यति नोचिरात् ॥
पुरा तु विजयो राजा खाण्डवीं नाम तां पुरीम् ।
भङ्क्त्वा वनं ततश्चक्रे तेन तत् खाण्डवं वनम् ॥
तदर्थं देवविहितं वनं सर्व्वं तवाहन ! ।
विरोधात्तस्तु शक्रस्य न स्वयं भोक्तुमुत्सहे ॥
तस्मात् व्याहि महाभाग ! वने तस्मिन्नियोजय ।
यथाऽहं सकलं भोक्तुं प्राप्नोमि त्वत्प्रसादतः ॥
तस्य तद्वचनं श्रुत्वा सव्यसाची महाबलः ।
दाहयामास विपिनं तत् सर्व्वं प्राणिसंयुतम् ।
देवकीतनयेनासौ वासुदेवेन पालितः ।
खाण्डवं दाहयामास ज्वलनस्य हिते रतः ॥"
"सुप्रीतः प्रददौ तस्मादर्ज्जुनाय महात्मने ।
वह्निर्धनुश्च गाण्डीवं वाहवं देवनिर्म्मितम् ॥
अक्षयाविषुधी द्वौ च रूप्याभांश्चतुरो हयान् ।
हनूमताधिष्ठितञ्च महान्तं वानरध्वजम् ॥
खड्गञ्च निशितं तीक्ष्णं दृढ़नः सव्यसाचिने ।
नीरोगश्चाभवद्वह्निस्तदा जिष्णुप्रसादतः ॥
तैर्व्याधिवर्ज्जेन धनुषा तेन खड्गेन केतुना ।
तदन्यरत्नैश्चापि विजिग्ये फाल्गुनो रणे ॥
एवं भैरववर्गेषु संजातो विजयो नृपः ।
खाण्डवं नाम विपिनं चकार सुमहाद्युती ॥"
इति श्रीकालिकापुराणे ६० अध्यायः ॥
(खण्डस्य इक्षुखण्डादेर्विकार इत्यण् । गुडादि-
विकारमिष्टान्नम् । यथा, महाभारते । १३ ।
५३ । १८ ।
"रसानपूपकांश्चित्रान् मोदकानथ खाण्ड- [वान् ॥")
खाण्डवी, स्त्री, (हिमवतः सन्निहितं इन्द्रवनं
खण्डयित्वा चन्द्रवंशीयेन राज्ञा सुदर्शनेन
निर्म्मिता या पुरी सा ।) चन्द्रवंशीयसुद-
र्शनराजकृतहिमवत्पर्व्वतनिकटस्थपुरीविशेषः ।
तद्विवरणं खाण्डवप्रस्थे द्रष्टव्यम् ॥
खाण्डिकः, पुं, (खण्डं मोदकादिकं शिल्पमस्य ।
इति ठण् ।) खण्डपालः । मोदकः । इति
हारावली ॥ मयरा इति भाषा ॥ (क्लीवे तु
खण्डिकानां समूहः "खण्डिकादिभ्यश्च ।" ४ ।
२ । ४५ । इत्यञ् । खण्डिकसमूहः ॥)
खातं, क्ली, (खन्यते इति । खन् + कर्म्मणि क्तः ।)
पुष्करिणी । इत्यमरः । १ । १० । २७ ॥ तस्य
परिमाणं यथा,—शतेन धनुर्भिः पुष्करिणी
त्रिभिः शतैर्दीर्घिकाश्चतुर्भिर्द्रोणः पञ्चभि-
स्तड़ागः दशभिर्द्विगुणा वापीति ॥
"चतुर्विंशाङ्गुलो हस्तो धनुस्तच्चतुष्करः ।
शतधन्वन्तरश्चैव तावत् पुष्करिणी शुभा ।
एतत्पञ्चगुणः प्रोक्तस्तड़ाग इति निर्णयः ॥"
इति मत्स्यवह्निमागधृतो वशिष्ठः ॥
खातकं, क्ली, (खात + संज्ञायां कन् ।) परिखा ।
इति हेमचन्द्रः ॥ खाना गड़ार इत्यादि भाषा ॥
खातकः, पुं, अधमर्णः । धारी । ऋणी । यथा,—
"उत्तमर्णो धनस्वामी अधमर्णस्तु खातकः ॥"
इति संक्षिप्तसारटीकायां गोयीचन्द्रः ॥
(परसैन्यविदारकः । यथा, महाभारते । १२ ।
११८ । ११ ।
"खातकं व्यूहतत्त्वज्ञं बलहर्षणकोविदम् ॥"
"खातकः परसैन्यविदारकः ।" इति तट्टीकाकृत्-
नीलकण्ठः ॥)
खातभूः, स्त्री, (खातयुक्ता भूर्भूमिः ।) प्रतिकूपः ।
परिखा । इति हारावली ॥
खातव्यवहारः, पुं, (खातस्य पुष्करिण्यादेर्व्यवहारः
परिमाणम् ।) पुष्करिण्यादिपरिमाणम् । पुकुरे
काटीति भाषा ॥
"अथ खातव्यवहारे करणसूत्रं सार्द्धार्य्या ।
गणयित्वा विस्तारं बहुषु स्थानेषु तद्युतिर्भाज्या ।
स्थानकमित्या सममितिरेवं दैर्घ्ये च वेधे च ।
क्षेत्रफलं वेधगुणं खाते घनहस्तसंख्या स्यात् ॥
उदाहरणम् ।
भुजवक्रतया दैर्घ्यं दशेशार्ककरैर्म्मितम् ।
त्रिषु स्थानेषु षट्पञ्चसप्तहस्ता च विस्तृतिः ॥
यस्य खातस्य वेधोऽपि द्विचतुस्त्रिकरः सखे ! ।
तत्र खाते कियन्तः स्युर्घनहस्ताः प्रचक्ष्व मे ॥"

१२

१२

अत्र सममितिकरणेन विस्तारे हस्ताः ।
दैर्घ्ये । ११ । वेधे । ३ । तत्क्षेत्रदर्शनं यथा,—

११

११

यथोक्तकरणेन लब्धा घनहस्तसंख्या ॥ १९८ ॥
खातान्तरे करणसूत्रं वार्हद्वृत्तम् ।
मुखजतलजतद्युतिजक्षेत्रफलैक्यं हृतं षड्भिः ।
क्षेत्रफलं सममेतत् वेधहतं घनफलं स्पष्टम् ।
समखातफलत्र्यंशः सूचीखाते फलं भवति ॥
उदाहरणम् ।
मुखे दशद्वादशहस्ततुल्यं
विस्तारदैर्घ्यन्तु तले तदर्द्धम् ।
यस्याः सखे सप्तकरश्च वेधः
का खातसंख्या वद तत्र वाप्याम् ॥

१२

१२

मुखजं क्षेत्रफलम् । १२० । तलजम् । ३० ।
तद्युतिजम् । २७० । एषामैक्यम् । ४२० ।
षड्भिः । ६ । हृतं जातं समफलम् । ७० । वेध-
७ हतं जातं खातफलं घनहस्ताः । ४९० ।
द्वितीयोदाहरणम् ।
खातेऽथ तिग्मकरतुल्यचतुर्भुजे च
किं स्यात् फलं नवमितः किल यत्र वेधः ।
वृत्ते तथैव दशविस्तृतिपञ्चवेधे
सूचीफलं वद तयोश्च पृथक् पृथङ्मे ॥

१२

१२

भुजः । १२ । वेधः । ९ । जातं यथोक्तकरणेन
खातफलं घनहस्ताः । १२९६ । सूचीफलम् । ४३२ ।

वृत्तखातदर्शनाय ।

वेधः
५

व्यासः वृत्तखातं
व्यासः
१०

व्यासः । १० । वेधः । ५ । अत्र सूक्ष्मपरिधिः ३९२७/१२५ । सूक्ष्मक्षेत्रफलम् ३९२७/५० । वेधगुणं जातं सूक्ष्मखातफलम् ३९२७/१० । सूक्ष्मसूची-फलम् १३०९/१० । यद्वा स्थूलखातफलम् २७५०/७ । सूचीफलं स्थूलम् २७५०/२१ ।

इति लीलावत्यां खातव्यवहारः समाप्तः ॥

खार्ज्ज, क्ली, (खजु विदारे + "उषिखनिभ्यां कित् ।" उणां । ४ । १६१ । इति त्रन् किच्च ।) खातम् । खनित्रम् । इत्युणादिकोषः ॥ दारुणम् । वनम् । कृत्रम् । इति संक्षिप्तसारे उणादिवृत्तिः ॥ (जला-धारविशेषश्च । इति उज्ज्वलदत्तः ॥ )

खाद, ऋ भक्षणे । इति कविकल्पद्रुमः ॥ (भ्वा-परं-सकं-सेट् । ऋदित् ।) ऋ, अचखादत् । इति दुर्गादासः ॥

खादकः, त्रि, (खाद् भक्षणे + ण्वुल् ।) ऋण-ग्रहीता । खातक इति ख्यातः । इति मिता-क्षरा ॥ भक्षकः । यथा,—

"विक्रयैर्गोविनिमयैर्दत्त्वा गोमांसखादके ।
व्रतं चान्द्रायणं कुर्य्यादवधे साक्षाद्वधी भवेत् ॥"
इति प्रायश्चित्ततत्त्वे गोभिलः ॥

खादनं, क्ली, (खाद् + भावे ल्युट् ।) भक्षणम् । आहारः । (खादति चर्व्वयत्यनेन इति ।) दन्ते पुं । इति हेमचन्द्रः ॥

खादितं, त्रि, (खाद + क्तः ।) भक्षितम् । इत्य-मरः । ३ । १ । ११० ॥ खाओया इति भाषा ॥ ("अशितं खादितं पीतं लीढं कोष्ठगतं नृणाम् । तज्जीर्य्यति यथाकालं शोषितं पित्ततेजसा ॥" इति शारीरस्थाने चतुर्थेऽध्याये सुश्रुतेनोक्तम् ॥)

खादिरसारः, पुं, (खदिर + स्वार्थे अण् ततः षष्ठी तत्पुरुषः ।) खदिरवृक्षनिर्यासः । खयर इति भाषा ॥ तत्पर्य्यायः । खादिरः २ अङ्कुलसारः ३ क्षतसारः ४ रङ्गदः ५ रङ्गः ६ । अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । कफवातव्रण-कण्ठामयनाशित्वम् । रुचिकारित्वम् । दीपनत्वञ्च । इति राजनिर्घण्टः ॥ खदिरसारोऽपि पाठः ॥ (यथा,—

"विना खदिरसारेण क्षारेण हरिकौडशाम् ।
नाधरे जायते रागो नानुरागः पयोधरे ॥"
इति उद्भटः ॥)

खादुकः, त्रि, (खादति छिनत्ति इति । खाद् + उन् संज्ञायां कन् ।) हिंसालुकः । इति हारावली ॥

खाद्यं, त्रि, (खाद्यते इति । खाद् + कर्म्मणि ण्यत् ।) भक्षणीयद्रव्यम् । यथा,—

"कथं भद्रखलेश्वरोऽहमिह किं घोरे वने स्थीयते शार्दूलादिभिरेव हिंस्रपशुभिः खाद्योऽहमित्याशया ।" इत्युद्भटः ॥

खानपानं, क्ली, (धातूनामनेकार्थत्वात् खै भक्षणे + भावे ल्युट् खानम् । पा पाने + भावे ल्युट् पानम् । खानेन सह पानं यद्वा खानञ्च पानञ्च तयोः समाहारः ।) कठिनद्रवद्रव्ययोर्गलाधः-करणम् । खाना पिना इति हिन्दी भाषा ॥ यथा, गारुडे नीतिसारे १०९ अध्यायः ।

"सद्भावेन हि तुष्यन्ति देवाः सत्पुरुषा द्विजाः ।
इतरे खानपानेन वाक्प्रदानेन पण्डिताः ॥"

खानिः, स्त्री, (खन + इन् । पृषोदरात् वृद्धिः ।) खनिः । इति हेमचन्द्रः ॥

खानिकं, क्ली, (खानेन खननेन निर्वृत्तं इति ठञ् ।) कुड्यच्छेद्यम् । इति त्रिकाण्डशेषः ॥ देयालेर गर्त्त इति भाषा ॥

खानिलः, त्रि, (खानं खननं शिल्पत्वेनास्त्यस्य । इति बाहुलकात् इलच् ।) भित्तिचौरः । इति शब्दरत्नावली ॥ सिंदेल चोर इति भाषा ॥

खानी, स्त्री, (खानि + वा ङीप् ।) खनिः । इति शब्दरत्नावली ॥

खानोदकः, पुं, (खानाय पानार्थं उदकमत्र ।) नारिकेलः । इति त्रिकाण्डशेषः ॥

खापगा, स्त्री, (खे आकाशे स्थिता खात् आगता वा आपगा नदी ।) गङ्गा । इति हेमचन्द्रः ॥

खारः, पुं, (खं अवकाशमाधिक्येन ऋच्छतीति । ऋ + अण् ।) खारीपरिमाणम् । इति चड्डुचन्द्रः ॥

खारिः, स्त्री, (खं मध्यावकाशं आराति इति । आ + रा + इन् ।) खारीपरिमाणम् । इति भरत-धृतचड्डुचन्द्रः ॥

खारिकं, क्ली, (खारि + संज्ञायां कन् ।) मद्या-पारेवतम् । इति राजनिर्घण्टः ॥

खारिम्पचः, त्रि, (खारिं खारीपरिमितधान्य-मित्यर्थः पचतीति । पच् + "परिमाणे पचः ।" ३ । २ । ३३ । इति खश् + ततो मुम् ।) खारि-परिमितान्नादिपाककर्त्ता । इति व्याकरणम् ॥

खारी, स्त्री, (खं मध्यावकाशं आराति इति । आ + रा + इन् । "कृदिकारादक्तिनः ।" ४।१।४५। इत्यस्य वार्त्तिं इति पक्षे ङीष् ।) परिमाण-विशेषः । इत्यमरः । २ । ९ । ८८ ॥ यदाह तट्टी-कायां भरतः ।

"पलं प्रकुञ्चकं मुष्टिः कुडवस्तच्चतुष्टयम् ।
चत्वारः कुडवाः प्रस्थश्चतुःप्रस्थमथाढकम् ॥
अष्टाढको भवेद्द्रोणो द्विद्रोणः सूर्प उच्यते ।
सार्द्धसूर्पो भवेत् खारी द्वे खार्य्यौ गोण्युदाहृता ॥
तामेव भारं जानीयात् वाहो भारचतुष्टयम् ॥"

"षोडशद्रोणपरिमाणम् ।" इत्यमरटीकायां स्वामी लीलावती च ॥ गोणीचतुष्टयम् । तत्तु चत्वार्य्यधिकचतुःसहस्रपलानि । चौषट्टि वार-शेर इति भाषा । इति वैद्यकपरिभाषा ॥ द्रोण-चतुष्टयम् । यथा,—

"चतुराढको भवेद्द्रोणः खारी द्रोणचतुष्टयम् ॥"
इति स्मृतिः ॥

खारीकं, त्रि, (खारीं खारीवापमर्हतीति । "खार्य्या ईकन् ।" ५ । १ । ३३ । "केवलायाश्चेति वक्त-व्यम् ।" इति वार्त्तिं इति ईकन् ।) खारी-क्षेत्रम् । खारीपरिमितबीजवपनयोग्यक्षेत्रम् । तत्पर्य्यायः । खारीवापः २ । इत्यमरः । २।९।१०॥

खारीवापः, त्रि, (खारी तत्परिमितधान्यं उप्यते ऽत्र । वप् + अधिकरणे घञ् ।) खारीकः । इत्य-मरः । २ । ९ । १० ॥ (खारीं वपतीति । वप् + कर्त्तरि अण् । धान्यादिवपनकारी ॥)

खिखिः, स्त्री, (खिरित्यव्यक्तशब्देन खेटति भीरून् भयमुत्पादयतीति । खि + खिट् + डः । पृषो-दरात् साधुः ।) किखिः । इति क्वचित् त्रिकाण्ड-शेषे पाठः ॥ खाँकशियाली इति भाषा ॥

खिङ्खिरः, पुं, (खिं अव्यक्तध्वनिविशेषं किरति विक्षिप्तिभावेन शब्दं करोतीत्यर्थः । कॄ + कः । पृषोदरात् खत्वेन साधुः ।) शिवाभेदः । खाँक-शियाली इति भाषा । खट्वाङ्गम् । तत्तु शिव-स्यास्त्रम् । पारिपालकम् । तत्तु गन्धद्रव्यम् । इति विश्वो हेमचन्द्रश्च ॥

खिट, भयभीषयोः । इति कविकल्पद्रुमः ॥ (भ्वा-परं-भये अकं-भयोत्पादने सकं-सेट् ।) भीषा स्वतो भयोत्पादना । खेटति जनो व्याघ्राद्बिभे-तीत्यर्थः । खेटति व्याघ्रो जनं भीषयते इत्यर्थः । इति दुर्गादासः ॥

खिद, श प औ परिघाते । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-अनिट् ।) श प, खिन्दति दुष्टं राजा । औ, खेत्ता । इति दुर्गादासः ॥

खिद, इ घ य औ दैन्ये । इति कविकल्पद्रुमः ॥ (दिवां-रुधां च-आत्मं-अकं-अनिट् ।) दैन्यक-मुपतप्तीभावः । इ घ, खिन्ते तिन्ते च ये द्रव्यम् दीयमानं न गृह्णन्ति । इति हलायुधः ॥ इ य, स्वसुखानिरभिलाषः खिद्यते लोकहेतोरिति शाकुन्तले । औ, खेत्ता । इति दुर्गादासः ॥

खिदिरः, पुं, (खिद्यते क्षयापक्षेण दुःखेन तपसा वा । यथायथं व्युत्पत्तिर्ज्ञातव्या । खिद् + "इषि-मदि-मुदि-खिदीति ।" उणां । १ । ५२ । इति किरच् ।) चन्द्रः । इत्युणादिकोषः ॥ दीनः । तापसः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

खिद्यमानः, त्रि, (खिद् + ताच्छील्ये चानश् ।) खेदयुक्तः । दैन्यग्रस्तः । उपतप्तः । यथा,—

"खिद्यमानस्तु तं दृष्ट्वा सूर्य्यः शापात्मजं तदा ।"
इति शाम्बपुराणे सूर्य्यस्तवः ॥

खिद्रः, पुं, (खिद् दैन्ये + "स्फायि तञ्चि वञ्चीति ।" उणां । २ । १३ । इति रक् ।) रोगः । दरिद्रः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

खिन्नः, त्रि, (खिद् + क्तः ।) दैन्यग्रस्तः । खेद-युक्तः । यथा, श्रीभागवते ।

"गौर्भूत्वाश्रुमुखी खिन्ना रुदती करुणं विभोः ॥"

खिरहिट्टी, स्त्री, महाश्वमज्ञा । इति राज-निर्घण्टः ॥

खिलं, त्रि, (खिल् + कः ।) हलादिना अकृष्टभूमिः । खिल भूँइ इति भाषा ॥ तत्पर्य्यायः । अप्रहतम् २ । इत्यमरः । २ । १ । ५ ॥ सारसंग्रहे वेधसि च पुं । इति मेदिनी ॥

"खिलो नारायणः प्रोक्त इत्यत्राकृष्टो ज्ञातः ।" इति खिलेषु हरिवंशे इत्यत्र नीलकण्ठटीका ॥

खु, ङ शब्दे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-अनिट् ।) ङ, खवते । इति दुर्गादासः ॥

खुङ्गाहः, पुं, (खुं इत्यव्यक्तशब्दं कुर्व्वन् गाहते रणस्थलं विलोडयतीति । गाह् + अच् ।) कृष्ण-वर्णघोटकः । इति हेमचन्द्रः ॥

खुज, उ स्तेये । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् । उदित्त्वात् क्त्वा वेट् ।) उ, खोजित्वा खुक्त्वा । स्तेयं चौर्य्यम् । इति दुर्गादासः ॥

खुञ्जाकः, पुं, (खुज् + आकः निपातनात् नस्य द्वित्वम् ।) देवताडकवृक्षः । इति रत्नमाला ॥ खुञ्जाक इति क्वचित् पाठः ॥

खुड, इ ङ खञ्जे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-सेट् इदित् ।) पञ्चमस्वरी । खञ्जः खोटनम् । इ, कर्म्मणि खुण्ड्यते । ङ, खुण्डते खोड़ः । इति दुर्गादासः ॥

खुड, क } भेदे । इति कविकल्पद्रुमः ॥
खुड, इ क } (चुरां-परं-सकं-सेट् । पाक्षिक इदित् ।) द्वौ पञ्चमस्वरिणौ । क, खोडयति । द्वितीय आद्यस्वरीति कातन्त्राद्याः । स्वमते तु द्वितीयस्याद्यस्वरित्वे पूर्व्वोऽपीदनुबन्धः स्यात् । पञ्चमस्वरित्वे तु सजातीयस्य पुनःपाठात् पूर्व्वो नेदनुबन्धः । खुण्डयति । खण्डयतीति प्रयोगस्तु खडि इ मथीत्यस्मात् चणि खण्डं करोतीति णौ साध्यम् । तस्य भेदवाचित्वन्तु धातूनामनेकार्थत्वात् । इति दुर्गादासः ॥

खुर, श विलेखने । छेदने । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट् ।) श, खुरति भूमिं तृणं वा लोकः । खोरिता । खुरः शफम् । इति दुर्गादासः ॥

खुरः, पुं, (खुर छेदने + कः । यद्वा "कृष्यम्राग्र-बध्नेति ।" उणां । २ । २८ । इति रन् गुणा-भावोऽन्त्यलोपश्च ।) शफम् । गवादीनां पादा-ग्रम् । (यथा, मनुः । ४ । ६७ ।
"न भिन्नशृङ्गाक्षिखुरैर्न वालधिविरूपितैः ॥")
कोलदलम् । नखीनामगन्धद्रव्यम् । इति मेदिनी ॥ छेदनवस्तु । नापितस्य क्षुरः । इति शब्दरत्ना-वली ॥ खट्वादीनां पादुकम् । इति धरणी ॥ खुरा इति भाषा ॥

खुरकः, पुं, (खुर + संज्ञायां कन् । खुरो गन्धद्रव्य-विशेषः स इव कायति वा । कै + कः ।) तिल-वृक्षः । इति शब्दचन्द्रिका ॥ (तिलशब्देऽस्य गुणादयो बोद्धव्याः ॥)

खुरणसः, त्रि, (खुर इव नासिका अस्य "अञ्ना-सिकाया इति ।" ५ । ४ । ११८ । इति अच् नसादेशश्च "पूर्व्वपदात् संज्ञायामगः ।" ८ । ४ । ३ । इति णत्वम् ।) चिपिटनासिकः । इत्यमरः । २ । ६ । ४७ ॥ चेपटानाकयुक्त इति भाषा ॥

खुरणाः, त्रि, (खुर इव नासिका अस्य "खुर खराभ्यां वा नस् ।" इति नसादेशः "पूर्व्वपदा-दीति ।" ८ । ४ । ३ । इति णत्वं च ।) खुरणसः । इत्यमरः । २ । ६ । ४७ ॥ चेपटानासिकायुक्त इति भाषा ॥

खुरप्रः, पुं, (खुर इव प्राति खुराकारवत् कार्य्यं पूरयतीत्यर्थः । खुर + प्रा + कः ।) बाणविशेषः । इत्यमरटीकायां स्वामी ॥ खुरपा इति भाषा ॥

खुरली, स्त्री, (खुरैः सह विविधानि अस्त्रादीनि लाति पौनःपुन्येन शिक्षार्थमत्र । ला आधारे + इन् + वा ङीष् ।) शराभ्यासः । इति हेमचन्द्रः ॥

खुराकः, पुं, (खुर + आकन् ।) पशुः । इत्यु-णादिकोषः ॥

खुरालकः, पुं, (खुर इव अलति पर्य्याप्नोतीति । अल + ण्वुल् ।) लौहमयबाणः । इति शब्द-माला ॥

खुरालिकः, पुं, (खुराणां आलिभिः कायति प्रकाशते । कै + कः ।) नापितभाण्डः । नापि-तेर भाँड़ इति भाषा । नाराचः । उपधानम् । इति मेदिनी ॥ खरालिकोऽपि पाठः ॥

खुर्द्द, ङ क्रीड़ायाम् । इति कविकल्पद्रुमः (भ्वां-आत्मं-अकं-सेट ।) पञ्चमस्वरी । दीर्घिणः पृथक्पाठात् पूर्व्वस्य न दीर्घः । ङ, खुर्द्दते । इति दुर्गादासः ॥

खुर्लं, क्ली, (क्षुद् + सम्पदादित्वात् क्विप् । क्षुदं लातीति । ला + कः । पृषोदरात् साधुः ।) नखीनामगन्धद्रव्यम् । इति शब्दचन्द्रिका ॥ क्षुद्रे नीचे च त्रि ॥

खुल्लकः, त्रि, (खुल्ल + स्वार्थे कन् ।) स्वल्पः । नीचः ॥ कनिष्ठः । दरिद्रः । निष्ठुरः खलः । इत्यमरटीका ॥

खुल्लतातः, पुं, (खुल्लः कनिष्ठः तातस्य पितुरिति पूर्व्वनिपातः ।) पितृकनिष्ठभ्राता । इति शब्द-रत्नावली ॥ खुड़ा इति भाषा ॥

खुल्लमः, पुं, (खुल्लेन मीयते इति । मा + घञर्थे कः ।) पन्थाः । इति त्रिकाण्डशेषः ॥

खूर्द्द, ङ क्रीड़ायाम् । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-सेट् ।) षष्ठस्वरी । ङ, खूर्द्दते । इति दुर्गादासः ॥

खेकीलकः, पुं, (खे आकाशे कीलक इव यस्य स्थानम् ।) शब्दवती यष्टिः । इति हारावली ॥

खेगमनः, पुं, (खे आकाशे गमनं यस्य ।) काल-कण्ठपक्षी । इति शब्दमाला ॥

खेचरः, पुं, (खे चरतीति । चर + "चरेष्टः ।" ३ । २ । १६ । इति टः । अलुक् समासः ।) शिवः । इति शब्दरत्नावली ॥ विद्याधरः । इति जटाधरः ॥ पारदः । इति राजनिर्घण्टः ॥ आकाशचारिणि त्रि ॥

("इतो हन्ति जराव्याधिं मूर्च्छितो व्याधिघातकः ।
बद्धः खेचरतां धत्ते कोऽन्यः सूतात् कृपाकरः ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे जारमारणाधि-कारः ॥
मेषादिराशिः । यथा ज्योतिस्तत्त्वे — "खेचराश्च सर्व्वे ॥") ।

खेचरान्नं, क्ली, (खेचरं शिरलादिमिश्रितं अन्नम् ।) शिरलादिसंमिश्रितपक्वतण्डुलम् । खिचड़ीति भाषा ॥ इति पाकराजेश्वरः ॥

खेट, ऋ क भक्षणे । इति कविकल्पद्रुमः ॥ (अदन्त-चुरां-परं-सकं-सेट् ।) अचिखेटत् । इति दुर्गादासः ॥

खेटं, क्ली, (खे + अट् + अच् ।) तृणम् । इति शब्दरत्नावली ॥ खेड़मपि पाठः ॥

खेटः, पुं, (खे आकाशे अटति । अट् + अच् ।) ग्रहः । यथा, भावविवेके ।
"यस्मिन् राशौ स्थितः खेटस्तेन तं परिपूरयेत् ॥"

खेटः, त्रि, (खिट् + अच् । खेट् + कः वा ।) अधमः । इत्यमरः । ३ । १ । ५४ ॥ घोटकः । इति शब्दरत्ना-वली ॥ सुनिन्दकः । इति त्रिकाण्डः ॥ सुनन्दक इति पाठे बलरामस्य गदा इति कश्चित् ॥

खेटः, पुं, क्ली, (खिद्यते भयमुत्पद्यते अस्मा-दनेन वा । खिट् + अपादाने करणे वा घञ् ।) मृगया । इत्यमरहेमचन्द्रौ ॥ कफः । (खेद्यन्ते भक्ष्योपयोगिशस्यादिना उपजीव्यन्ते अस्मात् ।) ग्रामभेदः । स तु कर्षकग्रामः । (तथा च भाग-वते । १ । ६ । ११ ।
"खेटखर्व्वटवाटीश्च वनान्युपवनानि च ॥"
"खेटाः कर्षकग्रामाः ।" इति श्रीधरस्वामी ॥)
चर्म्म । इति मेदिनीशब्दरत्नावल्यौ ॥

खेटकः, पुं, (खेट + स्वार्थे कः ।) ग्रामभेदः । चासार गाँ इति भाषा ॥ इति जटाधरः ॥ फलकम् । इति हेमचन्द्रः ॥ "खेटकं वसुनन्दकं ।" इति हारावली ॥ वसुनन्दको धनद्धिजीवकः । इति तट्टीका ॥ बलदेवस्य गदा इति कश्चित् ॥

खेटः } पुं, (खेटति भयमुत्पादयत्यनेन । खिट्
खेटकः } + करणे घञ् । खेट + स्वार्थे कः ।)
यष्टिः । यथा, —
"यष्टिरूपेण खेट ! त्वमरिसंहारकारकः ।
देवीहस्तस्थितो नित्यं मम रक्षां कुरुष्व च ॥"
इति शारदीयदुर्गापूजापद्धतौ
अस्त्रपूजाप्रकरणम् ॥
"खेटकं पूर्णचापञ्च पाशमङ्कुशमेव च ॥"
इति च तत्र दशभुजाया दुर्गाया ध्यानम् ॥

खेटितालः, पुं, (खे अटतीति अट् इन् । खिट् + इन् वा । खेटिः तालोऽस्य ।) वैतालिकः । इति शब्दमाला ॥

खेटी, [न्] पुं, (खेट + णिनिः ।) नागरः । कामी । इति शब्दमाला ॥

खेड, ऋ क भक्षणे । इति कविकल्पद्रुमः ॥ (अदन्त-चुरां-परं-सकं-सेट् ।) अचिखेडत् । इति दुर्गा-दासः ॥

खेद:, पुं, ( खिद् + भावे घञ् । ) शोक: । इति हेमचन्द्र: ॥ अवसन्नता । इति जटाधर: ॥ ( यथा, रामायणे । ४ । ४८ । ७ ।
"अद्यापीदं वनं दुर्गं विचिन्वन्तु वनौकस: ।
खेदं त्यक्त्वा पुन: सर्वं वनमेव विचिन्वताम् ॥")

खेदिनी, स्त्री, ( खिद् + णिच् + णिनि: । स्त्रियां ङीप् । ) अग्निजपर्णीवृक्ष: । लता । इति शब्दचन्द्रिका ॥ (दैन्यकारिणी । शोककारिणी ॥ इति व्युत्पत्तिलब्धोऽर्थ: ॥)

खेयं, क्ली, ( खन्यते इति । खनु विदारे + "ई च खन: ।" ३ । १ । १११ इति कर्म्मणि क्यप् ईकारश्चान्तादेश: ।) परिखा । गड़खाइ इति भाषा । इत्यमर: ॥ खननीयम् । इति व्याकरणम् ॥ (सेतुभेद: । यथा मिताक्षराधृतनारदवचनम् ।
"सेतुश्च द्विविधो ज्ञेय: खेयो बन्ध्यस्तथैव च ।
तोयप्रवर्त्तनात् खेय: ।" इति ॥)

खेल, क चाले । गत्याम् । इति कविकल्पद्रुम: ॥ (भ्वां-परं-चलने अकं गतौ सकं-सेट् ।) कवर्गद्वितीयादि: । अचिखेलत् । चाल: कम्प: । चाल: केचित्तु मन्वते । इति दुर्गादास: ॥

खेलनं, क्ली, ( खेल् + भावे ल्युट् । ) क्रीड़नम् । इति हलायुध: ॥ (यथा, गीतगोविन्दे । १ । ४१ ।
"कापि विलासविलोलविलोचन-
खेलनजनितमनोजम् ॥")

खेलनी, स्त्री, ( खेलन्ति अस्मिन् इति । खेल + अधिकरणे ल्युट् + स्त्रियां ङीप् । ) शारिफलम् । इति हेमचन्द्र: ॥

खेला, स्त्री, (खेल + भावे + अप् टाप् ।) खेलनम् । तत्पर्य्याय: । क्रीड़ा २ कूर्द्दनम् ३ । इत्यमर: । १ । ७ । ३३ ॥

खेलि:, स्त्री, ( खे आकाशे अलति पर्य्याप्नोति । अल + इन् । ) गीतम् । बाण: । सूर्य्य: । पक्षी । पशु: । इत्यजयपाल: ॥

खेव, ऋ ङ सेवे । इति कविकल्पद्रुम: ॥ (भ्वां-आत्मं-सकं-सेट् ऋदित् ।) ऋ, अचिखेवत् । ङ, खेवते । इति दुर्गादास: ॥

खेसर:,पुं,(खे आकाशे इव द्रुतगामित्वात् सरतीति । सृ + ट: ।) अश्वतरीगर्भ: । खचर इति भाषा । तत्पर्य्याय: । अश्वखरज: २ खरहयगर्भ: ३ अश्वज: ४ वामी ५ वसुज: ६ मिश्रज: ७ मिश्रशब्द: ८ अतिभारग: ९ । इति राजनिर्घण्ट: ॥

खै, खैर्य्ये । खनने । हिंसायाम् । इति कविकल्पद्रुम: ॥ ( भ्वां-परं-स्थैर्य्ये अकं-खननादौ सकं-अनिट् । ) खायति । इति दुर्गादास: ॥

खोङ्गाह:, पुं, ( खे आकाशे उड़ इत्यव्यक्तशब्दं कुर्व्वन् गाहते इव प्रधावतीत्यर्थ: । गाह + अच् । पृषोदरात् साधु: । ) श्वेतपिङ्गलाश्व: । इति हेमचन्द्र: ॥ खाङ्गाहोऽपि पाठ: ॥

खोट, क गत्याघाते । इति कविकल्पद्रुम: ॥ ( भ्वां-परं-अकं-सेट् । ) क, अचुखोटत् । गत्याघात: खोटनम् । खोटति खञ्ज: । इति दुर्गादास: ॥

खोट, त् क क्षेपे । इति कविकल्पद्रुम: ॥ (अदन्त-चुरां-परं-अकं-सेट् ।) अचुखोटत् । इति दुर्गादास: ॥

खोटि:, स्त्री, ( खोट् + इन् । ) चतुरा स्त्री । इति शब्दमाला ॥ खोरिरित्यपि पाठ: ॥

खोटी, स्त्री, ( खोटि + वा ङीष् । ) पालङ्कीद्रव्य: । इति शब्दचन्द्रिका ॥ चतुरापि ॥

खोड़, क खोटने । इति कविकल्पद्रुम: ॥ (भ्वां-परं-अकं-सेट् । ) क, अचुखोड़त् । खोड़ति खञ्ज: । रमानाथस्तु खोड़ति बाला क्रिमिमित्युदाहृतवान् । इति दुर्गादास: ॥

खोड़, त् क क्षेपे । इति कविकल्पद्रुम: ॥ ( अदन्त-चुरां-परं-सकं-सेट् । ) अचुखोड़त् । इति दुर्गादास: ॥

खोड़:, त्रि, ( खोड़ति इति । खोड़ + अच् । ) खञ्ज: । खोँड़ा इति भाषा ॥ इत्यमर: २।६।४८॥

खोड़कशीर्षकं, क्ली, ( खोड़ क्षेपे + ण्वुल् । खोड़कं शीर्षं अस्य इति कप् । ) कपिशीर्षम् । क्रयशीर्षम् । इति त्रिकाण्डशेष: ॥

खोर, क खोटने । गतिवैकल्ये इति यावत् । इति कविकल्पद्रुम: ॥ ( भ्वां-परं-अकं-सेट् । ) क, अचुखोरत् । खोरति खञ्ज: । इति दुर्गादास: ॥

खोर:, त्रि, ( खोरति इति । खोर् + अच् । ) खञ्ज: । इति हेमचन्द्र: ॥

खोल, क खोटने । गतिवैकल्ये । इति कविकल्पद्रुम: ॥ ( भ्वां-परं-अकं-सेट् । ) क, अचुखोलत् । खोलति खञ्ज: । रमानाथस्तु खोलति बाला क्रिमिमित्युदाहृतवान् । इति दुर्गादास: ॥

खोल:, त्रि, ( खोलति इति । खोल + अच् । ) खञ्ज: । इति शब्दमाला ॥

खोलक:, पुं, ( खोल + संज्ञायां कन् । ) पाक: । खोला इति भाषा ॥ शिरस्त्र: । खोपड़ा इति भाषा ॥ वल्मीक: । उयेर ढिपि इति भाषा ॥ पूगकोष: । इति मेदिनी ॥ गुयार छोवड़ा इति भाषा ॥

खोलि:, स्त्री, ( खोल + इन् । ) तूण: । इति शब्दमाला ॥

खोल्मुक:, पुं, ( खे आकाशे उल्मुक इव लोहितवर्णत्वेऽस्ति बोध्यम् । ) मङ्गलग्रह: । इति त्रिकाण्डशेष: ॥

ख्या, ल ख्यातौ । कथने । इति कविकल्पद्रुम: ॥ ( अदां-परं-अकं-कथनादौ तु सकं-अनिट् । ) ख्याति: प्रसिद्धि: । ल, ख्याति गुणी प्रसिद्ध: स्यादित्यर्थ: । ख्याति साधु: कथां हरे: । तथा च । ख्या प्रकथने । प्रकथनं प्रसिद्धिरिति गोविन्दभट्ट: । ख्या प्रकथने इति चतुर्भुजकुमरौ । इति दुर्गादास: ॥

ख्यात:, त्रि, ( ख्या + क्त: । ) ख्यातियुक्त: । तत्पर्य्याय: । प्रतीत: २ प्रथित: ३ वित्त: ४ विज्ञात: ५ विश्रुत: ६ । इत्यमर: । ३ । १ । ८ ॥ ( यथा, भट्टि: । ६ । ८७ ।
"अमितमप्यपमोदमार्गं सर्व्वभोगीरुदुगमम् ।
आचख्यौ पितरं विद्धि ख्यातं दशरथं भुवि ॥")

ख्यातगर्हण:, त्रि, ( ख्याता विश्रुता गर्हणा निन्दा यस्य । ) प्रसिद्धकुत्सन: । तत्पर्य्याय: । अवनीत: २ । इत्यमर: । ३ । १ । ४३ ॥

ख्यातगर्हित:, त्रि, (ख्यातं गर्हितं गर्हणमस्य ।) ख्यातगर्हण: । इति जटाधर: ॥

ख्याति:, स्त्री, ( ख्या + क्तिन् । ) प्रसिद्धि: । तत्पर्य्याय: । प्रथा २ । इत्यमर: । ३ । २ । ८ ॥ ( यथा, पञ्चतन्त्रे । १ । ४०२ । [यत: ।"
"लोके ख्यातिमुपागतात्र सकले लोकोक्तिरेषा मनुष्य । १२ । ३६ । [पुष्कलाम् ।
"येनास्मिन् कर्म्मणा लोके ख्यातिमिच्छति
न च शोचत्यसम्पत्तौ तद्विज्ञेयन्तु राजसम् ॥"
प्रकाश: । ज्ञानम् । यथा, माघे । ४ । ५५ ।
"मैत्र्यादिचित्तपरिकर्म्मविदो विधाय
क्लेशप्रहाणमिह लब्धसबीजयोगा: ।
ख्यातिं च सत्त्वपुरुषान्यतयाऽधिगम्य
वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम् ॥"
"मैत्रीति । इहाद्रौ समाधिभृतो योगिन: । मैत्री करुणा मुदिता उपेक्षेति चतस्रश्चित्तवृत्तय: । तत्र पुण्यवत्सु मैत्री दुःखितेषु करुणा सुखिषु मुदिता अनुमोदनं पापिषु उपेक्षा । मैत्री आदिर्येषां तानि चित्तस्य परिकर्म्माणि प्रसाधकानि शोधकानीत्यर्थ: तानि विदन्ति लभन्ते इति तद्विद: तद्वान्तस्त्वे: कौशान्त:करणमला: इत्यर्थ: । अतएव क्लेशप्रहाणं विधाय । अविद्यास्मितारागद्वेषाभिनिवेशा: पञ्च क्लेशा: । तत्रानित्येषु नित्यत्वाभिमान: अनात्मनि च देहेन्द्रियादौ आत्मधीरित्यादि विभ्रमोऽविद्या । अस्मिता अहङ्कार: । रागोऽभिमतविषयाभिलाष: । द्वेषोऽनभिमतविषयेषु रोष: । अभिनिवेश: । कार्य्याकार्य्येष्वाग्रह: । ते हि पुरुषं क्लिश्नन्ति इति क्लेशा: क्लेशहेतव: तेषां प्रहाणं त्याग: तद्विधाय क्लेशान् हित्वा इत्यर्थ: । अतो लब्ध: सबीज: सावलम्बयोगो यैस्ते लब्धसबीजयोगा: सत्त्व: आलम्बनमेव यत्किं । सत्त्वपुरुषयोरन्यतया अन्यत्वेन मिथो भिन्नत्वेन ख्यातिं ज्ञानं अधिगम्य प्रकृतिपुरुषौ भिन्नाविति ज्ञात्वा प्रकृतिपुरुषयोर्विवेकाग्रहणात् संसार: । विवेकग्रहणात् मुक्तिरिति साङ्ख्या: । अथ तां ख्यातिमपि निरोद्धुं निवर्त्तयितुं वाञ्छन्ति इतिकर्त्तव्यं तां निवर्त्य स्वयम्प्रकाशतयैवावस्थातुमिच्छन्तीत्यर्थ: । प्रकृतावुपरतायां पुरुषस्वरूपेणावस्थानं मुक्तिरिति साङ्ख्यसिद्धान्त: ॥" इति तट्टीकायां मल्लिनाथ: ॥)

जङ्घयोरथ पादेषु पार्श्वयोरुभयोरपि ॥
एतच्छतं सुविज्ञेयं वाजिनां भिषगुत्तमैः ।
अन्यं सप्तदशान्याहुः सिराद्वाराणि वाजिनः ॥
येषु रक्तं हृतं सद्यः प्रकरोति ततः सुखम् ।
गुल्फे गण्डे तथा मेढ्रे कक्षायां चैव मन्यके ।
गुदे पुच्छेऽथ वस्तौ च जान्वोः सर्व्वसन्धिषु ।
जिह्वायां चाधरे चौष्ठे नेत्रयोरुभयोरपि ॥
कर्णमूले मणौ गण्डे रुधिरं स्रावयेद्भिषक् ।
सौम्यलक्षणयोगेन त्याज्यं रक्तं तुरङ्गमाणाम् ॥"
तद्यथा,—
"पलं पलं मुखे त्याज्यं कर्णयोश्चैकमेव च ।
शताई नेत्रदेशाच्च मेढ्रदेशात्तथैव च ॥
गण्डयोरक्ष्योश्चैव स्रावयेत् पञ्चविंशतिम् ।
द्वादशैव गुदे प्राहुरश्वशास्त्रविचक्षणाः ॥
पैत्तिकं कालिकं विद्याद्वाते विद्यात् सफेनिलम् ।
पिच्छिलं श्लैष्मिकं प्राहुः कषायोदकवच्च यत् ॥"*
अथ ऋतुचर्य्या ।
"न प्रावृषि वाहयेदश्वान् प्रावृट्काले कथञ्चन ।
यदीच्छेदन्तमन्तस्य वाहनं दशमासिकम् ॥
कूपोदकं कटुकतैलनिवातगेहं
शस्तं पलार्द्धलवणं दिवसान्तरेण ।
तच्चान्यथा सति सुखामयवीर्य्यहानि-
र्मुख्यैर्बलैर्विरहितस्तु पयो विनश्येत् ॥
शरदि गुडघृतं पयः प्रशस्तं
शरदि सिताष्टपलप्रमाणमच्छम् ।
मधुरमथ जलं सरोवरोत्थं
घृतयुतनीलमुकुष्टकाश्च भोज्याः ॥
हेमन्तकाले घृततैलमाषा
निर्व्वातसंस्था च पयो यथेच्छम् ।
शनैः शनैर्वाहनकर्म्म कुर्य्याद्-
यवांश्च पक्वान् वितरेद् विधिज्ञः ॥
शिशिरे तैलपलाष्टकं कटिस्थं
दिनसप्तावधि पाययेत्तुरङ्गान् ।
तदनु प्रातर्भोजयेद्यवांश्च
ययवसाश्च तथाम्लतक्ररूपाः ॥
यस्य दशा यथा भोज्ये शिशिरे समुपस्थिते ।
अमत्वापि क्रियाः सर्व्वाः स हयः सुखमृच्छति ॥
वसन्ते संप्राप्ते निजसुखवशाद्वाहय हयान्
घृतं तैलं शस्तं सकलविधिकल्पोऽपि च मतः ।
पयो दद्यादस्मै सलवणमथो वाहनविधि-
र्भृशं योऽश्वस्यैनाब्दमपि सुखमिच्छेद्धयवरः ॥
वसन्तसमये योऽश्वः स्थाने तिष्ठति बन्धने ।
तस्योत्साहः प्रणश्येत सालस्यं जायते वपुः ॥
ग्रीष्मे घृतं चलजमोचनधर्म्मशान्ति-
सुच्छायबन्धनविमर्द्दनशीततोयम् ।
दूर्व्वा तृणं लघु च कोमलमन्यदेव
यत्किञ्चिदेवमुपयुक्तमिदं वदन्ति ॥"* ॥
भोजे तु हयलक्षणमन्यथा,—
स्निग्धाङ्गो लघुतरलोमकस्तु पुच्छो
दीर्घास्याक्षिनयनकेशपृष्ठवंशः ।
रक्तोष्ठः पृथुलनितम्बभारवक्षा
राजार्हो भवति तुरङ्गमः प्रशस्तः ॥

नाभेरारभ्य देहस्तु द्विधा पूर्व्वापरक्रमात् ।
पूर्व्वकायस्थिता रक्ताः शुभाय हयसंस्थिताः ॥
अधःकाये स्थिता रक्ता अधमत्वप्रकाशकाः ।
शुक्लानां वैपरीत्येन प्रशस्तफलमादिशेत् ॥"*॥
वात्स्यस्तु ।
"अश्वादिजातिभेदेन हयजातिश्चतुर्व्विधा ।"
तद्यथा,—
"ये शुक्लाः सुविमलपुष्पगन्धा ये वा
शुद्धाङ्गाः सद्यवसदुग्धभोजिनो वा ।
अक्रुद्धाः समरगता भृशञ्च पुष्टा-
स्ते विप्राः क्षितिपतिवाहनेऽतियोग्याः ॥
ये रक्ताः सदगुरुगन्धयोऽहता वा
संरुष्टाः बहुतरभोजिनो बलाढ्याः ।
अश्रान्ताः सकलगुणप्रष्ठाः प्रवीणा
विज्ञेया विधिकरजातजातयस्ते ॥
ये पीताः खलु घृतगन्धयोऽपि ये वा
येऽक्रुद्धाः कथमपि रोषशालिनो ये ।
बद्धा वा बहुतरनादघोषणा वा
विज्ञेया नृपवर ! वैश्यजातयस्ते ॥
ये कृष्णाः सकषामगन्धयोऽपि ये वा
अन्यथा बहुतरताडनैरपीमे ।
क्षीणाङ्गा लघुतनवोऽपि वेगहीना-
स्ते शूद्राः क्षितिपतिना भृशं विहेयाः ॥"
एतत्तु एकैकमेव लक्षणं न सामुदायिकम् ॥
"लक्षणद्वयसम्बन्धात् द्विजातिः स्यात्तुरङ्गमः ।
चतुर्लक्षणयुक्तस्तु दूरे त्याज्यो हयाधमः ॥"*॥
अन्यच्च तु ।
"सात्त्विका राजसाश्चेति तामसाश्चेति ते
हयाः ॥
ये शुक्लवर्णा भृशवेगयुक्ता
अश्रान्तिभाजो बहुभोगिनश्च ।
अक्रोधशीलाः समरेऽनिरुद्धा-
स्ते सात्त्विका भूप ! तुरङ्गमाः स्युः ॥
ये रक्तवर्णा गुरुवेगरोषाः
कशाभिघातं न हि ये सहन्ते ।
येऽमी बलाढ्याः खलु दीर्घदेहा-
स्ते राजसा भूप ! तुरङ्गमाः स्युः ॥
ये कृष्णवर्णास्तनुरोषवेगा
अल्पाशिनो लक्षणलक्षिताश्च ।
ये दुर्ब्बलाः सर्व्वगुणैर्विहीना-
स्ते तामसा भूप ! तुरङ्गमाधमाः ॥
द्वयोर्लक्षणसम्बन्धात् द्विगुणो वाजिमध्यमः ।
त्रयाणां गुणसम्बन्धात् त्रिगुणो वाजिनिन्दितः ॥"
पराशरसंहितायान्तु ।
"पृथिव्यप्तेजोवायुखैः पञ्चभिस्तुरगाश्रितैः ।
उल्वणैः पञ्चधा भेदाः परशरमता यथा ॥
ये स्थूलाः अमसहदेहरूपभाज-
श्छान्ता बहुतरभोजनाश्च दीर्घाः ।
अकुलाः समरगतास्तु रोषभाजो
भौमास्ते घनगुरुघर्घरस्वरास्तु ॥
ये श्यामाङ्गास्तनुबलाः अमांसलकलेवराः ।
अक्रोधवेगाः सक्षमा आप्यास्ते तुरगाधमाः ॥

ये वातवेगप्रतिमोग्रवेगाः
शुष्का भृशं दीर्घकलेवराश्च ।
अश्रान्तिभाजो बहुदूरगाश्च
ते वायवा वाजिवराः प्रदिष्टाः ॥
ये क्रोधशीला भृशवेगयुक्ता
मुक्ता दिनात् क्रोशशतं व्रजन्ति ।
ते तैजसाः पुण्यवतां प्रदेशे
भवन्ति पुण्यैरपि ते मिलन्ति ॥
एको यदा तैजससंज्ञकोऽश्वः
किं कार्य्यमन्यैस्तुरगाधमैस्तु ।
शुद्धं यदा हीरकखण्डमेकं
किं कार्य्यमन्यैर्मणिभिर्विचित्रैः ॥
उत्प्लुत्य ये वाजिवरा व्रजन्ति
क्रुधा भृशं वेगसमन्विताश्च ।
ये लङ्घयन्ति परिखामपारां
ते गागना पुण्यसमाः प्रदिष्टाः ॥
द्वयोर्लक्षणसम्बन्धात्तुरगः स्यात् द्विभौतिकः ।
स्वजातिगुणभूतानां हयानां वाहनं शुभम् ॥
शालिहोत्रादिभिश्शास्त्रद्विरुक्तं यथोत्तरम् ।
असम्भवे हि दुष्टाश्वं वाहयेदिति चेत्तदा ॥
तिलं सकाञ्चनं दद्यात्सवर्णं वा गुडान्वितम् ।
रेवन्तं पूजयेद्वापि नित्यं निर्मन्थयेत्तदा ॥
दद्यात्ताम्रपलं वापि अभावे सर्व्वकर्म्मणः ॥"
एवमन्यत्रापि ।
"काञ्चनं रजतं ताम्रं लौहमेतद्यथाक्रमम् ।
अश्वादिजातिदोषाणां देयमेतत् प्रशान्तये ॥
अभावेऽपि च सर्व्वेषां ताम्रेण स्यात् प्रति-
क्रिया ।"
इति हयपरीक्षा ॥ * ॥
इति भोजराजकृतयुक्तिकल्पतरुः ॥
("येन श्रीमता हिमालयतरुच्छायासु
विक्रीडितम्
यः स्नातो हिमपुष्पवासशिशिरे गङ्गाजले पावने ।
रेमे यस्तु तुरङ्गयूथजनितैर्नानाविधैर्हेषितैः
पायाद्वः स तुरङ्गघोषतनयः श्रीशालिहोत्रो
मुनिः ॥
जयति च पाण्डवनाथो धर्म्मसनाथो युधिष्ठिरो
नृपतिः ।
भीमार्ज्जुनसहदेवास्तदनु च ये वाजिशास्त्रतत्त्वज्ञाः ॥
दृष्ट्वा सम्यङ्नकुलः शास्त्रं ज्ञनुकं च शालि-
होत्रीयम् ।
ब्रूते शास्त्रार्थमव्यक्तार्थं कृत्वा समासेन ॥
प्रश्नो जातिवर्णभावसंदन्ता
लक्षं वेगा वाहनं धातुरसम् ।
कालो नस्यं पिच्छमाज्यं कषायं
शाला चेष्टां वाजिनामत्र वक्ष्ये ॥
सपक्षा वाजिनः सर्व्वे सञ्जाता व्योमचारिणः ।
गन्धर्व्वेभ्यो यथाकामं गच्छन्ति च समन्ततः ॥
तान् दृष्ट्वा जवसम्पन्नानसख्यान्वाहनोचितान् ।
शक्रः प्रोवाच पार्श्वस्थं शालिहोत्रं मुनीश्वरम् ॥
नाश्यसाध्यं मुने ! किञ्चिद्भवतो भुवनत्रये ।
तस्मादाशु कुरुष्व त्वं वाहनार्हान् हयोत्तमान् ॥

ये च ये युद्धकार्येषु प्रवहन्ति रथं सदा ।
अश्वाश्च वारणैश्च दानवैर्देवसत्तरैः ॥
ऐन्द्रिकाश्च समुत्पन्न पक्षच्छेदं यथासदा ।
वाजिनां शक्रवाक्येन शालिहोत्रो महामुनिः ॥
छिन्नपक्षास्तु ते सर्व्वे गत्वा तत्स्वविमन्वयम् ।
दीनाः सुदुःखसम्पन्ना रुधिरेण परिप्लुताः ॥
भगवन् ! किं निमित्तं नः पक्षच्छेदः कृतस्त्वया ।
अपराधविहीनानां नेहशिच्छन्ति पक्षिताः ॥
तस्मान्नतिमेव प्राज्ञ ! सर्व्वेषामिह वाजिनाम् ।
यथा स्यात् सर्व्वदा सौख्यं पुष्टिश्च मुनिपुङ्गव ! ॥
अथासौ कृपयाविष्टस्तानुवाच सुदुःखितान् ।
इन्द्रादेशात् कृतं सर्व्वं भवतां पक्षपातनम् ॥
तस्माद्वः प्रकरिष्यामि भविष्यति यथासुखम् ।
पुष्टिरश्वा यथा देहे गौरवं च जगत्त्रये ॥
यूयं शक्रादिदेवानां वाहनत्वं करिष्यथ ।
तथा भूमिगतानाञ्च गौरवेण समन्विताः ॥
यो राजा भवतां पुष्टिं अन्नपानादिभिः सदा ।
करिष्यति न सन्देहो भविष्यति स दुर्ज्जयः ॥
न च त्यक्ष्यति तं लक्ष्मीः कदाचिच्चलचञ्चला ।
अपि सर्व्वगुणैर्हीनं बहुशत्रुभिरावृतम् ॥
तथा चैव विधास्यामि परमञ्च चिकित्सितम् ।
पुष्टौ च रोगनाशार्थं नराणां विहितं यथा ॥
तस्मात्त्यक्त भूलोकं पातालञ्च तथामरे ।
स्वर्गं चान्ये मदादेशाद्दूयेन शान्तिर्भवेद्ध्रुवम् ॥
एवं विहृत्य तान् सर्व्वान् शालिहोत्रस्तुरङ्गमान् ।
चक्रे द्वादशसाहस्रीं तदर्थे संहितां सुधीः ॥
ततःप्रभृति लोकेऽस्मिन् वाह्या जातास्तुरङ्गमाः ।
तच्चिकित्सितं तेषां शालिहोत्रप्रभाषितम् ॥"
इति श्रीनकुलकृतेऽश्वचिकित्सिते प्रश्नो नाम प्रथमोऽध्यायः ॥

अथ जातिः ।

"उत्तमा मध्यमा नीचाः कनीयांसस्तथापरे ।
चतुर्द्धा वाजिनो भूमौ जायन्ते देशसंश्रयात् ॥
ताजिकाः खुरशानाश्च उत्तराश्चोत्तमा हयाः ।
गोजिकानाश्च केकाणाः पौढाहाराश्च मध्यमाः ॥
भाङ्गजाश्चोत्तमाशाश्च राजमूलाश्च मध्यमाः ।
गोकराः सावराश्चैव सिन्धुपाराः कनीयसः ॥
अन्यदेशोद्भवा ये च नीचनीचाश्च ते स्मृताः ।
वाजिनो जलजाः केचिद्वह्निजातास्तथापरे ॥
समीरप्रभवाश्चान्ये उलूकच्छगणात्तथा ।
जलोद्भवा द्विजातीयाः क्षत्रिया वह्निसम्भवाः ॥
समीरप्रभवा वैश्या उलूकाश्च शूद्रजाः ।
विवेकी सत्त्वगो विप्रस्तेजस्वी क्षत्रियो बली ॥
दुष्टभावस्तथा वैश्यः शूद्रो निःसत्त्वकातरः ।
ब्राह्मणः सामवाही च भेदवाही च क्षत्रियः ॥
उपादानेन वैश्यः स्याच्छूद्रो दण्डेन ताडितः ।
पुष्पगन्धः सदा विप्रः क्षत्रियोऽगुरुगन्धकः ॥
घृतगन्धः सदा वैश्यो मीनामोदी च शूद्रकः ।
विप्रार्हा वाजिनः सर्व्वे क्षत्रियो भूपतिः सदा ॥
द्वौ वैश्यस्याथ शूद्रस्य शूद्र एव सुखावहः ।
केचिदिच्छन्ति भूपानां सर्व्वेऽश्वा वाहनोचिताः ॥
तदर्थं भूतले यस्माच्छालिहोत्रेण निर्म्मिताः ।
ब्राह्मणाः क्षेमकार्य्येषु सिद्धिं गच्छन्ति वाजिनः ॥
क्षत्रिया युद्धकार्य्येषु वैश्या वित्तार्ज्जने सदा ।
शूद्राश्चार्येषु तत्त्वेषु ज्ञात्वैवं वाजिनः सदा ॥
आरोहेत् सर्व्वकार्य्येषु यदीच्छेच्छाश्वतीं श्रियम् ।
सदा शुभा भवन्त्येते वाजिनो यस्य भूतले ॥
सदैव निद्रावशगा निद्राच्छेदस्य सम्भवः ।
जायते सङ्करे प्राप्ते कर्क्करस्य च भक्षणे ॥
प्रबुद्धाः कथयन्त्यश्वाः शुभं वा यदि वाशुभम् ।
स्वस्वामिनो निजैश्चिह्नैस्तच्चिह्नैर्ज्ञेयं विचक्षणैः ॥
यः सन्नद्धो हयो रावमूर्द्ध्वमूर्द्ध्वं करोति च ।
खुराग्रेण लिखन् भूमिं स शंसति रणे जयम् ॥
यः करोत्यसकृन्मूत्रं पुरीषञ्चाशुमोचनम् ।
स शंसति पराभूतिं यश्चैवं वर्त्तते हयः ॥
निरामिषं निशीथे यो जागर्त्ति नृपतेर्हयः ।
स शंसति हतन्तस्य स्थिरस्यापि प्रयाणकम् ॥
यदा व्याधिं विना वाजी ग्रासमुत्सृजति दुर्म्मनाः ।
अश्रुपातञ्च कुरुते तदा भर्त्तुरशोभनम् ॥
पुलकाञ्चितपुच्छा ये जायन्ते भूपतेर्हयाः ।
निरीक्ष्यन्तः प्रभोर्नाशं ते वदन्ति निशागमे ॥
प्ररटं रचयेद्यत्नात् प्रविशन्तं हयालये ।
यदीच्छेच्छाश्वतीं वृद्धिं तेषाञ्चैव तथात्मनः ॥
स्फुलिङ्गा यस्य दृश्यन्ते पुच्छदेशे च वह्निजाः ।
परचक्रागमाशंसी विज्ञेयो हयपण्डितैः ॥
अश्वशालां समासाद्य यदान्तर्मधुमक्षिकाः ।
मधुजालं प्रकुर्व्वन्ति तदाश्वान् घ्नन्ति क्षतक्षणः ॥
तस्मात् सर्व्वप्रयत्नेन वाजिशालां प्ररक्षयेत् ।
उपायेभ्यश्च सर्व्वेभ्यो य इच्छेद्भूतिमात्मनः ॥
ब्राह्मणान् वाचयेत् स्वस्ति नित्यं वेदविचक्षणान् ।
तिलहोमस्तथा कार्य्यो जपश्च शतरुद्रियः ॥
मन्दुरान्ते सदा धार्य्यो रक्तवक्त्रो महाकपिः ।
सर्व्वपापविनाशाय वाजिनाञ्च विवृद्धये ॥
मरटं रचयेद् यत्नात् प्रविशन्तौ हयालये ।
यदीच्छेच्छाश्वतीं वृद्धिं तेषाञ्चैव तथात्मनः ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते जात्यधिकारे द्वितीयोऽध्यायः ॥

अथ वर्णवर्णनम् ।

"वर्णाः सप्त भवन्तीह सर्व्वेषां वाजिनां ध्रुवम् ।
तानहं कीर्त्तयिष्यामि भेदैर्जाताननेकधा ॥
सितो रक्तस्तथा पीतः सारङ्गः पिङ्ग एव च ।
नीलः कृष्णोऽथ सर्व्वेषां श्वेतः श्रेष्ठतमः स्मृतः ॥
यज्ञार्हो भूपतेर्वाजी सर्व्वश्वेतः प्रशस्यते ।
तदभावे यथा प्रोक्तास्तथा श्रेष्ठाः क्रमेण च ॥
श्वेतः प्रालेयसङ्काशो रक्तः कुङ्कुमसन्निभः ।
हरिद्रासदृशः पीतः सारङ्गः कर्व्वुरः स्मृतः ॥
पिङ्गः कपिलकाकारो नीलो दूर्व्वायसन्निभः ।
कृष्णो जम्बूफलाकारः [illegible] समुदाहृतः ॥
पीताभः श्वेतपादो यस्तथा स्यात् सितलोचनः ।
चक्रवाकः स विज्ञेयो राजार्हो वाजिसत्तमः ॥
सर्व्वश्वेतो हयो यस्तु भवेच्छ्यामककर्णकः ।
स वाजी वाजिमेधार्हः श्यामकर्णः प्रकीर्त्तितः ॥
मुखे चन्द्रकसंवीतो जम्बूफलसमाकृतिः ।
श्वेतपादः स विज्ञेयो मल्लिकाख्यः स पूजितः ॥
चत्वारोऽप्यसिताः पादाः सर्व्वश्वेतस्य वाजिनः ।
भवन्ति यस्य स त्याज्यो यमदूतः सुदूरतः ॥
यस्य पादाः सिताः सर्व्वे पुच्छं वक्षो मुखं तथा ।
मूर्द्धजाश्च सिता यस्य तं विद्यादष्टमङ्गलम् ॥
भस्माभं वाजिनं यत्नात् सुदूरेण नराधिपः ।
यदि वाञ्छति कल्याणं वाञ्छेच्च श्रीसमुद्भवम् ॥
यस्य रोमविभेदेन जायन्ते रोमविन्दवः ।
पुष्पाख्यः स परित्याज्यः सर्व्ववाजिभयावहः ॥
यस्य पादाः सिताः सर्व्वे तथा वक्षश्च मध्यतः ।
कल्याणपञ्चकः प्रोक्तः सर्व्वकल्याणकृच्च सः ॥
विमिश्रवर्णकाः सर्व्वे प्रशस्ता वाजिनः स्मृताः ।
कृष्णनीलस्य मिश्रत्वमेकं मुक्त्वा सुदूरतः ॥
यस्योत्कृष्टतरो वर्णो वृद्धिं याति शनैः शनैः ।
नाशयति तथा नीचान् स करोति बहून् हयान् ॥
यस्याधमेन वर्णेन छाद्यते च प्रधानजः ।
विवृद्धिं गच्छता सोऽथ करोति हयसंक्षयम् ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते वर्णो नाम तृतीयोऽध्यायः ॥

अथ आवर्त्ताः ।

"आवर्त्ता विंशतिः प्रोक्ताः शालिहोत्रमहात्मना ।
गात्रस्थानविभागेन तेषां व्यक्तिर्मयोच्यते ॥
ललाटे मस्तके चैव ग्रीवायां हृदये तथा ।
पादे पृष्ठे मणिबन्धे नाभिदेशे विशेषतः ॥
स्कन्धे पार्श्वे गले वक्त्रे कुक्षौ रन्ध्रे त्रिके तथा ।
आद्यास्त्रयोदशावर्त्ता विज्ञेया वाजिपण्डितैः ॥
नासिकाग्रे ललाटाग्रे शङ्खे कण्ठे च मस्तके ।
आवर्त्ता जायते येषां ते धन्यास्तुरगोत्तमाः ॥
हृदि स्कन्धे गले चैव कटिदेशे तथैव च ।
नाभौ कुक्षौ च पार्श्वाङ्गे मध्यमास्ते प्रकीर्त्तिताः ॥
ललाटे यस्य चावर्त्तौ द्वितीयस्य स लिङ्गकः ।
मस्तके च तृतीयश्च पूर्णकुक्षिः स उत्तमः ॥
पृष्ठवंशे तथावर्त्तो यस्यैकः संप्रजायते ।
स करोत्यश्वसंघातान् स्वामिनः सूर्य्यसंज्ञकः ॥
कक्षायां जानुमेढ्रे च त्रिवलौ पुच्छसन्निधौ ।
पुच्छे गुह्ये बलावस्थावावर्त्ता अधमा हये ॥
त्रयो यस्य ललाटस्था आवर्त्ता अधरोत्तराः ।
त्रिकूटः स परिज्ञेयो वाजिवृद्धिकरः परः ॥
एवमेव प्रकारेण त्रयो ग्रीवां समाश्रिताः ।
त्र्यावर्त्तः स वाजीशो जायते भूपमन्दिरे ॥
ललाटे युगलावर्त्तौ चन्द्रार्कौ संप्रकीर्त्तितौ ।
वाजिनो यदि तौ स्यातां राष्ट्रवृद्धिकरौ परौ ॥
उपर्य्युपरि यस्य स्युरावर्त्ता वाजिके त्रयः ।
निःश्रेणिः स तु विज्ञेयो राष्ट्रवृद्धिकरः परः ॥
एकोऽथवा कपोलस्थो यस्यावर्त्तः प्रदृश्यते ।
वर्त्तमानः स विज्ञेयः स इच्छेत् स्वामिनाशनम् ॥
कपोलाभ्यान्तथावर्त्तौ विद्येते वाजिनो यदि ।
तावश्विनाविति प्रोक्तौ युद्धकाले जयप्रदौ ॥
गण्डावर्त्तो भवेद्यस्य वाजिनो दक्षिणाश्रयः ।
स करोति महासौख्यं स्वामिनः शिवसंज्ञकः ॥
तद्वद्वामाश्रयः क्रूरः प्रकरोति धनक्षयम् ।
इन्द्राक्षावुभौ शस्तौ नृपराज्यविवृद्धिदौ ॥
कर्णमूले यदावर्त्तस्तनमध्ये च तथापरः ।

विजयाख्याशुभौ ज्ञेयौ युद्धकाले जयप्रदौ ॥
नासामध्ये यदावर्त्त एको वा यदि वा त्रयः ।
चक्रवर्त्ती स विज्ञेयो वाजी भूपालपूजितः ॥
कण्ठे यस्य महावर्त्त एकोऽश्वस्य प्रजायते ।
चिन्तामणिः स विज्ञेयश्चिन्तितार्थविवर्द्धनः ॥
स्कन्धे पार्श्वे यदावर्त्तः स भवेत् पद्मलक्षणः ।
करोति विधिवत् पद्मं स्वामिनः सततं सुखम् ॥
शुक्लाख्यौ तालुकान्तस्थावावर्त्तौ कीर्त्तिवर्द्धनौ ।
हृदयस्य स्वामियुक्तस्य सदैव सुखदायकौ ॥
एकावर्त्तो भवेद्यस्य कक्षान्ते वाजिनो यदा ।
स रणे मृत्युमाप्नोति द्वौ च स्वामिविनाशनौ ॥
जानुदेशे यदावर्त्तो वाजिनः संप्रदृश्यते ।
प्रवासं सततं ब्रूते स्वभर्त्तुः क्लेशसंकुलम् ॥
वाजी मेढ्रतलावर्त्तो वर्जनीयो महीभुजाम् ।
स करोति हरेर्नाशं परचारसमुद्भवम् ॥
त्रिवलिस्थो यदावर्त्तस्त्रिवर्गस्य प्रणाशकः ।
वाजिनस्ते परिज्ञेयाः स्त्रीपार्श्वस्था भयप्रदाः ॥
पुच्छदेशे यदावर्त्तो वाजिनः संप्रदृश्यते ।
धूमकेतुरिति ख्यातः स त्याज्यो दूरतो नृपैः ॥
गुह्ये पुच्छे वलौ यस्य भवन्त्यावर्त्तकास्त्रयः ।
स कृतान्तस्वरूपेण वर्जनीयस्तुरङ्गमः ॥
अथ जङ्घे यदा वाजी सम्पुटं न स्पृशेत् क्वचित् ।
यमदूतः स विज्ञेयो वर्जनीयः प्रयत्नतः ॥
हीनदन्तोऽधिदन्तश्च करालो कृष्णतालुकः ।
मुषली च तथा शृङ्गी वर्द्धते स्वामिघातकाः ॥
एकाण्डजातश्चैकाण्डो हीनाङ्गोऽप्यधिकाङ्गकः ।
परित्याज्यः स वाञ्छद्भिरन्विष्य परमं यशः ॥
घराटी दरनको वाली शृङ्गी चैव चतुर्थकः ।
वर्जनीयः प्रयत्नेन सर्व्वे ते पापलक्षणाः ॥
घराटी च स्वामिनं हन्ति दरनो धनसंचयम् ।
अन्तःपुरं तथा वाली शृङ्गी राष्ट्रविनाशनः ॥
षट्पदाभो भवेद्यश्च कृष्णतालुर्न दुष्यति ।
शङ्खपादमुखो यस्तु आवर्त्तैः कुत्सितैरपि ।
न दुष्यति सदावर्त्तः शालिहोत्रमतं यथा ॥
इति श्रीनकुलविरचितेऽश्वचिकित्सिते
आवर्त्ताध्यायश्चतुर्थः ॥

अथ दन्ताः ।

दन्तोद्भेदं प्रवक्ष्यामि वाजिनामायुर्लक्षणम् ।
येन विज्ञानमात्रेण आयुर्ज्ञानं प्रवर्त्तते ॥
अश्वस्तु तनुभिर्दन्तैः क्षीरदन्त इति स्मृतः ।
तथा षोड़शभिः क्षोणो षाण्मैर्द्वादशमासिकः ॥
त्रिंशन्मासोद्भवाः सर्व्वे खरखाः परिकीर्त्तिताः ।
द्वौ स्यातां द्वौ च न स्यातां मध्योपरि यथाक्रमम् ॥
चतुर्भिर्वत्सरैर्दन्ताः कालिकाख्या भवन्ति च ।
तथान्यः सप्तमे वर्षे चतुर्थः कालिको भवेत् ॥
अष्टमे वत्सरे प्राप्ते प्राप्ताः स्युः सार्व्वकालिकाः ।
नवमे त्वथवा रेखा पीतत्वं दर्शयन्ति च ॥
तथाप्येकादशे वर्षे तावत् पीतत्वमागताः ।
तिष्ठन्ति दशनास्तेषां वाजिनामध्वसंश्रयम् ॥
ततः श्वेताः प्रदृश्यन्ते यावद्वर्षत्रयं पुनः ।
ततः काचप्रभाः सम्यक् यावत् संवत्सरात्रयः ॥
ततः षमदशाद्दूर्द्ध्वं यावद्वर्षाणि विंशतिः ।
मक्षिकाभारदास्तेषां यावद्वर्षत्रयं पुनः ॥
तस्मादूर्द्ध्वं शङ्खाभास्तावद्वर्षत्रयं पुनः ।
प्रकम्पश्च समागम्य पश्चात् पातः समाश्रयम् ॥
द्वात्रिंशद्वत्सरैरेव वाजी निर्व्वाणमाप्नुयात् ।
दंष्ट्राचतुष्टयं श्वेतं पश्येच्च परमायुषि ॥
अश्वानामेव सर्व्वेषां दन्ता द्वादश कीर्त्तिताः ।
कालिका हारिणी शुक्ला काचा वाप्यथ मक्षिका ॥
शङ्खोदूखलकश्चैव दन्तानाञ्चलनं तथा ।
ततस्तु पतनं विद्यादेष चाष्टमसंश्रयः ॥
चतुर्विंशतयो दंष्ट्राः शालिहोत्रमतं तथा ।
एवं दन्तविशेषेण सर्व्वेषामिह वाजिनाम् ।
विज्ञेया चायुषःसंख्या वाजिपोषणतत्परैः ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते दन्तोद्भेदो
नाम पञ्चमोऽध्यायः ॥

अथ अवयवप्रमाणम् ।

दीर्घस्कन्धविमांसास्या ये भवन्ति तुरङ्गमाः ।
ते शस्ताः पार्थिवेन्द्रस्य यानवाहनकर्म्मणि ॥
स्कन्धमभ्युन्नतं दीर्घं वक्रग्रीवं विशेषतः ।
चमरालङ्कृतं सम्यक् स्तोकबालसमन्वितम् ॥
येषां पृष्ठं सुवंशं स्याद्विपुलं व्रणवर्जितम् ।
किञ्चिन्मध्ये भवेन्निम्नं राजार्हास्ते तुरङ्गमाः ॥
स्निग्धरोमा सुवृत्ता च सुस्थूला विपुला कटी ।
ग्रथिताः सुदृढा रम्या भुजा मांसप्रपूरिताः ॥
पादा निर्म्मांसला वक्राश्चक्राकारखुरान्विताः ।
चप्रमाणं तथा वक्षः कर्णौ लघुतरौ स्मृतौ ॥
पार्श्वौ तनुतरौ शस्तौ सुरक्तस्निग्धतालुकम् ।
दन्ताश्च शिखराकारा विपुला चन्द्रवर्च्चसः ॥
सप्तविंशप्रमाणेन मुखमश्वस्य शस्यते ।
कर्णौ षड़ङ्गुलौ प्रोक्तौ तालुकं चतुरङ्गुलम् ॥
चत्वारिंशच्च सम्प्राप्ताः स्कन्धाः सम्यक् प्रकीर्त्तिताः ।
पृष्ठवंशश्चतुर्व्विंशः सप्तविंशा तथा कटी ॥
अतिसूक्ष्मं तथा निम्नं पुच्छं हस्तद्वयायतम् ।
लिङ्गं हस्तप्रमाणञ्च तथाण्डौ चतुरङ्गुलौ ॥
मार्गस्थानं चतुर्व्विंशं हृदयं षोड़शाङ्गुलम् ।
कटिकन्धान्तरञ्चोक्तं चत्वारिंशत् प्रमाणतः ॥
मणिबन्धद्वयं चैव खुराश्च चतुरङ्गुलाः ।
अशीत्यङ्गुल उत्सेधो दैर्घ्यञ्च द्व्यधिकं शतम् ।
एवं क्रमेण गात्रस्य प्रमाणं वाजिनां मतम् ॥

दीर्घाणि चत्वारि तथोन्नतानि
चत्वारि रक्तानि च सूक्ष्मकाणि ।
ह्रस्वाणि चत्वार्य्यथ चायतानि
भूयश्च चत्वार्य्यथ नम्नकाणि ॥

द्वात्रिंशत् क्रमशोऽप्याहुर्लक्षणानि मुनीश्वराः ।
तान्यहं कीर्त्तयिष्यामि वाजिनाञ्च पृथक् पृथक् ॥

आस्यं भुजौ केशलकाटिकाश्च
दीर्घं चतुष्कं तुरगस्य शस्तम् ।
तथोन्नते नासपुटे ललाटे
शफाश्च तज्ज्ञाश्चरणौ वदन्ति ॥
ओष्ठौ च जिह्वाप्यथ तालुकञ्च
मेढ्रं सुरक्तं शुभदं हयस्य ।
तनूनि वन्धाश्चरणेषु कोष्ठं
श्रोत्राणि सर्व्वाणि तथैव पुच्छम् ॥
कर्णान्तरं कर्णसमन्वितञ्च
वंशं तथा ह्रस्वतरं प्रशस्तम् ।
वक्त्रं मुखं कन्धराजानुनी च
पार्श्वञ्च सद्भिः शुभदं प्रदिष्टम् ॥
कक्षान्तरं चोदरमध्यमञ्च
निम्ना कटी तानि सजानुकानि ।
वक्षःशफोरूजघनस्थलञ्च
चतुष्कमेतत् पृथुलं प्रदिष्टम् ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते सर्व्वावयव-
प्रमाणो नाम षष्ठोऽध्यायः ॥

अथ वेगः ।

गुणानामिह सर्व्वेषां गुणो वेगस्तथोऽधिकः ।
अश्वानां शस्यते तज्ज्ञैरश्वज्ञानविचक्षणैः ॥
संवाहनविधानेन प्रकाशं यान्ति संश्रयम् ।
तस्मात् सर्व्वप्रयत्नेन वेगो ज्ञेयश्च वाजिनाम् ॥
अवाहिता विनश्यन्ति विनश्यन्त्यतिवाहिताः ।
अश्वानां वाहनं पथ्यं जातुराणाञ्च मोचनम् ॥
अधमा मध्यमास्ते स्युर्मध्यमाश्च तथोत्तमाः ।
उत्तमाश्चोत्तमा भूयो वाह्यमानास्तुरङ्गमाः ॥
रूढ़मश्वविदो श्रेष्ठं रूढ़े सर्व्वं प्रतिष्ठितम् ।
रूढ़ेन तु विहीनस्य लक्षणं चाप्यलक्षणम् ॥
रूपावर्त्तगतिच्छायासत्त्ववर्णवयोबलम् ।
जवहीनस्य वाहस्य सर्व्वमेव निरर्थकम् ॥
गतेर्धन्यतरो वर्णो वर्णाद्धन्यतरः स्वरः ।
स्वराद्धन्यतरं सत्त्वं सर्व्वं सत्त्वे प्रतिष्ठितम् ॥
लघुत्वं मातृदोषेण पितृदोषेण जाड्यता ।
दौर्व्बल्यं स्वामिदोषेण स्वदोषो नास्ति वाजिनाम् ॥

जवो हि सप्तेः प्रथमं विभूषणं
त्रपाङ्गनायाः कृशता तपस्विनः ।
द्विजस्य वेदोऽथ मुनेरपि क्षमा
पराक्रमः शस्त्रबलोपजीविनः ॥

आकर्षन्निव गां वमन्निव खुरौ पश्चार्द्धमुद्यन्निव
स्रोतोऽश्र्वन्निव खं पिबन्निव दिशो वायुं समश्नन्निव ।
साङ्गारप्रकरान् स्पृशन्निव महीं छायाममर्षन्निव
चञ्चच्चामरचौर्य्यमाणवदनः श्रीमान् हयो धावति ॥
अलक्षितगतागतैर्मृगदृशां कटाक्षैरिव
चलानुनयशीलनैः प्रलयकेलिकोपैरिव ।
सुदृशमदकोपरैर्मृगदृशां सुरोपैरिव
त्वदीयतुरगैरलं धरणिचक्रमाक्रम्यते ॥
येषां दीपशिखोपमानि नयनान्युद्धावितः सन्निव
ग्रीवा क्रौञ्चनिभा विभाति च समा पादाश्च
शङ्खोपमाः ॥
वेगो वायुरिवाथ चामरसमः स्याद्वारणप्रेङ्खितं
शङ्खश्रीचन्द्रगेन्द्रदुन्दुभिघनध्वानप्रभतुल्यस्वनः ॥
वक्त्रे यो हरिणाधिपप्रतिनिभो व्याघ्रोपमो
बाहुभिः
आवर्त्तैरशुभैः प्रधानकुलजाः सुस्निग्धवर्ण-
प्रभाः ।
उद्दामाः प्रियदर्शनाश्च सुभगाः श्वासैः
सुगन्धैश्च ये

मन्यासे अथराख्यविलसुखदा: संवाहका
भूपते: ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते वेगवर्णनो-
नाम सप्तमोऽध्याय: ॥

अथ आरोहणम् ।

अथात: संप्रवक्ष्यामि हयारोहणमुत्तमम् ।
येन विज्ञानमात्रेण रेवन्तेनोपमीयते ॥
चलकिसलयपाद: कर्णमध्यैकदृष्टि:
न चलति कटिदेशे आसने संस्थितश्च ।
हयहृदयगतिज्ञ: स्थानदण्डावपाती
स खलु तुरगयोक्ता मान्यते पार्थिवेन्द्रै: ॥
यो नित्यं दृढमुष्टिश्चलकर्मुक: क्रोधानलैर्वर्ज्जित:
सत्यैकस्थिरबुद्धिमध्यमतनु: शास्त्रस्थतत्त्वज्ञक: ।
काले दण्डनिपातविभ्रमयुत: ताम्बूलवस्त्रान्वित:
स्वेवं लक्षणसंयुतो हयवहो राज्याधिपै: पूज्यते ॥
ऊरू स्थिरौ यस्य चलौ च पादौ
त्रिकोन्नतं संहतमासनञ्च ।
स वाजिवाह: कथित: पृथिव्यां
शेषा नरा भारवहा हयानाम् ॥
प्राज्ञ: सत्त्वबलोत्साही दृढ: सर्व्वाङ्गसौष्ठव: ।
जितशीतातपालस्यो जितायासो जितासन: ॥
हयकालबलप्राणजवस्थामाश्वयोगवित् ।
शान्त्योपचारसारज्ञो रणक्रीडासु शिक्षित: ॥
वाजिनां हृदयज्ञश्च स्थाने दण्डनिपातवित् ।
दुष्टाश्वदमने दक्ष: सर्व्वक्रियासह: शुचि: ॥
आसीनधावनपानीये परपृष्ठावलोकने ।
शिशु श्रेष्ठ: प्रवेशे च निर्गमे कुशलोऽश्ववित् ॥
रोगं विकुरुते यत्र तत्रत्या बाधाविचारवित् ।
धनु:कुन्तासिशस्त्रज्ञ: सोऽश्ववाह: प्रकीर्त्तित: ॥
वक्त्रे स्कन्धे मुखे क्रोडे गात्रे सक्थ्यौ च ताडयेत् ।
उन्मार्गी यदि भ्रष्टोऽश्वो मूढ: स्खलति हेषते ॥
कुपिते पुच्छसंस्थाने भ्रान्ते जानुद्वयं तथा ।
सर्व्वथा शान्तदन्तस्य दण्डमेकं निपातयेत् ॥
हेषणे स्कन्धमुद्दिष्टं स्खलिते जघनान्तरम् ।
भीते वक्ष:स्थलं हन्यात्तद्वदुन्मार्गगामिनम् ॥
अस्थाने ताडितो वाजी बहून् दोषान् प्रदर्शयेत् ।
तावत्तिष्ठन्ति ते दोषा यावज्जीवत्यसौ हय: ॥
दण्डेनाभिभवेद्वाहा नारोहेद्दण्डवर्ज्जितान् ।
दण्डो हि साधनं तीव्रं यद् दण्डात् प्रजायते ॥
तुलावदुद्धता वल्गा नात्युच्चा नातिलम्बिता ।
दीर्घं कृत्वा तु कशया निर्य्यगाकुञ्चिता तथा ॥
कटिं समीक्ष्य शिथिल्याद्वहमानस्य ताडयेत् ।
सद्य: प्रस्खलिते गात्रे तत्र दण्डं प्रदापयेत् ॥
अकालदण्डपाताच्च त्वकालग्रहमोक्षणात् ।
अकालहिंसायानाच्च तेन वाजी न धावति ॥
आसनं शिथिलं यस्य खरो यस्य न भीषण: ।
लघुशाखारताना च वाजी तस्य न धावति ॥
सर्व्वलक्षणसम्पन्न: सर्व्वदोषविवर्ज्जित: ।
कुलशीलबलोपेत: कथमश्वो न धावति ॥
गतिरेका स्मृता चान्या चतुराख्या तृतीयका ।
वेगसन्धिश्चतुर्थी च धारावेगगतिस्तथा ॥
अधरागार्थवेगस्य चञ्चलस्य त्रिकोणत: ।
नित्यमुद्यतदण्डस्य तस्य वाजी न धावति ॥
धारा तु पञ्चमी प्रोक्ता न शृणोति न पश्यति ।
सर्व्वकर्म्माक्षमो वाजी तस्मात्तां परिवर्ज्जयेत् ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते आरोहणं
नाम अष्टमोऽध्याय: ॥

अथ ऋतुचर्य्या ।

कर्म्मचर्य्यासु नित्यानां शुद्धानां सुनिवर्त्तितम् ।
धनुरष्टादश योज्यं वाजिनां मण्डलं क्रमात् ॥
सङ्कोचयेच्चयं तावद् यावत् कार्म्मुकपञ्चकम् ।
तदूर्द्धं मण्डलैर्योज्यो गोमूत्रपदमन्तरम् ॥
ऋजुवृत्तानुवृत्ता च गोमूत्रा सर्व्वकर्म्मसु ।
युज्यमानानि दृश्यन्ते प्रायशो हि विचक्षणै: ॥
शालिहोत्रमुनिप्रोक्ता चर्य्या षोडश वाजिनाम् ।
तासामनुपयोगित्वान्न कृत: संग्रहो मया ॥
तीक्ष्णस्त्वेकेन सुदिनो द्वाभ्यां भद्रस्तु धावति ।
त्रिभिर्दण्डैस्तदा मन्द: क्रमात् षष्ठाभिताडनै: ॥
तीक्ष्णाश्वभद्रमन्दानां प्रधानो जव उच्यते ।
सोऽप्यनेनैव मार्गेण संविभज्यो विजानता ॥
अवाच्छिता विनश्यन्ति सर्व्वकर्म्माक्षमा हया: ।
क्षशा व्याधिपरीताङ्गा जायन्तेऽत्यन्तवाहनात् ॥
बलं कालो वयो भूमि: काल: सम्मत: क्रमात् ।
कुर्य्यादेकान्तरे योगश्चातियोगो हि दोषवान् ॥
तच्च लोकप्रसिद्धं हि बोद्धव्यं यत्नतो बुधै: ।
हयवाहनवेत्तारो नरेन्द्रै: पूज्यते सदा ॥
धाविते ये गुणा: सम्प्रवक्ष्यमाणान्निबोध तान् ।
शालिहोत्रादिशास्त्राणां व्यायामफलसम्भवान् ॥
स्थिरमांसो भारसहो लघुगात्र: पराक्रमी ।
दीप्ताग्निश्च सुशीलश्च व्यायामेनोपजायते ॥
सत्यार्थी विनयी प्रीतो निर्दोषस्तापवर्ज्जित: ।
वेदवित्तादिशिक्षितत्र उक्तो धावति निश्चति ॥
शुभावर्त्तगतिच्छायाबलशीलसमन्वितम् ।
गन्धवर्णस्वरोन्नतकण्ठसारपुच्छविभूषितम् ॥
एवं विधं समारुह्य देवतांश्च हयं नृप: ।
जित्वा रिपुकुलं भुङ्क्ते नि:शङ्कोऽथ वसुन्धराम् ॥
जव: श्रेष्ठतुरङ्गाणामुत्तमाधममध्यम: ।
त्रिविधोऽपि तथा भिन्नो जवभेद: स उच्यते ॥
यवोदरैरष्टसङ्ख्यैरङ्गुलं परिकीर्त्तितम् ।
हस्तश्च तैश्चतुर्विंशै: कार्म्मुकं तैश्चतुर्गुणै: ॥
अक्ष्णोर्निमेषणै: काला अष्टलवकरं तथा ।
मात्रा ज्ञेया प्रमाणेन पूर्व्वप्रोक्ता तपोधनै: ॥
मात्राषोडशकेनाश्वो यो धावति धनु:शतम् ।
तमश्वमुत्तमं विद्याद्वायुवेगं महाजवम् ॥
यथोत्तमजवा वाहास्तथाश्चा मध्यमाधमा: ।
चतुरष्टाधिकां वृद्धिं मात्राणां लक्षणं बुधा: ॥
नभस्यश्वयुजे मासि भाराध्वानं जवं त्यजेत् ।
वर्षाम्बुसदृशं पित्तं श्रमात् कुप्यति वाजिनाम् ।
कार्य्येणैव महान् किञ्चिद् युज्यो नभसि कार्त्तिके ॥
हेमन्ते शिशिरे योगं वसन्ते च यथेच्छया ॥
श्लेष्मक्षयात् क्षयं गात्रं न ग्रीष्मे वाहयेद्धयम् ।
बालो वृद्ध: कृशो रोगी दन्तकर्षी महाबली ॥
पूर्णातिरिक्तकोष्ठश्च गुर्व्विणी न च वाहयेत् ।
समां च विपुलाञ्चैव किञ्चित्-पांशुसमन्विताम् ॥
एकान्ते विजने चैव रङ्गभूमिं हयं नयेत् ।
सान्द्राञ्चैव सुकठिनां पाषाणोदकवर्ज्जिताम् ॥
तृणकाष्ठसमायुक्तां रङ्गभूमिं विवर्ज्जयेत् ।
विश्रामं कारयेदश्वं क्रोशक्रोशद्वयान्तरे ॥
वारि दद्याद् यथाकामं घासं सुस्थिर चारयेत् ।
अन्यथा दोषजालानि वक्ष्याम्येतानि तावत: ॥
गुरुविस्तब्धगात्रश्च छिन्नश्वासी च कम्पते ।
दुर्म्मना रुद्धविण्मूत्र: सर्व्वकर्म्माक्षमो हय: ॥
गूढमेढ्रोऽनतग्रीवो रक्तनेत्रो गुरुक्रम: ।
क्षुत्पानातुरपुच्छास्यच्छायां प्राप्य विनिष्ठति ॥
तर्ज्जने हेष्यमानोऽपि विधुनोति शिर: परम् ।
मुहुर्विनमते पृष्ठं पदमेकं न गच्छति ॥
भाराध्वानपरिश्रान्तं शनै: संक्रामयेत् पथि ।
नावतारितपर्य्याणं मार्गेऽध्वानसमागतम् ॥
मुक्तपुच्छाग्रबन्धस्य खलीनं नावतारयेत् ।
मर्द्दयित्वास्य गात्राणि पांशुमध्ये विवर्त्तयेत् ॥
स्नानपानावगाहञ्च प्रतिपानं सभोजनम् ।
सर्व्वं क्रमेण कर्त्तव्यमन्यथा दोषसम्भव: ॥
रक्तपित्तसमीरोत्थमन्याक्लमोदरादय: ।
हृद्रोगा वातशूलानि शीतोष्णोदकपानत: ॥
रक्तपित्तहरं देयं प्रतिपानं गुडौदनम् ।
रक्तपित्तसमीरोत्थं दातव्यं शर्करोदकम् ॥
जीवनं वातपित्तघ्नं हृद्यं पथ्यतमं तत: ।
सर्व्वरोगहरोऽश्वानां मधु जाङ्गलको रस: ॥
स्वच्छात्मश्च घृतं क्षीरं वारियुक्तं तुरङ्गम: ।
पीत्वा हि निर्हरेद्दोषान् श्रमभाराध्वसंश्रयान् ॥
धर्म्मार्थकामा विजयो यश:श्री-
शोभासुखं जातिजनेषु पूज्या ।
दृष्टा निमित्तानि शुभावहानि
नृपस्य चैवं विनिवेदयन्ति ॥
प्रत्यूषकाले च दिशं निरीक्ष्य
वह्निं द्विजं पूर्णघटं कुमारीम् ।
छत्रं ध्वजं चामरदर्पणञ्च
रथञ्च दृष्ट्वा तुरगं जयाय ॥
श्रुत्वा तु शङ्खाम्बुदवेदवाक्यं
पुण्याहमाङ्गल्यशिवस्य गीतम् ।
हर्षं निमित्तं भवति स्वनेन
ध्रुवं जयं तत्र रणे नराणाम् ॥
सन्ध्याङ्घ्रिघातेन महीं निघ्नन्ति
हेषन्ति ये स्वामिमुखं निरीक्ष्य ।
प्रदक्षिणावर्त्तविकीर्णपुच्छा
जयावहास्ते समरे नृपाणाम् ॥
विच्छिन्नदीनस्वरगद्गदा ये
अश्रुप्लुता भिन्नपुरीषमूत्रा: ।
अनल्पमाना दिगवन्निरीक्ष्या:
पराजयं ते कथयन्ति युद्धे ॥
अन्यापरं याश्च वदन्ति दीना:
सव्येतरं वक्रविकीर्णपुच्छा: ।
युग्यासनादीन् परिवर्ज्जयन्ते
पराजयं ते कथयन्ति भर्त्तु: ॥
विना निमित्तं रसयन्त्यभीक्ष्णं
आकुञ्चिता व्यापितमस्तिकाङ्गा: ।

ध्यायन्ति यातैश्च न चोद्विजन्ते
भयावहास्ते समरे नृपाणाम् ॥
श्वेतं पीतं भवं लब्धामालक्ष्यं चैवमादिषु ।
सुकुलं तं विजानीयाद्दलं पर्य्याणधारणे ॥
स्थाण्वश्मकण्टकश्वभ्रैश्च सुधासदिरकाष्टकैः ।
स्वामिघाताय चादत्ते तेषां रूपमिदं ध्रुवम् ॥
वायसोलूकमार्जारतरक्षुगाञ्छलोचनाः ।
गतिर्वा वसुरैस्तुल्या शूलभेदशिरान्विताः ॥
लम्बौष्ठकर्णनासाश्च लतास्वहीनाधिकद्विजाः ।
विच्छिन्नप्रोथगण्डा ये भ्रुकुटीचिपिटेक्षणाः ॥
एते दोषास्तथान्येऽपि सुकुलाश्वसमुद्भवाः ।
खलानामिह राजेन्द्र ! वक्तुं शक्या न मादृशैः ॥
लक्ष्यं प्रधानमित्येके चान्ये लक्षणमाश्रिताः ।
लक्ष्यलक्षणमेतेषां तेनेदं दुष्करं विदुः ॥
अथापि रतिसंक्षेपादतिथापि च विस्तरात् ।
मुनीनामेकवाक्यत्वाद् भूयामः स्थितिदुष्कराः ॥
सत्त्ववर्णगतिच्छायास्वरस्थानगतिः कुलम् ।
पुष्पं पुष्करनामानि दोषं वा कवलक्षणम् ॥
एवं लक्षणसंयुक्तं दृश्यते भूरक्षयो ।
लक्षणेन विहीना ये निर्दोषाःस्युः प्रशंसिताः ॥
हयरोहस्य का चिन्ता लक्षणैः शुभनिन्दितैः ।
तेनात्र न कृतोऽस्माभिर्ह्यलक्षणविस्तरः ॥
हयवाहनविज्ञानं कौतुकाहितमुद्धयः ।
अनायासेन गच्छन्ति परं दृष्ट्वा इमे जनाः ॥
चलासनं कथा रागाः पाणिघातप्रतोदनम् ।
पदप्रमाणसंज्ञानि दोषो यैरुपजायते ॥
कामात् कोपाद्भयाल्लोभाद्दर्पाच्चैव मदाश्रयात् ।
पर्य्याणारोहदोषाश्च दुष्यन्त्यश्वा निसर्गतः ॥

श्रीयुक्तसामन्तनरेन्द्रवन्दितं
रणे हयारोहवराभिनन्दितम् ।
धर्म्मार्थकामादियशःप्रधान-
मित्थं कृतं वाहनशास्त्रविस्तरम् ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते वाहना-
ध्यायो नवमः ॥

### अथ धातुपरीक्षा ।

अथातः संप्रवक्ष्यामि धातूनां लक्षणं परम् ।
येन विज्ञानमात्रेण ज्ञायन्ते रोगसम्भवाः ॥
ततः शुद्धशरीरोऽथ रक्तदोषानवाप्नुयात् ।
रक्तदोषात्सदा वाजी प्राप्नोत्येव महामयान् ।
तस्मात् सर्व्वप्रयत्नेन रक्तं ज्ञेयं विचक्षणैः ।
आषाढसमये प्राप्ते शिरामोक्षेण तत्क्षणः ॥
तेन संशोध्यते रक्तं वाजिनां दोषसम्भवम् ।
ततः शुद्धशरीरोऽथ पिण्डाद्यैश्च बलीकृतः ॥
सावधौ शस्यमासाद्य वज्रवत् सुदृढो भवेत् ।
यदि रक्ताधिको वाजी शस्यमश्नाति कर्हिचित् ॥
रक्तात् सञ्जायते पित्तं ततो नाशमवाप्नुयात् ।
रक्ताधिकश्वासपुटः स्वेदाद्यैः शस्यमत्ति चेत् ॥
संप्राप्य शीघ्रमौरिचाद्यो नाशमवाप्नुयात् ।
क्षीणरक्तो यदा शस्यं कृशोऽश्नाति तुरङ्गमः ॥
तदा वायुं परं प्राप्य सद्यो नाशमवाप्नुयात् ।
तस्येदं लक्षणं प्रोक्तं रक्तकोपसमुद्भवम् ॥
धातूनामपि सर्व्वेषां श्रेयश्चिह्नं विचक्षणैः ।

घोटकः

पित्तरक्तप्रकोपेण यदा संपीड्यते हयः ॥
तदा कष्टतिमासाद्य क्वथते सततं वपुः ।
छायां वाञ्छति यत्नेन विशेषेण जलाश्रयम् ॥
मुहुर्वाञ्छति पानीयमाहारञ्च विशेषतः ।
एवं वातोत्थरक्तेन ज्ञात्वा सम्पीडितं ततः ॥
शिरामोक्षं विधायैवं दद्यात् सकाटुकं गुडम् ।
ततः शुद्धिमवाप्नोति नीरोगः संप्रपद्यते ॥
पित्तासृग्दूषितो वाजी यदि चाश्रूणि मुञ्चति ।
नेत्रान्ते पाण्डुरत्वञ्च सद्यो मृत्युमवाप्नुयात् ॥
नेत्रयोर्लक्षणं प्रोक्तं पित्तरक्तसमुद्भवम् ।
श्लेष्मरक्तप्रकोपेण यदा सम्पीड्यते हयः ॥
अधोवक्त्रो भवेन्नित्यं कासते च मुहुर्मुहुः ।
आहारं न च गृह्णाति नोत्साहं कुरुते क्वचित् ॥
न विन्दति कशाघातं न च पार्ष्णिं न चासनम् ।
नासाग्रेण क्षिपेत्तोयं वह्निघर्म्मञ्च वाञ्छति ॥
तस्यापि शोधयित्वासृग् दद्याच्छुण्ठ्या युतं गुडम् ।
सर्व्वं रक्तं ततः शुद्धा निःशेषं समवाप्नुयात् ॥
वाजिनः श्लेष्मरक्ताभ्यां दूषितस्य सदा भवेत् ।
नेत्रान्ते बिन्द्वाकारकण्डूस्तस्य तथोदरे ॥
तदा मृत्युमवाप्नोति षण्मासाभ्यन्तरे ध्रुवम् ॥

शुण्ठ्यान्विता गोक्षुरकं घनञ्च
श्यामावचाहिङ्गुयुता च यष्टिः ।
कफप्रशान्त्याय विनिर्मितोऽयं
पिण्डः प्रसिद्धश्च कफापहश्च ॥

नीयेदश्नाति शुण्ठ्याढ्यं सैन्धवं नस्यमार्गतः ।
वायुरक्तप्रकोपेण पीडितस्तु तुरङ्गमः ॥
कुक्षिद्वये हयस्तीव्रं मुहुः श्वासं प्रमुञ्चति ॥
नैकत्र मन्यते स्थातुं कूर्दते च निरर्गलम् ।
एवं वातोद्भवं ज्ञाप्यं रक्तान्देहे हयस्य च ॥
शोधयित्वाथ सन्दद्याच्छागघृतमनल्पकम् ।
ततः शुद्धिमवाप्नोति परां पुष्टिञ्च गच्छति ॥
उत्साहं कुरुते मार्गे सर्व्वदोषविवर्ज्जितः ।
वातरक्तप्रकोपेण लोचनान्ते हयस्य च ॥
यदा स्यातां सिते रक्ते काशः कण्डूस्तथानने ।
तदा तस्य भवेन्मृत्युर्यदि नाश्नाति चामिषम् ॥
अश्मकञ्च युगन्धरा माहिषेण निशागमे ।
सन्निपातेऽथ रक्तेन यदा सम्पीड्यते हयः ॥
यदा वेपथुमाप्नोति काशते च निरर्गलम् ।
निद्रालस्याग्निमन्दत्वं वक्तौ मलनिबन्धनम् ॥
कर्णयोः पातनञ्चैव वक्त्राल्लालाविमोक्षणम् ।
तत्रापि शोधयेदसृक् ततो लङ्घनमर्हति ॥
यावद्दोषस्य निर्णाशं स्तोकोदकलताशनः ।
क्वचिदुष्णं क्वचिच्छीतं क्वचिद्यवजसंयुतम् ॥
प्रदेयं युक्तितश्चैवाहि कार्य्यं न कुत्रचित् ।
सपथ्या चाम्लता चैव कटुका च वचा तथा ॥
शमयेत्तत्क्षणादेव त्रिधातुकुपितं ज्वरम् ।
शिरीषं श्रीफलञ्चैव वेतसञ्चैव वृद्धिभाक् ॥
मन्दाग्नित्वं सदोषाणां कुरुते भस्मसाद्द्रुतम् ।
मधुकं मधुजालञ्च माधुर्य्यं कुलिकान्वितम् ॥
शिरीषं चुक्रकं क्वाथं क्वाथयित्वा त्रिभागतः ।
यस्यैतत् सन्निपाताय वाजिनः संप्रदीयते ॥
तस्य तन्नाशमायाति तमः सूर्योदये यथा ।

घोटकः

यस्यस्यापि हि नेत्रान्ते स्यातां नीले च वाजिनः ॥
गन्धश्च सदृशः कोशया तदा स्याद्द्विमासिकः ।
नीले पीतेऽथ नेत्रान्ते स्यातां चेद्वाजिनः क्वचित् ।
स निर्व्वाणमवाप्नोति त्रिभिर्मासैरसंशयम् ॥
यस्य नेत्रान्तरे रेखा बहुवर्णा प्रजायते ।
विशेषात् स्वरभेदः स्यात्तस्यायुः पाञ्चमासिकम् ॥
जिह्वायां जायते बिन्दुरकस्माद् यस्य वाजिनः ।
लक्षणञ्च जीवते मासं स वाजी नात्र संशयः ॥
पीतो मासद्वयेनैव सप्तभिश्चैव प्रयच्छति ।
त्रिभिर्मासैस्तथारक्तश्चतुर्भिश्च विचित्रितः ॥
पञ्चभिर्नीलवर्णश्च षड्भिश्चासमाकृतिः ।
सप्तभिः पाटलाकारश्चम्पकाभस्तथाष्टभिः ॥
नवभिश्च हरिद्राभो दशभिर्जम्बुकोपमः ।
एकादशभिर्दूर्व्वाभो वत्सरेण हिमद्युतिः ॥
यस्य श्वासो भवेदुष्णः शरीरं पुलकाङ्कितम् ।
जिह्वा हिमकराकारा मासषट्कं स जीवति ॥
ग्रीवाग्रे पिटिका यस्य जायते च तथोदरे ।
मूत्रं करोति रक्ताढ्यं मासषट्कं न जीवति ॥
वर्णः श्वेतो यदा यस्य नेत्रयोश्च प्रजायते ।
दशमासान् समासाद्य पित्तार्त्तो न स जीवति ।
यस्य नीलप्रभे स्यातां नेत्रे वातार्द्दितस्य तु ।
मासत्रयञ्च कृच्छ्रेण यः सन्निः स न जीवति ॥
श्लेष्मयुक्तस्य वा रक्ते यदि स्यातां विलोचने ।
वक्त्रगन्धः सुरातुल्यो दश मासान् स जीवति ॥
यस्य नेत्रे हरिद्राभे स्यातां पित्तार्द्दितस्य च ।
तस्यायुः सप्तमासाख्यं मुनिभिः परिकीर्त्तितम् ॥
बहुवर्णे घने नेत्रे स्यातां धातुसमागमे ।
तस्य सप्तेर्भवेन्मृत्युः सप्तरात्रादसंशयम् ॥
यस्यैकं लोचनं नीलं द्वितीयं रक्तसन्निभम् ।
दृश्यते स च विज्ञेयः पिशाचो मासजीवकः ॥
यस्य पित्तप्रसक्तस्य काये नीरदवर्त्तिनि ।
हयस्य जीवितं तावद्दिनानि दश पञ्च च ॥
एवं रक्तविकाराणां ज्ञात्वा धातुं तुरङ्गमे ।
ततः प्रतिक्रिया कार्य्या उक्ता या कीर्त्तिता परा ॥
भयादपीतपानीयशीतविश्रीयुतस्य च ।
आर्त्तोऽपि ताडितोऽध्वर्षे तिर्य्यग्विद्धो यदापि वा ॥
अमाङ्गराश्च वक्षाद्वा गात्रे वा विषमस्थिते ।
क्षीणशोणितमांसस्य शिरावेधः प्रशस्यते ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते धातु-
परीक्षाध्यायो दशमः ॥

### अथ ऋतुचर्य्या ।

द्वासप्ततिसहस्राणि नाडीनां हि भवन्ति च ।
वाजिनामिह सर्व्वासां वायुरक्तं व्यवस्थितम् ॥
तासां निर्मोचनार्थाय द्वाराण्यष्टौ वदाम्यहम् ।
यैर्याति कुत्सितं रक्तं सर्व्वदेहसमुद्भवम् ॥
कण्ठे वक्षसि तालौ च नासयोश्च मुखे तथा ।
अक्ष्णयोरथ पादेषु पादयोरुभयोरपि ॥
कालं बलञ्च विज्ञाय वाजिनां भिषगुत्तमः ।
शिरामोक्षं प्रकुर्व्वीत स्थानेष्वेतेषु पण्डितः ॥
अन्ये सप्तदश प्राहुः शिराद्वाराणि वाजिनः ।
विकारयुक्तं यद्दृष्टं सुस्थमपि वर्जयेत् ॥
एवं शरदि यः सम्यक् पुष्टिं नयति वाजिनाम् ।

तस्य यद्वाञ्छितं किञ्चिद्दृथागार्थं तच्च सिध्यति ॥
ततो हेमन्तमासाद्य निवाते निवधेद्धयम् ।
मासोर्त्थं यवसन्दद्यात् पानीयञ्च यथेच्छया ॥
घृतं वा यदि वा तैलं पाने दद्याद्विचक्षणः ।
वाहयेच्च शनैर्नित्यं सर्व्वदोषप्रशान्तये ॥
ततः शिशिरमासाद्य दद्यात्तैलं हि वाजिनाम् ।
पलाष्टकप्रमाणेन यावद्दिनत्रिसप्तकम् ॥
यवोत्थं यवसन्दद्यादेकविंशद्दिनानि च ।
यवाभावेऽथ चणकान् दद्यादार्द्रतरान् सदा ॥
तदभावे मसूरांश्च शुष्कार्द्रांस्तैलसंयुतान् ।
यवसं चापि तद्देयं नीरोगो जायते हयः ॥
औषधानाञ्च सर्व्वेषां आर्य्याणां नस्यकर्म्मणाम् ।
तैलानाञ्च घृतानाञ्च यवस्य यवसं परम् ॥
पर्व्वतानां यथा मेरुराशुगानाञ्च वज्रकम् ।
तथा सर्व्वोपचाराणां सर्पिः श्रेष्ठतमा यवाः ॥
देवानां यथा विष्णुर्श्रेष्ठा वेदविदां वरः ।
नदीनाञ्च यथा गङ्गा तथा श्रेष्ठा यवा हये ॥
यथोदितः सहस्रांशुर्निःशेषं तिमिरं जयेत् ।
तथा शरीरजान् दोषान् यवाः सर्पिरन्ति च ॥
उपचारक्रियाः सर्व्वाः पञ्चर्त्तुजनिता हये ।
कृताः स्युर्यवभोज्येन समस्तास्तु कृता नरैः ॥
यस्य दत्ता यवा भोज्ये शिशिरे समुपस्थिते ।
अक्षतापि कृता सर्व्वा पञ्चर्त्तुजनिता हये ॥
कृताः स्युर्यवभोज्येन समस्तास्तु कृता नरैः ।
नीरोगास्तुरगाः सर्व्वे शालिहोत्रमतं यथा ॥
पञ्चर्त्तुजनिता याश्च क्रिया न्यस्ता तुरङ्गमे ।
अतीतास्ते विजानीयाद्यवभोज्यविवर्ज्जिताः ॥
एवं रक्तविमुक्तानां कृत्वा यत्नेन वाजिनाम् ।
दद्याद्गोमूत्रसंयुक्तां सतैलां च हरीतकीम् ॥
दिनं त्रिसप्तकं यावत् पलपञ्चप्रमाणतः ।
ततः शुद्धिमवाप्नोति निःशेषाद्धिरोद्गमात् ॥
ततो नवतृणाहारं संप्राप्य सुमनोहरम् ।
परां पुष्टिमवाप्नोति नीरोगश्च प्रजायते ॥
न शाखी वाहयेदश्वं प्रावृट्काले कथञ्चन ।
य इच्छेद्वाजिनस्तस्य वाहनं दशमासिकम् ॥
कूपोदकं सदा शस्तं पानाय जलदागमे ।
अभ्यङ्गः कटुतैलेन निर्वातस्थानबन्धनम् ॥
एकाहान्तरितं दद्याल्लवणञ्च विचक्षणः ।
पलद्वयप्रमाणेन मुखशापविशुद्धये ॥
मुखरोगमवाप्नोति नारम्भादविवर्ज्जितः ।
दृष्टाम्भोभिस्तु सिक्ताङ्गस्तेजसा त्यज्यते हयः ॥
अशुद्धोदकजान् शमान् प्राप्नोति शतशः परान् ।
नवोदकप्रधानेन बलहीनश्च जायते ।
तस्मात् सर्व्वप्रयत्नेन प्रावृट्काल उपस्थिते ।
अनेन विधिना शश्वो वाजिनः परिपोषयेत् ॥
ततः शरदमासाद्य बहुखण्डसमन्वितम् ।
शस्तं क्षारोदनं सप्तपलाष्टपरिसंख्यया ॥
दुग्धं वा केवलं रात्रौ क्वथितं संप्रशस्यते ।
तथान्यदपि यत्किञ्चिन्मधुरं संप्रजायते ॥
पानाय सारसं तोयं यवसं सुमनोहरम् ।
नीलवर्णमुकुन्दाञ्च घृतं प्राशेन संयुतम् ॥
वाहनं च प्रयत्नेन सुस्वल्पमपि वर्ज्जयेत् ॥

परीक्षणौ यथा वैद्यः रोगस्य च प्रतिक्रिया ।
हयजीवस्य तद्वच्च परीक्षा यवभक्षणी ॥
यथा सांयात्रिकः पारं गत्वोर्व्वेः स्वस्थतां व्रजेत् ।
तद्वत् यवाशनोत्तीर्णाः शुद्धदेहा हयोत्तमाः ॥
अल्पेनापि हि छिद्रेण यथा नश्यति नौर्जले ।
स्वल्पेनापि हि दोषेण यवदोषांस्तथैव च ॥
एवं ज्ञात्वा विदग्धेन यवा देयाः प्रयत्नतः ।
प्राप्तक्षीरा विशेषेण शिशिरे समुपस्थिते ॥
शुष्का वापि यवा देयाः सर्व्वकालं च वाजिनाम् ।
प्राणदास्ते ततो ज्ञेयाः सर्व्वव्याधिविनाशनाः ॥
यश्चाश्नाति यवानाशु शुष्कांश्च स्वेच्छया सदा ।
न तस्य जायते रोगः कदाचिच्च यवाशभाक् ॥
न च शूलं न च श्वासो न च प्लीहा न च क्षमः ।
न च रक्तप्रकोपश्च न च वातादिधातवः ॥
योग्योऽशनार्थं वाहानां प्रधानो यव इष्यते ।
यवाभावेऽथ चणका धान्यमन्यतमं परम् ॥
यवाभावेऽथवा दद्यान्मुकुष्ठांस्तैलसंयुतान् ।
भोजने तुरगेन्द्राणां परां पुष्टिमभीप्सताम् ॥
मुकुष्ठभोजनाद्वाजी पुष्टिं गच्छत्यलौकिकीम् ।
उत्साहं परमं धत्ते स च रोगैर्विमुच्यते ॥
अप्राप्तौ च मुकुष्ठानां मुद्गा देया मनीषिभिः ।
सतैलास्तेऽपि कुर्व्वन्ति पुष्टिं सत्त्वविवर्द्धिनीम् ॥
एते पुष्टिगुणाः प्रोक्ताश्चणकाहारजा हये ।
नान्यस्तस्मादभावेन सर्व्वेषां तान् विनिर्द्दिशेत् ॥
नाभ्यञ्जितं प्रशंसन्ति चणकं वाजिनां बुधाः ।
भक्षणार्थं यतस्तस्य दानोत्कृष्टमनुत्तमम् ॥
अमाम्लं प्रदातव्यं घृतं वा यदि वा पयः ।
शस्यं वा मांसमेवाथ पुष्ट्यर्थं वाजिनां सदा ॥
यस्याश्वः शस्यमश्नाति सदा लवणमिश्रितम् ।
किं तस्य शस्यदानेन यथाभूतेन भूपतेः ॥
शस्याभावेऽथ यवसं शुष्कं वा यस्य वाजिनः ।
दिवानिशमरण्ये च स्वेच्छया संविभुक्तिकाः ॥
ते चापि वाजिनो ज्ञेया यथा शस्यचरास्तथा ।
तथा सर्व्वप्रयत्नेन मृदुतान् चारयेद्वने ॥
आरोग्यार्थं सुपुष्ट्यर्थमुत्साहार्थं विशेषतः ।
वित्तव्ययस्य रक्षार्थं तुरङ्गाणां प्रयत्नतः ॥
वसन्तसमये प्राप्ते वाहयेत सततं हयम् ।
सनिम्बं लवणं दद्यात्ताभ्यां तैलं विशेषतः ॥
सर्व्वत्र सम्भवे भोज्यं तैलं वा यदि वा घृतम् ।
न दोषकारणं प्रोक्तं सक्षारं लवणम्लतः ॥
वसन्तसमये योऽश्वः स्थाने तिष्ठति बन्धने ।
तस्योत्साहः प्रणश्येत सालस्यं जायते वपुः ॥
ततो मन्दाग्निराविष्टो रोगाभावे प्रजायते ।
तस्मात् सर्व्वप्रयत्नेन वसन्ते वाहयेद्धयम् ॥
ग्रीष्मकाले च संप्राप्ते दूर्व्वाभोज्यं प्रशस्यते ।
वाजिनामिह सर्व्वेषां घर्म्मतापोपशान्तये ॥
घृतपानं विशेषेण सुच्छायासु निबन्धनम् ।
रक्तस्रावे च शालेयु यासं वा घृतसंयुतम् ॥
दूर्व्वाभावे प्रदातव्यं तुरगाय घृतान्वितम् ।
कणकाशस्यमध्याम्यं सर्व्वदोषोपशान्तये ॥
एवं स्वस्थमयं सम्यगुपचारं करोति यः ।
हयस्य तु गृहे नित्यं तस्य वर्द्धन्ति वाजिनः ॥

नीरोगाः पुष्टिसंयुक्ताः प्रकृष्टोत्साहसंयुताः ।
तर्पिता भूमिपैरश्वा भूमिमार्गक्रियाक्षमाः ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते ऋतु-पर्य्यायाध्याय एकादशः ॥

अथ नस्यः ।

कासश्वाससमो नस्यो वातपित्तकफोद्भवः ।
नस्यः संनाशयेत्तस्मात्तं नस्यं योजयेद्धये ॥
पिप्पली सैन्धवं सारं नागरञ्च गुडान्वितम् ।
कणिकासारमध्याग्र्यं वाजिनां श्लेष्मनाशनम् ॥
चूलिकालवणं नस्ये सदा रोगविनाशनम् ।
सिता चन्दनतोयानि सालुकाख्यानि वाजिनाम् ।
नस्यकर्म्माणि युक्तानि नाडीवातप्रशान्तये ।
ग्लदुकैरार्द्रकं सान्द्रं यवाक्षारविमिश्रितम् ॥
नस्ये दत्तं वातशान्त्यै हयरोगविनाशनम् ।
शर्करा माक्षिकं सैरं पटोलं पलसंयुतम् ॥
नस्ये शरदि सर्पीषां जायते रोगशान्तये ।
वचा चोशाणकं कुष्ठं शुण्ठी च कासमर्दिका ॥
युक्तं शीतोदके स्तोके तेषां नस्येऽपसर्पयेत् ।
गुडूची कौमुदी ताली मिश्रिता कूपवारिणा ॥
नस्ये दत्ता वराश्वानां शिशिरे सुखदा स्मृता ।
अपामार्गं महानस्यं सर्व्वरोगविनाशनम् ॥
केवलं कटुतैलं वा गोमूत्रे पाचितञ्च यत् ।
मैथुनादिक्षतस्थानां स्रोतोबलकरं विदुः ॥
कण्ठरोगे तथा नस्यं गोमूत्रलवणान्वितम् ।
सद्गुणकरं प्रोक्तं सर्व्वदोषनिवारणम् ॥
अपामार्गस्य मूलेन नस्यं मूत्रञ्च छागलम् ।
मुखरोगविनाशाय नस्यं मत्स्यवसोद्भवम् ॥
लशुनं पिप्पलीमूलं गण्डकी नागकेशरम् ।
दत्तं नस्येन रोगघ्नं कटुतैलेन वाजिनाम् ॥
नस्यं पर्य्युषितैस्तोयैः प्रातर्दत्तं तु केवलैः ।
अश्वानाञ्च नराणाञ्च चाक्षुष्यं बलवर्द्धनम् ॥
पिप्पलीमिश्रतोयेन ससितामलिलेन च ।
नस्यं यच्छति सर्पीणां सर्पिषा यच्छते बलम् ॥
नस्यं स्निग्धं तथा रूक्षं तिक्तञ्च मधुरं तथा ।
चतुर्द्धा वाजिशास्त्रज्ञैर्यथावत्परिकीर्त्तितम् ॥
देयं वाताधिके स्निग्धं रूक्षं तिक्तं कफाधिके ।
मधुरं चैव पित्ताढ्ये तुरङ्गे समयोचितम् ॥
द्विपञ्चाशत्प्रमाणं वा श्रेष्ठं तन्नस्यमुच्यते ।
पादोनं मध्यमं तत्र षड्विंशत्यां तथाधमम् ॥
नस्यान्ते वाजिनो रक्तं सदा पुष्टं प्रजायते ।
नस्यदानात् शूलं तस्य विनाशमुपगच्छति ॥
दाडिमं पुष्करं शीकं श्वेतदूर्व्वाङ्कुरास्तथा ।
शीतोदकेन संयुक्तं रक्तं दुष्टं न जायते ॥
धातकी गोक्षुरं रोध्रं कुसुम्भं सिन्धुवारकम् ।
शीतोदकेन संयुक्तं नस्यं रक्तविनाशनम् ॥
धातकी गण्डकी चैव गोमूत्रं लवणं तथा ।
नस्ये दत्तं कफं हन्ति तमः सूर्य्योदये यथा ॥
शुण्ठी घृतञ्च दुग्धञ्च रससारं तथैव च ।
वातदोषविनाशाय नस्यमेतत्प्रयोजयेत् ॥
माक्षिकं शर्करायुक्तं चन्दनं केशराणि च ।
नस्योऽयं वारिणा सद्यः पित्तनाशकरः परः ॥
गुडूची शुण्ठी मुस्ता च तगरं सितसर्षपाः ।

सन्निपाते सपित्तेऽयं नस्यः श्लेष्मविरेचकः ॥
अभया पुष्करी धात्री रूला लाक्षा शतावरी ।
सन्निपातेऽनिलाधिक्ये नस्योऽयं क्षेमकारकः ॥
मरिचं पिप्पलीमूलं वचा भारङ्गिकाभया ।
सन्निपाते कफाधिक्ये नस्यं सर्पिः सुखप्रदम् ॥”
इति श्रीनकुलकृतेऽश्वचिकित्सिते नस्याधिकाराध्यायो द्वादशः ॥

अथ पिण्डः ।

“कटुका च जयन्ती च भ्रामरी सुरसा घनाः ।
पञ्चाम्लसमः पिण्डो वाजिनामग्निदः स्मृतः ॥
एला शतघ्नी सुरसा काकजङ्घा शतावरी ।
माक्षिकं ससितं पिण्डः पित्तयुक्ते हि वाजिनि ॥
मालकं सैन्धवं मुस्ता गोमूत्रञ्च हरीतकी ।
समभागेन पिण्डोऽयमुक्तो वह्निप्रदीपकः ॥
कंकोलं केतकी द्राक्षा शर्करा मधुयष्टिका ।
दत्तो घृतयुतः पिण्डः पुष्टिं नयति वाजिनः ॥
मत्स्यमांसेन संयुक्तं माषचूर्णं घृतप्लुतम् ।
बलहीनस्य वाहस्य पिण्डोऽयं बलवर्द्धनः ॥
बला मद्यं दधि क्षौद्रं भक्षयंस्तुरगो भवेत् ।
अतिवृद्धोऽपि कृष्णोऽपि यथा षट्समवार्षिकः ॥
मेथिका धातकी काली सारणी बीजपूरकः ।
पिण्डो दत्तो वराश्वानां तेजोवृद्धिकरः स्मृतः ॥
कटुका मद्यसंमिश्रा धात्री लोध्रगुडान्विता ।
दत्ता पिण्डविधानेन वाजिनां सुखवर्द्धिनी ॥
त्रिफला कटुका मुस्ता विडङ्गानि च चित्रकम् ।
सदालस्यसमेतानां वाजिनां पिण्ड आमित्रुत् ॥
वचा विदलिताः स्निग्धाः सघृताः क्षारभाविताः ।
पिण्डैर्दत्ताः प्रकुर्व्वन्ति वाजिनां व्याधिनाशनम् ॥
सैन्धवं नागरं श्यामा गुडूची सितसर्षपाः ।
अम्लवेतससम्बाना पिण्डोऽयं शूलनाशनः ॥
पिप्पली पिप्पलीमूलं कटुका सहदेविका ।
दूर्व्वापल्लवसंमिश्रः पिण्डोऽयं शीघ्रनाशकः ॥
केशरं श्रीफलं तालं माक्षिकं गिरिकर्णिका ।
पिण्डोऽयं शयने शस्तो वाजिनां सुगतिप्रदः ॥
वचा लोध्रं सकर्पूरं गुञ्जा श्यामा गुडं मधु ।
समांशकेन पिण्डोऽयं करोति लघुतां हये ॥
मद्यं मरिचसंयुक्तं लशुनं नागकेशरम् ।
द्विगुणं मेषमांसञ्च पिण्डो दत्तो जयेच्छ्रमम् ॥
जम्बीरं नलिनीपत्रं त्वचा किञ्जल्कमेव च ।
आतपोत्थितवाहानां पिण्डोऽयं रक्तनाशनः ॥
तमालं पुष्करं लोध्रमपामार्गं सतिन्दुकम् ।
पयसा पिण्डमेतद्धि वातकोपप्रणाशनम् ॥
आरनालं प्रविष्टा च पथ्या नेपालिकाफलम् ।
पिण्डे दत्ते हये दधा निहन्त्याशु विषूचिकाम् ॥
मुस्तपूर्णं वचामिश्रं तथा सर्जरसान्वितम् ।
पिण्डे दत्ते निहन्त्याशु क्रमिवंशं व्रणोद्भवम् ॥
कुष्ठीचीरं सकर्पूरं कूपोदकविभावितम् ।
पिण्डोऽयं हन्ति मध्यस्थान् रोगान् सर्व्वान्
क्रमिव्रजान् ॥
सिता दुग्धं सकर्पूरमेलया पञ्चसंयुतम् ।
अचिरात्कार्मियुक्तानां पिण्डोऽयं वाजिनां स्मृतः ॥
चौष्यासव्रणसम्भानामारनालं परिप्लुतम् ।
सन्तिष्ठन्ति पिण्डेन वाजिनां सुखकारकम् ॥
दृष्टिवाताद्दितानाञ्च वाजिनां पुष्टिलक्षणः ।
पिण्डः कृतः सतैलेन लशुनेन मलेन च ॥
महाष्टतं सकर्पूरं शर्करा दुग्धमेव च ।
कफनाशकरः प्रोक्तः पिण्डोऽयं सुखदः स्मृतः ॥
रोचना च वटी धात्री तथा श्याहीजपूरकः ।
गुल्मं प्रशमयत्याशु वाजिनां हृदयोद्भवम् ॥
सहदेवी वचा कुष्ठं वरुणा चेन्द्रवारुणी ।
अतिश्वासं हरत्येते वाजिनां मधुना सह ॥
उडुम्बरफलं मांसं शौकरं माहिषं दधि ।
हयस्य चातिवृद्धस्य करोति परमं सुखम् ॥
बिभीतकं प्रियङ्गुञ्च सर्ज्जिका लवणं तथा ।
कासदोषोपशमनः पिण्डः सर्पिः सुखप्रदः ॥
तक्रं कर्पूरचूर्णञ्च शिवं सौवर्च्चलान्वितम् ।
पिण्डोऽयं वस्तिसंरोधे वाजिनः संप्रकीर्त्तितः ॥
सौवर्च्चलं हरिद्रा च पिप्पली चेन्द्रवारुणी ।
मूत्रकृच्छ्रे परीक्षन्ति पिण्डोऽयं तुरगस्य हि ॥
पिण्डीरसक्तवः क्षौद्रं भल्लातकफलं शुभम् ।
रक्तमूत्रे तु पिण्डोऽयं वाजिनां रक्तनाशनः ॥
अभया यष्टिका श्यामा देवदारु सगन्धकम् ।
पुरीषे रक्तसंमिश्रे सदा शंसति वाजिनः ॥
पटोलं धातकी मुस्ता यष्टिका गिरिकर्णिका ।
रक्ताधिकं कृतः पिण्डः करोति रुधिरक्षयम् ॥
हरिद्राद्वयसंयुक्तं गन्धकं कटुतैलकम् ।
पिण्डकं श्रुतियुक्तानां सदाश्वानां प्रशस्यते ॥
अतसीपत्रकं निम्बं न्यग्रोधकलिकान्वितम् ।
अतीसारे प्रशंसन्ति पिण्डोऽयं वाजिनः शुभः ॥
अर्शः क्रमिभिरत्यर्थं सदा वाजी प्रपीड्यते ।
तदा पिण्डः प्रदातव्यः स्थूलैरण्डदलैरलम् ॥
कर्पूरशर्करालोध्रं माक्षिकं त्रिफलान्वितम् ।
तुरङ्गिणाः प्रशंसन्ति पिण्डोऽयं वाजिनः शुभः ॥
पत्रकं सिन्धुवारञ्च भ्रामरं चक्रकिंशुकम् ।
मांसवृद्धौ प्रशंसन्ति पिण्डोऽयं वाजिनः शुभः ॥
सैन्धवं चूणिकाक्षारं विडङ्गानि मघूनि च ।
शल्यपीडाभिभूतस्य पिण्डोऽश्वस्य प्रशस्यते ॥”
इति श्रीनकुलकृतेऽश्वचिकित्सिते पिण्डाध्यायस्त्रयोदशः ॥

अथ घृतविधानम् ।

“शिलाजतु विशाला च पद्मकं नागकेशरम् ।
लाक्षा पद्मकन्दञ्च निम्बद्वयसमन्वितम् ॥
घृतं माक्षिकसंयुक्तं सप्तविंशतिकं विदुः ।
अष्टांशं तु समादाय सुरामांसघृतस्य च ॥
पलमात्राणि सर्व्वाणि पूर्व्वद्रव्याणि निःक्षिपेत् ।
तेषां दानेन तत्सर्पिर्जायते सर्व्ववाजिनाम् ॥
बलपुष्टिकरं नित्यं सर्व्ववातविनाशनम् ।
सर्व्वरोगप्रशमनं कायाग्नेश्च प्रदीपनम् ॥
ओजस्करं वयानाशं शीघ्रशोषप्रणाशनम् ।
धातकी केशरं कुष्ठं कुसुम्भं कुङ्कुमं नलम् ॥
दाडिमं तितलोध्रञ्च पलमात्राणि निःक्षिपेत् ।
घृतञ्च पाचयेत् पातादभिघातान्वितो हयः ॥
जायते सर्व्वसुखाङ्गो महाप्राणैश्च संशयः ।
आरनालं वचा कुष्ठं पिङ्गला त्रिकटुकं घृतम् ॥
एतैः पक्वं घृतं सम्यक् पित्तव्याधिविनाशनम् ।
हरिद्राद्वयसंयुक्तं गन्धकं तु मनःशिला ॥
क्वाथयेन्नवनीतेन त्रिगुणेन घृतेन च ।
अभ्यङ्गेनाथ पानेन सप्तरात्रेण वाजिनः ॥
कण्डूतिर्निःक्षयं याति तथोदरभवा व्रणः ।
माक्षिकं निम्बपत्राणि नक्तं गुग्गुल एव च ॥
भृङ्गराजो विशाला च पाठा चैव पुनर्नवा ।
विल्वमातुलुङ्गकं लोध्रं सैन्धवं तगरं तथा ॥”
एतैः पक्वा घृतं वाजी संप्राप्यार्त्तैर्विमुच्यते ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते घृताध्यायश्चतुर्दशः ॥

अथ क्वाथः ।

“पूर्व्वोक्तानि समभागानि क्वाथयेत् कूपवारिणा ।
ततोऽष्टांशं समादाय लोयस्य क्वथितस्य च ॥
एतत् सिद्धार्थकं नाम तुरगं सर्व्ववाजिनाम् ।
कायाग्निं वर्द्धयत्याशु नीरोगत्वं प्रयच्छति ॥
मुस्ता मधुकपत्राणि केशरं लवणं वचा ।
शलाका शाल्मली धात्री त्रपुषं फलिनी तथा ॥
क्वाथयित्वा जलं कौपं दत्तैस्तुष्टो विपच्यते ।
त्रिभागमेषमादाय ततो दद्याद्धयस्य च ॥
प्रकरोति सदा नाशं पित्तस्यागन्तुकस्य च ।
एकविंशदिनं यावत्कालिश्लीमतं यथा ॥
शुण्ठी हरीतकी पाठा ब्राह्मी मुस्ता शिफालिका ।
हरिद्राद्वयसंयुक्ता हरितालं मनःशिला ॥
सिद्धस्त्रिभागशेषोऽयं क्वाथो हन्यात्त्रिरात्रिकम् ।
सन्निपातमशेषेण पलिकः पलमात्रकः ॥
मधुकं केशरं पद्मं भल्लातकविभीतकम् ।
शङ्खपुष्पं वचा सारं समभागेन मिश्रितम् ॥
कासार्त्तस्य सखुहितः क्वाथोऽयं त्रिफलात्मकः ।
उत्साहवर्द्धकः सद्यस्तथा कायाग्निदीपकः ॥
कुमारी शाल्मली पाठा मञ्जिष्ठा चेन्द्रवारुणी ।
काकोली समभागेन क्वाथयेत् समभागतः ॥
पलद्वयप्रमाणेन ततः पीतेन वाजिना ।
मोचयेच्छूलजं दोषं मूत्रदोषं च तत्क्षणात् ॥
यवानी माक्षिकं कासं सौवर्च्चलयुताभया ।
क्वाथयेदष्टमांशेन तत्पानाज्जायते हयः ॥
प्रदीप्ताग्निस्तु तेजस्वी सर्व्वरोगाद्विमुच्यते ।
स शीघ्रमार्गगामी च स्निग्धो रोगविवर्ज्जितः ॥
सेफालिका वचानीलं वैणुका सिन्धुवारिका ।
एतैः क्वाथः कृतः सम्यक् क्रमिनाशकरः परः ॥
मातुलुङ्गस्य बीजानि चन्दनं सितसर्षपाः ।
उशीरं पुष्करं ब्राह्मी लज्जया च पुनर्नवा ॥
क्वाथोऽयं मुष्टिचूर्णेन धावितश्लेष्मनाशनः ।
प्रकरोति तुरङ्गाणां सर्व्वदैव सुखं तथा ॥”
इति श्रीनकुलकृतेऽश्वचिकित्सिते क्वाथाध्यायः पञ्चदशः ॥

अथ विषम् ।

“वारुणी माक्षिकी गौरी श्रीतालीबीजपूरकम् ।
क्रमिकीटविनाशाय क्वाथो नित्यं तथाक्षरः ॥
अश्वगन्धा घृतं क्षौद्रं विषदग्धस्य वाजिनः ।
विषनाशं करोत्येव सर्व्वगात्रेषु तत्क्षणात् ॥
सामान्येन प्रदिष्टोऽयमगदो विषनाशनः ।

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| दोधकम् | दोधकमिच्छति भत्रितयाद्गौ ऽ।।,ऽ।।,ऽ।।,ऽ,ऽ | देव ! सदोधकदम्बतलस्थ ! श्रीधर ! तावकनामपदं मे ।<br>कण्ठतलेऽस्तु विनिर्गमकाले स्वल्पमपि चयमेष्यति योगम् ॥ |
| मोटनकम् | स्यान्मोटनकं तजजाश्च लगौ ऽऽ।,।ऽ।,।ऽ।,।,ऽ | दृष्टिः खलु मल्लकलाकुशलश्चाणूरमहाभटमोटनकम् ।<br>यः केलिलवेन चकार स मे संसाररिपुं प्रतिमोटयतु ॥ |
| श्येनी<br>श्येनिका इति क्वचित् । | श्येन्युदीरिता रजौ रलौ गुरुः ऽ।ऽ,।ऽ।,ऽ।ऽ,।,ऽ | यस्य कीर्त्तिरिन्दुकुन्दचन्दन[illegible]लोकपावनी सदा ।<br>जाह्नवीव विश्ववन्द्यविभ्रमा तं भजामि भावगम्यमच्युतम् ॥ |
| श्रीः | बाणरसैः स्यात् भतनगगैः श्रीः ऽ।।,ऽऽ।,।।।,ऽ,ऽ | |
| वृत्ता | ननसगगुरुरचिता वृत्ता ।।।,।।।,।।ऽ,ऽ,ऽ | |
| भद्रिका | ननरलगुरुभिश्च भद्रिका ।।।,।।।,ऽ।ऽ,।,ऽ | |
| मौक्तिकमाला | मौक्तिकमाला यदि भतनात् गौ ऽ।।,ऽऽ।,।।।,ऽ,ऽ | |
| उपस्थितम् | उपस्थितमिदं ज्सौ ताद् गकारौ ।ऽ।,।।ऽ,ऽऽ।,ऽ,ऽ | |
| उपचित्रम् | उपचित्रमिदं सससाल्लगौ ।।ऽ,।।ऽ,।।ऽ,।,ऽ | |
| कुपुरुषजनिता | कुपुरुषजनिता ननौ रगौ गः ।।।,।।।,ऽ।ऽ,ऽ,ऽ | |
| अनवसिता | अनवसिता न्यौ भगौ गुरुरन्ते ।।।,।ऽऽ,ऽ।।,ऽ,ऽ | |
| विद्युन्माला | विद्युन्माला भवेत्तौ तगौ गः ऽऽ।,ऽऽ।,ऽऽ।,ऽ,ऽ | |
| सान्द्रपदम् | सान्द्रपदं स्याद्भतनगलैश्च ऽ।।,ऽऽ।,।।।,ऽ,। | |
| शिखण्डितम् | शिखण्डितमिदं ज्सौ तगौ गुरुश्चेत्<br>।ऽ।,।।ऽ,ऽऽ।,ऽ,ऽ | |
| द्वादशाक्षरा वृत्तिः । जगती । | | |
| चन्द्रवर्त्म | चन्द्रवर्त्म निगदन्ति रनभसैः ऽ।ऽ,।।।,ऽ।।,।।ऽ | चन्द्रवर्त्म पिहितं घनतिमिरै राजवर्त्म रहितं जनगमनैः ।<br>इष्टवर्त्म तदलङ्कुरु सरसे ! कुञ्जवर्त्मनि हरिस्तव कुतुकी ॥ |
| वंशस्थविलम्<br>वंशस्तनितमिति क्वापि । | वदन्ति वंशस्थविलं जतौ जरौ ।ऽ।,ऽऽ।,।ऽ।,ऽ।ऽ | विलासवंशस्थविलं मुखानिलैः<br>प्रपूर्य्य यः पञ्चमरागमुद्गिरन् ।<br>व्रजाङ्गनानामपि गानशालिनां<br>जहार मानं स हरिः पुनातु नः ॥ |
| इन्द्रवंशा<br>वंशस्थविलेन्द्रवंशाचरणोभयघटिता-श्चतुर्वर्गप्रस्तारीयाद्यन्तव्यतिरिक्ता-श्चतुर्दशप्रकारा उपजातयो भवन्ति। | स्यादिन्द्रवंशा ततजैरसंयुता ऽऽ।,ऽऽ।,।ऽ।,ऽ।ऽ | दैत्येन्द्रवंशाग्निरुदीर्णदीधितिः<br>पीताम्बरोऽसौ जगतीतमोहरः ।<br>यस्मिन् ममज्जुः शलभा इव स्वयं<br>ते कंसचाणूरमुखा मखद्विषः ॥ |
| जलोद्धतगतिः | जसौ जसयुतौ जलोद्धतगतिः ।ऽ।,।।ऽ,।ऽ।,।।ऽ | यदीयहलतो विलोक्य विपदं<br>कलिन्दतनया जलोद्धतगतिः ।<br>विलासविपिनं विवेश सहसा<br>करोतु कुशलं हली स जगताम् ॥ |
| भुजङ्गप्रयातम् | भुजङ्गप्रयातं चतुर्भिर्यकारैः ।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ | सदारात्मजज्ञातिभृत्यो विहाय<br>स्वमेतं ह्रदं जीवनं लिप्समानः ।<br>मया क्षोभितः कालियेत्थं कुरु त्वं<br>भुजङ्ग ! प्रयातं द्रुतं सागराय ॥ |
| तोटकम् | वद तोटकमब्धिसकारयुतम् ।।ऽ,।।ऽ,।।ऽ,।।ऽ | यमुनातटमच्युतकेलिकला-<br>लसदङ्घ्रिसरोरुहसङ्गरुचिम् ।<br>मुदितोऽट कलेरपनेतुमघं<br>यदि चेच्छसि जन्म निजं सफलम् ॥ |
| स्रग्विणी | कीर्त्तितैषा चतूरेफिका स्रग्विणी<br>ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | इन्द्रनीलोपलेनेव या निर्म्मिता<br>शातकुम्भद्रवालङ्कृता शोभते ।<br>नव्यमेघच्छविः पीतवासा हरे-<br>र्मूर्त्तिरास्तां ममैवोरसि स्रग्विणी ॥ |
| वैश्वदेवी | बाणाश्वैश्छिन्ना वैश्वदेवी ममौ यौ<br>ऽऽऽ,ऽऽऽ,।ऽऽ,।ऽऽ | अर्चामन्येषां त्वं विहायामराणा-<br>मद्वैतेनैकं कृष्णमभ्यर्च्य भक्त्या ।<br>तत्राशेषात्मन्यर्चिते भाविनी ते<br>भ्रातः ! सम्पन्नाराधना वैश्वदेवी ॥ |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
| --- | --- | --- |
| प्रमिताक्षरा | प्रमिताक्षरा सजससैः कथिता ।।ऽ,।ऽ।,।।ऽ,।।ऽ | अमृतस्य शीकरमिवोद्गिरती<br>रदमौक्तिकांशुलहरीच्छुरिता ।<br>प्रमिताक्षरा मुररिपोर्भणिति-<br>र्व्रजसुभ्रुवामभिजहार मनः ॥ |
| द्रुतविलम्बितम् | द्रुतविलम्बितमाह नभौ भरौ ।।।,ऽ।।,ऽ।।,ऽ।ऽ | तरणिजापुलिने नववल्लवी-<br>परिषदा सह केलिकुतूहलात् ।<br>द्रुतविलम्बितचारुविहारिणं<br>हरिमहं हृदयेन सदा वहे ॥ |
| मन्दाकिनी | ननररघटिता तु मन्दाकिनी ।।।,।।।,ऽ।ऽ,ऽ।ऽ | बलिदमनविधौ बभौ सङ्गता<br>पदजलरुहि यस्य मन्दाकिनी ।<br>सुरनिहितसिताम्बुजस्रङ्निभा<br>हरतु जगदघं स पीताम्बरः ॥ |
| कुसुमविचित्रा | नयसहितौ न्यौ कुसुमविचित्रा ।।। ।ऽऽ,।।।,।ऽऽ | विपिनविहारे कुसुमविचित्रा<br>कुतुकितगोपीमहितचरित्रा ।<br>मुररिपुमूर्त्तिर्मुखरितवंशा<br>चिरमवताद्वस्तरलवतंसा ॥ |
| तामरसम् | इह वद तामरसं नजजा यः ।।।,।ऽ।,।ऽ।,।ऽऽ | स्फुटसुषमामकरन्दमनोज्ञं<br>व्रजललनानयनालिनिपीतम् ।<br>तव मुखतामरसं मुरशत्रो !<br>हृदयतडागविकासि ममास्तु ॥ |
| मालती<br>यमुनेति क्वापि । | भवति नजावथ मालती जरौ ।।।,।ऽ।,।ऽ।,ऽ।ऽ | इह कलयाच्युतकेलिकानने<br>मधुरससौरभसारलोलुपः ।<br>कुसुमकृतस्मितचारुविभ्रमा<br>मलिरपि चुम्बति मालतीं मुहुः ॥ |
| मणिमाला<br>अस्याः षड्वर्णैर्यतिः । | त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः<br>ऽऽ।,।ऽऽ,ऽऽ।,।ऽऽ | प्रह्वामरमौलौ रत्नोपलकॢप्ते<br>जातप्रतिबिम्बा शोणा मणिमाला ।<br>गोविन्दपदाब्जे राजी नखराणा-<br>मास्तां मम चित्ते ध्वान्तं शमयन्ती ॥ |
| जलधरमाला<br>अस्याश्चतुर्भिरष्टाभिश्च यतिः । | मो भः स्मौ चेज्जलधरमालाब्ध्यष्टैः<br>ऽऽऽ,ऽ।।,।।ऽ,ऽऽऽ | या भक्तानां कलिदुरितोत्तप्तानां<br>तापोच्छेदे जलधरमाला नव्या ।<br>भव्याकारा दिनकरपुत्रीकूले<br>केलीलोला हरितनुरव्यात् सा वः ॥ |
| पुटः | वसुयुगविरतिर्नौ म्यौ पुटोऽयम् ।।।,।।।,ऽऽऽ,।ऽऽ | |
| प्रमुदितवदना<br>प्रभेति मल्लिनाथः । गौरीति कौमुदीकारः । | प्रमुदितवदना भवेन्नौ च रौ ।।।,।।।,ऽ।ऽ,ऽ।ऽ | |
| प्रियंवदा | भुवि भवेन्नभजरैः प्रियंवदा ।।।,ऽ।।,।ऽ।,ऽ।ऽ | |
| ललिता | धीरैरभाणि ललिता तभौ जरौ ऽऽ।,ऽ।।,।ऽ।,ऽ।ऽ | |
| उज्ज्वला | ननभरसहिता गदितोज्ज्वला ।।।,।।।,ऽ।।,ऽ।ऽ | |
| नवमालिका | इह नवमालिका नजभयैः स्यात् ।।।,।ऽ।,ऽ।।,।ऽऽ | |
| ललना | पञ्चमुनि भमौ सस् संयुता ललना<br>ऽ।।,ऽऽऽ,।।ऽ,।।ऽ | |
| ललितम् | ललितमभिहितं नौ म्रौ नामतः ।।।,।।।,ऽऽऽ,ऽ।ऽ | |
| द्रुतपदम् | द्रुतपदं भवति नभनयाश्चेत् ।।।,ऽ।।,।।।,।ऽऽ | |
| विद्याधारः | सर्व्वे मा यस्मिन् सोऽयं विद्याधारः स्यात्<br>ऽऽऽ,ऽऽऽ,ऽऽऽ,ऽऽऽ | |
| पञ्चचामरम् | लघुर्गुरुर्वदन्ति पञ्चचामरम् ।ऽ।ऽ।ऽ।ऽ।ऽ | |
| सारङ्गम् | सारङ्गकं तं समस्तैस्तकारैस्तु ऽऽ।,ऽऽ।,ऽऽ।,ऽऽ। | |
| मौक्तिकदाम | समस्तजमीरय मौक्तिकदाम ।ऽ।,।ऽ।,।ऽ।,।ऽ।, | |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| मोटकम् | मोटकनाम समस्तभमीरय ऽ।।,ऽ।।,ऽ।।,ऽ।। | * |
| तरलनयनम् | वरिसु तरलनयनमिह ।।।।।।।।।।।। | |
| त्रयोदशाक्षरा वृत्तिः । अतिजगती । | | |
| प्रहर्षिणी<br>त्रिभिर्दशभिश्च यतिः । | आशाभिर्मनजरगाः प्रहर्षिणीयम्<br>ऽऽऽ,।।।,।ऽ।,ऽ।ऽ,ऽ | गोपीनामधरसुधारसस्य पानै-<br>रुत्तुङ्गस्तनकलसोपगूहनैश्च ।<br>आश्चर्यैरपि रतिविभ्रमैर्मुरारेः<br>संसारे मतिरभवत् प्रहर्षिणीह ॥ |
| रुचिरा<br>चतुर्भिर्नवभिश्च यतिः । | जभौ सजौ गिति रुचिरा चतुर्ग्रहैः<br>।ऽ।,ऽ।।,।।ऽ,।ऽ।,ऽ | पुनातु वो हरिरतिरासविभ्रमी<br>परिभ्रमन् व्रजरुचिराङ्गनान्तरे ।<br>समीरणोच्छलितलतान्तरालगो<br>यथा मरुत्तरलतमालभूरुहः ॥ |
| मत्तमयूरः<br>चतुर्भिर्नवभिश्च यतिः । | वेदरन्ध्रैर्म्तौ यसगा मत्तमयूरः<br>ऽऽऽ,ऽऽ।,।ऽऽ,।।ऽ,ऽ | लीलानृत्यन्मत्तमयूरध्वनिकान्तं<br>नृत्यद्गोपीमोदिपयोदानिलरम्यम् ।<br>कामक्रीडालम्पटमना गोपवधूभिः<br>कंसध्वंसी निर्जनवृन्दावनमाप ॥ |
| चण्डी | नयुगलसयुगलगैरिति चण्डी ।।।,।।।,।।ऽ,।।ऽ,ऽ | जयति दितिजरिपुताण्डवलीला-<br>कुपितकवलकरकालियमौली ।<br>चरणकमलयुगचापलचण्डी<br>पदनखरुचिजितभोगमणिश्रीः ॥ |
| मञ्जुभाषिणी<br>सुनन्दिनीति शम्भौ | सजसा जगौ च यदि मञ्जुभाषिणी<br>।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | अन्तोर्मिशीतलकरेण लालयं-<br>स्तनुकान्तिचोरितविलोचनो हरे ! ।<br>नियतं कलानिधिरसीति वल्लवी<br>मुदमच्युते व्यधित मञ्जुभाषिणी ॥ |
| चन्द्रिका<br>उत्पलिनीति क्वापि । विद्युदिति चामेति च क्वापि । सप्तभिः षड्भिश्च यतिः । | ननततगुरुभिश्चन्द्रिकाऽश्वर्तुभिः ।।।,।।।,ऽऽ।,ऽऽ।,ऽ | शरदमलरुचचन्द्रिकाचालिते<br>दिनकरतनयातीरदेशे हरिः ।<br>विहरति रभसाद्वल्लवीभिः समं<br>त्रिदिवयुवतिभिः कोऽपि देवो यथा ॥ |
| कलहंसः<br>सिंहनादः क्वापि । | सजसाः सगौ च कथितः कलहंसः<br>।।ऽ,।ऽ।,।।ऽ,।।ऽ,ऽ | यमुनाविहारकुतुके कलहंसो<br>व्रजकामिनीकमलिनीकृतकेलिः ।<br>जनचित्तहारिकलकण्ठनिनादः<br>प्रमदं तनोतु तव नन्दतनूजः ॥ |
| प्रबोधिता | सजसा जगौ च भवति प्रबोधिता ।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | शयिता त्वया चटुलमानिद्रया<br>रतिकेलिकुञ्जनिलये विलासिनी ।<br>सुरवैरिणा वदनचुम्बनादिना<br>स्मितमाततान सपदि प्रबोधिता ॥ |
| मृगेन्द्रमुखम् | भवति मृगेन्द्रमुखं नजौ जरौ गः ।।।,।ऽ।,।ऽ।,ऽ।ऽ,ऽ | गुरुभुजवीर्यभरं हरिं मदान्धा<br>युधि समुपेत्य न दानवा जिजीवुः ।<br>क्षुधितमृगेन्द्रमुखं मृगा उपेत्य<br>क नु खलु बिभ्रति जीवनस्य योगम् ॥ |
| चञ्चरीकावली | यमौ रौ विख्याता चञ्चरीकावली गः<br>।ऽऽ,ऽऽऽ,ऽ।ऽ,ऽ।ऽ,ऽ | |
| चन्द्ररेखा | मसरयुगगैश्चन्द्ररेखर्त्तुलोकैः ।।।,।।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ | |
| कन्दुकम् | इदं कन्दुकं यत्र येश्चतुर्भ्यो गः ।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,ऽ | |
| मृगेन्द्रमुखम् | भवति मृगेन्द्रमुखं नजौ जरौ गः ।।।,।ऽ।,।ऽ।,ऽ।ऽ,ऽ | |
| उपस्थितम् | उपस्थितमिदं जसौ तसौ यदि गुरुः स्यात्<br>।ऽ।,।।ऽ,ऽऽ।,।।ऽ,ऽ | |
| मञ्जुहासिनी | जतौ सजौ गो भवति मञ्जुहासिनी<br>।ऽ।,ऽऽ।,।।ऽ,।ऽ।,ऽ | |
| नन्दिनी | इह नन्दिनी सजससैर्गुरुयुतैः ।।ऽ,।ऽ।,।।ऽ,।।ऽ,ऽ | |

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणानि। | छन्दसामुदाहरणानि। |
|---|---|---|
| कुटजगतिः | कुटजगतिर्नजौ समतुं भतौ गुरुः<br>।।।,।ऽ।,ऽऽऽ,ऽऽ।,ऽ | |
| प्रभावती। | यस्यां प्रिये! प्रथमकमक्षरद्वयं<br>तुर्यं तथा गुरु नवमं दशान्तिमम्।<br>सान्त्यं भवेद्‌यतिरपि चेद्‌युगग्रहैः<br>सा लक्ष्यतामन्तवते! प्रभावती॥ | |
| चतुर्दशाक्षरा वृत्तिः। शक्वरी।<br>असम्बाधा<br>पञ्चभिर्नवभिश्च यतिः। | मो गो गो नौ मः शरनवभिरसम्बाधा<br>ऽऽऽ,ऽ,ऽ,।।।,।।।,ऽऽऽ | वीर्याग्नौ येन ज्वलति रणरसात् क्षिप्ते<br>दैत्येन्द्रे जाता धरणिरियमसम्बाधा।<br>धर्मस्थित्यर्थं प्रकटिततनुसम्बन्धः<br>साधूनां बाधां प्रशमयतु स कंसारिः॥ |
| वसन्ततिलकम्<br>अष्टाभिः षड्भिश्च यतिः। सिंहोन्नता चापि। सिंहोन्नता इति मुनिकाश्यपः। उद्धर्षिणी इति मुनिसैतवः॥ | ज्ञेयं वसन्ततिलकं तभजा जगौ गः<br>ऽऽ।,ऽ।।,।ऽ।,।ऽ।,ऽ,ऽ | फुल्लं वसन्ततिलकं तिलकं वनाल्या<br>लीलापरं पिककुलं कलमत्र रौति।<br>वात्येष पुष्पसुरभिर्मलयाद्रिवातो<br>यातो हरिः स मथुरां विधिना हताः स्मः॥ |
| अपराजिता<br>सप्तभिर्यतिः। | ननरसलघुगैः स्वरैरपराजिता ।।।,।।।,ऽ।ऽ,।।ऽ,।,ऽ | यदनवधिभुजप्रतापहतासदा<br>यदुनिचयचमूः परैरपराजिता।<br>व्यजयत समरे समस्तरिपुव्रजं<br>स जयति जगतां गतिर्गरुडध्वजः॥ |
| प्रहरणकलिका<br>सप्तभिर्वर्णैर्यतिः। | ननभनलगिति प्रहरणकलिका ।।।,।।।,ऽ।।,।।।,।,ऽ | व्यथयति कुसुमप्रहरण! कलिका<br>प्रमदवनभवा तव धनुषि तता।<br>विरहविपदि मे शरणमिह ततो<br>मधुमथनगुणस्मरणमविरतम्॥ |
| वासन्ती | मात्तो नो मो गौ यदि गदिता वासन्तीयम्<br>ऽऽऽ,ऽऽ।,।।।,ऽऽऽ,ऽ,ऽ | भ्राम्यद्भृङ्गीनिर्भरमधुरालापोद्गीतैः<br>श्रीखण्डाद्रेरञ्चितपवनैर्मन्दान्दोला।<br>लीलालोला पल्लवविलसद्धस्तोल्लासैः<br>कंसारातौ नृत्यति सदृशी वासन्तीयम्॥ |
| लोला<br>अस्याः सप्तभिर्यतिः। | द्विःसप्तच्छिदि लोला म्सौ म्भौ गौ चरणे चेत्<br>ऽऽऽ,।।ऽ,ऽऽऽ,ऽ।।,ऽ,ऽ | मुग्धे यौवनलक्ष्मीर्विद्युद्विभ्रमलोला<br>त्रैलोक्याद्भुतरूपो गोविन्दोऽतिदुरापः।<br>तद्वृन्दावनकुञ्जे गुञ्जद्भृङ्गसनाथे<br>श्रीनाथेन समेता स्वच्छन्दं कुरु केलिम्॥ |
| नान्दीमुखी<br>अस्याः सप्तभिर्यतिः। | स्वरभिदि यदि नौ तौ च नान्दीमुखी गौ<br>।।।,।।।,ऽऽ।,ऽऽ।,ऽ,ऽ, | सरसखगकुलालापनान्दीमुखीयं<br>स्मरहरिभुजलता चारुपीनस्तनश्रीः।<br>सुरहरकलयासक्तिमासाद्य किन्ते<br>प्रमुदितहृदया भामुना नृत्यतीह॥ |
| इन्दुवदना | इन्दुवदना भजसनैः सगुरुयुग्मैः ऽ।।,।ऽ।,।।ऽ,।।।,ऽ,ऽ | |
| नदी<br>सप्तभिर्यतिः। | ननतजगुरुगैः सप्तयतिर्नदी स्यात्<br>।।।,।।।,ऽऽ।,।ऽ।,ऽ,ऽ | |
| लक्ष्मीः | लक्ष्मीरन्तविरामा म्सौ तभौ गुरुयुग्मम्<br>ऽऽऽ,।।ऽ,ऽऽ।,ऽ।।,ऽ,ऽ | |
| सुपवित्रम् | चिननगगिति वसुयति सुपवित्रम्<br>।।।,।।।,।।।,।।।,ऽ,ऽ | |
| मध्यक्षामा | मध्यक्षामा युगदशविरमा म्भौ न्यौ गौ<br>ऽऽऽ,ऽ।।,।।।,।ऽऽ,ऽ,ऽ | |
| कुटिलम् | युगदिग्भिः कुटिलमिति सभौ न्यौ गौ चेत्<br>।।ऽ,ऽ।।,।।।,।ऽऽ,ऽ,ऽ | |
| प्रमदा | नजभजला गुरुश्च भवति प्रमदा<br>।।।,।ऽ।,ऽ।।,।ऽ।,।,ऽ | |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| मञ्जरी<br>पञ्चमे नवमे च यतिः। | सजसा यलौ गिति प्रदृष्टैर्मञ्जरी<br>।।ऽ,।ऽ।,।।ऽ,।ऽऽ,।,ऽ | |
| कुमारी<br>अष्टमे नवमे च यतिः। | नजभजैर्गुरुश्च वसुषट् कुमारी<br>।।।,।ऽ।,ऽ।।,।ऽ।,ऽ,ऽ | |
| सुकेशरम् | नरनरैर्लगौ च रचितं सुकेशरम्<br>।।।,ऽ।ऽ,।।।,ऽ।ऽ,।,ऽ | |
| चन्द्रौरसः | म्भौ न्यौ लगौ चेदिह भवति च चन्द्रौरसः<br>ऽऽऽ,ऽ।।,।।।,।ऽऽ,।,ऽ | |
| चक्रपदम् | चक्रपदमिह भनवनलगुरुभिः<br>ऽ।।,।।।,।।।,।।।,।,ऽ | |
| वासन्ती | वासन्तीयं स्यादिह खलु मतौ न्यौ गौ चेत्<br>ऽऽऽ,ऽऽ।,।।।,।ऽऽ,ऽ,ऽ | |
| पञ्चदशाक्षरा वृत्तिः। अतिशर्करी। | | |
| शशिकला | गुरुनिधनमनुलघुरिह शशिकला<br>।।।।।।।।।।।।।।,ऽ | मलयजतिलकसमुदितशशिकला<br>व्रजयुवतिलसदलिकगगनगता ।<br>सरसिजनयनहृदयसलिलनिधिं<br>व्यतनुत विततरभसपरिसरणम् ॥ |
| स्रक्<br>अस्याः षड्भिर्नवभिश्च यतिः। | स्रगियमपि च रसनव-रचितयतिः<br>।।।।।।,।।।,।।।।।,ऽ | अयि सहचरि ! रुचिरतरगुणमयी<br>मुरदमनशिरसि नपगतपरिमला ।<br>मणिव निवस विलसदनुपमरसा<br>सुमुखि ! मुदितदनुजदलनहृदये ॥ |
| मणिगुणनिकरः<br>अष्टभिः सप्तभिश्च यतिः। | वसुमुनियतिरिति मणिगुणनिकरः<br>।।।।।।,।,।।।।।।,ऽ | नरकरिपुरवतु निखिलसुरगति-<br>रमितमहिमभरसहजनिवसतिः ।<br>अनवधिमणिगुणनिकरपरिचितः<br>सरिदधिपतिरिव धृततनुविभवः ॥ |
| मालिनी<br>अष्टभिः सप्तभिश्च यतिः। | ननमयययुतेयं मालिनी भोगिलोकैः<br>।।।,।।।,ऽऽऽ,।ऽऽ,।ऽऽ | व्रजमदनलतश्रीः पीतकौषेयवासा<br>रुचिरशिखिशिखण्डाबद्धधम्मिल्लपाशा ।<br>अमृतनिहितमंशे वंशमुत्क्वाणयन्ती<br>धृतमधुरिपुलीला मालिनी पातु राधा ॥ |
| लीलाखेलः | एकन्यूनौ विद्युन्मालापादौ चेल्लीलाखेलः<br>ऽऽऽ,ऽऽऽ,ऽ,ऽ,ऽऽऽ,ऽऽऽ,ऽ | पायाद्वो गोविन्दः कालिन्दीकूलच्छायाचक्रे<br>रासोल्लासक्रीडद्गोपीभिः सार्द्धं लीलाखेलः ।<br>मन्दाकिन्यास्तीरोपान्ते स्वैरक्रीडाभिर्लोलो<br>यद्वद्देवानामीशः सर्व्वस्त्राभिः खेलन्तीभिः ॥ |
| विपिनतिलकम् | विपिनतिलकं नसनरेफयुग्मैर्भवेत्<br>।।।,।।ऽ,।।।,ऽ।ऽ,ऽ।ऽ | विपिनतिलकं विकसितं वसन्तागमे<br>मधुरसमदैर्मधुकरै रणन्निर्वृतम् ।<br>मलयमरुता रचितलास्यमालोकयन्<br>व्रजयुवतिभिर्विहरति स्म मुग्धो हरिः ॥ |
| तूणकम् | तूणकं समानिकापदद्वयं विनान्तिमम्<br>ऽ,।,ऽ।ऽ,।ऽ।,ऽ,।,ऽ।ऽ,।ऽ | सा सुवर्णकेतकं विकास्य भृङ्गपूरितं<br>पञ्चबाणबाणजालपूर्णहेमतूणकम् ।<br>राधिका विलक्ष्य माधवाद्य माधि माधवे<br>मोहमेति निर्भरं त्वया विना कलानिधे ! ॥ |
| चन्द्रलेखा<br>सप्तमे अष्टमे च यतिः। | म्रौ मो यौ चेन्नवेतो सप्ताष्टकैश्चन्द्रलेखा<br>ऽऽऽ,ऽ।ऽ,ऽऽऽ,।ऽऽ,।ऽऽ, | चिन्ताद्वैते मुरारे ! पाण्डुप्रकाशा कृशाङ्गी<br>स्वामच्छायं दुकूलं न जानते बिभ्रती सा ।<br>राधाम्भोदस्य गर्भे लीना यथा चन्द्रलेखा<br>किञ्चान्तं त्वां स्मरन्ती धत्ते ध्रुवं जीवयोगम् ॥ |
| चित्रा | चित्रा नामच्छन्दश्चिन्तयेत् त्रयो मा यकारौ<br>ऽऽऽ,ऽऽऽ,ऽऽऽ,।ऽऽ,।ऽऽ | गोपाली लीलालोला यद्वत् कालिन्द्यास्तटान्ते<br>खेलन्मुक्ताहारा वल्गल्लसन्मूर्द्धचित्रा ।<br>कंसारातेर्मूर्तिस्तद्वन्मे हृदि क्रीडतीयं<br>कोऽन्यः स्वर्गो मोक्षो वाऽस्माद्विद्यते तन्न जाने ॥ |

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणगणाः। | छन्दसामुदाहरणानि। |
|---|---|---|
| प्रमदकम् | भवति नजौ भजौ रसहितौ प्रमदकम्<br>।।।,।ऽ। ऽ।।,।ऽ।,ऽ।ऽ | |
| एला<br>पञ्चभिर्दशभिश्च यतिः। | सजना नयौ शरदशयतिरियमेला<br>।।ऽ,।ऽ।,।।।,।।।,।ऽऽ | |
| कामक्रीडा | माः पञ्च स्युर्यस्यां सा कामक्रीडासंज्ञा ज्ञेया<br>ऽऽऽ,ऽऽऽ,ऽऽऽ,ऽऽऽ,ऽऽऽ | |
| सुकेलकम् | नजभजरैर्विराजितमिदं सुकेलकम्<br>।।।, ।ऽ।,ऽ।।,।ऽ।,ऽ।ऽ | |
| चन्द्रकान्ता<br>सप्तभिरष्टाभिश्च यतिः। | चन्द्रकान्ताभिधा रौ मृसौ यो विरमः स्वराष्टौ<br>ऽ।ऽ,ऽ।ऽ,ऽऽऽ,।।ऽ,।ऽऽ | |
| उपमालिनी<br>अष्टाभिः सप्तभिश्च यतिः। | ननतभरलगाढ्यस्वरैरुपमालिनी<br>।।।,।।।,ऽऽ।,ऽ।।,ऽ।ऽ | |
| ऋषभः | ऋषभाख्यमेतदुदितं सजसा सयौ चेत्<br>।।ऽ,।ऽ। ।।ऽ,।।ऽ,।ऽऽ | |
| मानसहंसः | कथयन्ति मानसहंसनाम सजौ जभराः<br>।।ऽ,।ऽ।,।ऽ। ऽ।।,ऽ।ऽ | |
| नलिनी | सगणैः शिवयक्रमितैर्गदिता नलिनी<br>।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ, | |
| भिन्दिपालकम् | पंच भिन्दिपालकमिदं भजसनाश्च रः<br>ऽ।।,।ऽ।,।।ऽ,।।।,ऽ।ऽ | |
| षोडशाक्षरा वृत्तिः। अष्टिः। | | |
| चित्रम् | चित्रसंज्ञमीरितं समानिका पदद्वयम्<br>ऽ,।,ऽ।ऽ,।ऽ।,ऽ,।,ऽ।ऽ,।ऽ। | विद्रुमारुणाधरोष्ठशोभिवेणुवाद्यहृष्ट-<br>बल्लवीजनाङ्गसङ्गजातमुग्धकण्टकाङ्ग ! ।<br>त्वां सदैव वासुदेव ! पुण्यलभ्यपादसेव !<br>वन्यपुष्पचित्रकेश ! संस्मरामि गोपवेश ! ॥ |
| ऋषभगजविलसितम्<br>गजतुरगविलसितमिति ग्रन्थौ।<br>सप्तभिर्नवभिश्च यतिः। | भ्रजिनगैः स्वराङ्कऋषभगजविलसितम्<br>ऽ।।,ऽ।ऽ,।।।,।।।,।।।,ऽ | यो हरिरुच्चखान खरतरनखरशरै-<br>र्दुर्जयदैत्यसिंहसुविकटहृदयतटम् ।<br>किन्त्विह चित्रमेव यदखिलमपकृतवान्<br>कंसनिदेशतोऽप्यृषभगजविलसितम् ॥ |
| चकिता<br>अस्या अष्टमे यतिः। | भात् समतनगैरष्टच्छेदे स्यादिह चकिता<br>ऽ।।,।।ऽ,ऽऽऽ,ऽऽ।,।।।,ऽ | दुर्जयदनुजश्रेणीदुःखेनाश्रुतचकिता<br>यद्भुजपरिघत्राता याता साध्वसविगमम् ।<br>दीव्यति दिवि यत्नात्ता स्वच्छं नन्दनविपिने<br>गच्छत शरणं कृष्णं तं भीता भवरिपुतः ॥ |
| पञ्चचामरम् | प्रमाणिका पदद्वयं वदन्ति पञ्चचामरम्<br>।ऽ।,ऽ।ऽ,।,ऽ,।ऽ।,ऽ।ऽ,।,ऽ | सुरद्रुमूलमण्डपे विचित्ररत्ननिर्मिते<br>लसद्वितानभूषिते सलीलविभ्रमालसम् ।<br>सुराङ्गनाभवल्लवीकरप्रपञ्चचामर-<br>स्फुरत्समीरवीजितं सदाच्युतं भजामि तम् ॥ |
| मदनललिता<br>चतुर्थे षष्ठे च यतिः। | म्भौ नो म्नौ गो मदनललिता वेदैः षड्भिः<br>ऽऽऽ,ऽ।।,।।।,ऽऽऽ,।।।,ऽ | विभ्रश्यन्माल्यालिचिकुरा धौताधरपुटा<br>म्लायत्पत्रावलिकुचतटोच्छ्वासोर्मितरला ।<br>राधात्यर्थं मदनललितान्दोलालसवपुः<br>कंसारातेरतिरसभरो चक्रेऽतिचटुलम् ॥ |
| वाणिनी | नजभजरैर्यदा भवति वाणिनी गयुक्तैः<br>।।।,।ऽ।,ऽ।।,।ऽ।,ऽ।ऽ,ऽ | स्फुरतु ममाननेऽद्य ननु वाणि ! नीतिरम्यं<br>तव चरणप्रसादपरिपाकतः कवित्वम् ।<br>भवजलराशिपारकरणक्षमं मुकुन्दं<br>सततमहं स्तवैः स्वरचितैः स्तवानि नित्यम् ॥ |
| प्रवरललितम् | यमौ नः सौ गश्च प्रवरललितं नाम वृत्तम्<br>।ऽऽ,ऽऽऽ,।।।,।।ऽ,ऽ।ऽ,ऽ | सुजातेभः शृङ्गे चलवलयझङ्कारयुक्तो<br>सुधा मादन्यासः प्रकटितसुधाकोटिनादः ।<br>स्मितं वक्त्रेऽकस्माद्दृशि पटुकटाक्षोर्मिलीला<br>हरौ जीयादीदृक् प्रवरललितं बल्लवीनाम् ॥ |

# छन्द:

| छन्दसां इतिनामानि । | छन्दसां लक्षणगणा: । | छन्दसामुदाहरणानि । |
|---|---|---|
| अचलधृति: | द्विगुणितवसुलघुभिरचलधृतिरिह<br>।।।।।।।,।।।।।।। | तरणिदुहितृतटरुचिरतरवसति-<br>रमरमुनिसुखजनविहितधृतिरिह ।<br>मधुरिपुरभिनवजलधररुचिततनु-<br>रचलधृतिरवयति मुक्तिसुखमिह खलु ॥ |
| गवङ्कृतम् | गवङ्कृतं नजौ भजलगा यदा स्युस्तदा<br>।।।,।ऽ।,ऽ।।,।ऽ।,ऽऽ।,ऽ | भ्रमरमयूरमानसमुदे पयोदध्वनि-<br>र्गवङ्कृतं सुरारिसुभगेन्द्रसम्भाषणे ।<br>धरणिभरावतारविधिडिण्डिमाडम्बर:<br>स जयति कंसरङ्गभुवि सिंहनादो हरे: ॥ |
| धीरललिता | संकथिता भरौ नरनगाश्च धीरललिता<br>ऽ।।,ऽ।ऽ,।।।,ऽ।ऽ,।।।,ऽ | |
| अश्वगति: | पञ्चभकारयुताऽश्वगतिर्यदि चान्त्यगुरु:<br>ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ | |
| मणिकल्पलता | नजरभभैर्गेन च स्यान्मणिकल्पलता<br>।।।,।ऽ।,ऽ।ऽ,ऽ।।,ऽ।।,ऽ | |
| रूपम् | यस्मिन् सर्वे गा राजन्ते ऽष्टादौ तद्रूपं नाम<br>ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ | |
| वरयुवति: | भो रयना नगौ च यस्यां वरयुवतिरियम्<br>ऽ।।,ऽ।ऽ,।ऽऽ,।।।,।।।,ऽ | |
| सप्तदशाक्षरा वृत्ति: । अत्यष्टि: । | | |
| शिखरिणी<br>षष्ठे एकादशे च यति: । | रसै रुद्रैश्छिन्ना यमनसभला ग: शिखरिणी<br>।ऽऽ,ऽऽऽ,।।।,।।ऽ,ऽ।।,।,ऽ | करादस्य भ्रष्टं ननु शिखरिणी दृश्यति शिखी-<br>विलीना: सत्त्व: सत्यं नियतमवधेयं तदखिलै: ।<br>इति प्रस्यन्द्रोपार्जितनिभृतालापजनितं<br>स्मितं बिभ्रद्देवो जगदवतु गोवर्द्धनधर: ॥ |
| पृथ्वी<br>अष्टमे नवमे च यति: । | जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरु:<br>।ऽ।,।।ऽ,।ऽ।,।।ऽ,।ऽऽ,।,ऽ | दुरन्तदनुजेश्वरप्रकरदु:सहक्ष्मीभरं<br>जहार निजलीलया यदुकुलेऽवतीर्याशु य: ।<br>स एष जगतीगतिर्दुरितभारमस्मादृशां<br>हरिष्यति हरि: स्तुतिस्मरणचाटुभिस्तोषित: ॥ |
| वंशपत्रपतितम्<br>वंशदलमिति प्राञ्चौ वंशपत्रपतिता इति केचित् । अस्य दशमे सप्तमे च यति: । | दिङ्मुनि वंशपत्रपतितं भरनभनलगै:<br>ऽ।।,ऽ।ऽ,।।।,ऽ।।,।।।,।,ऽ | नूतनवंशपत्रपतितं रजनिजलसवं<br>पश्य मुकुन्द ! मौक्तिकमिवोत्तममरकतगम् ।<br>एष च तं चकोरनिकर: प्रपिबति मुदितो<br>वान्तमवेत्य चन्द्रकिरणैरमृतकणमिव ॥ |
| मन्दाक्रान्ता<br>अस्याश्चतुर्थे षष्ठे सप्तमे च यति: ।<br>इयं दौत्यवर्णनोपयोगिनी प्रशस्ता । | मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्<br>ऽऽऽ,ऽ।।,।।।,ऽऽ।,ऽऽ।,ऽ,ऽ | प्रेमालापै: प्रियवितरणै: प्रीणितालिङ्गनाद्यै-<br>र्मन्दाक्रान्ता तदनु नियतं वत्सलामेति बाला ।<br>एवं शिक्षावचनसुधया राधिकाया: सखीनां<br>प्रीत: पायात् स्मितसुवदनो देवकीनन्दनो न: ॥ |
| हरिणी<br>षष्ठे चतुर्थे सप्तमे च यति: । | नसमरसला ग: षड्वेदैर्हयैर्हरिणी मता<br>।।।,।।ऽ,ऽऽऽ,ऽ।ऽ,।।ऽ,।,ऽ | व्यथित स विधिर्नूनं नीत्वा ध्रुवं हरिणीगणाद्-<br>व्रजमृगदृशां सन्दोहस्योल्लसन्नयनश्रियम् ।<br>यदयमनिशं दूर्वाश्यामे मुरारिकलेवरे<br>व्यकिरदधिकं बह्वाकाङ्क्षं विलोलविलोचनम् ॥ |
| नर्दटकम् | यदि भवतो नजौ भजजला गुरु नर्दटकम्<br>।।।,।ऽ।,ऽ।।,।ऽ।,।ऽ।,।,ऽ | व्रजवनिता वसन्तलतिका विलसत्कुसुमं<br>मधुमथनं प्रमत्तजनवाञ्छितकल्पतरुम् ।<br>विभुमभिनौति कोऽपि सुकृती मुदितेन हृदा<br>रुचिरपदावलीघटितनर्दटकेन कवि: ॥ |
| कोकिलकम्<br>अत्र सप्तमे षष्ठे चतुर्थे च यति: । | हयऋतुसागरैर्यतियुतं यदि कोकिलकम्<br>।।।,।ऽ।,ऽ।।,।ऽ।,।ऽ।,।,ऽ | लसदलिमालया मधुरभाषणमोदकरं<br>मधुसमयागमे सरसकेलिभिरुल्लसितम् ।<br>अखिलजितद्युतिं रविसुतावनकोकिलकं<br>ननु कलयामि तं सखि ! सदा हृदि नन्दसुतम् ॥ |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| हारिणी<br>अस्याश्चतुर्थे षष्ठे सप्तमे च यतिः । | वेदर्त्वश्वैर्मभनमयला गश्चेत्तदा हारिणी<br>ऽऽऽ,ऽ॥,।॥,ऽऽऽ,।ऽऽ,।,ऽ | यस्या नित्ये श्रुतियुवलये श्रीशालिनी लोचने<br>रागः स्वीयोऽधरकिसलये लाक्षारसारञ्जनम् ।<br>गौरी कान्तिः प्रकृतिरुचिरा रम्याङ्गरागच्छटा<br>सा कंसारेरजनि न कथं राधा मनोहारिणी ॥ |
| भाराक्रान्ता<br>चतुर्थे षष्ठे सप्तमे च यतिः । | भाराक्रान्ता मभनरसला गुरुः श्रुतिषड्हयैः<br>ऽऽऽ,ऽ॥,।॥,ऽ।ऽ,॥ऽ,।,ऽ | भाराक्रान्ता मम तनुरियं निरीक्ष्य विकारयात्<br>कम्पं धत्ते श्रमजलकणं तथा परिसुष्यति ।<br>इत्याहवम् जयति जलदस्वनाकुलवल्लवी-<br>संश्लेषोत्थं स्मरविलसितं विलोक्य गुरुं हरिः ॥ |
| हरिः | रसयुगहययुङ् नौ म्रौ स्रो लगौ हि यदा हरिः<br>।॥,।॥,ऽऽऽ,ऽ।ऽ,॥ऽ,।,ऽ | |
| कान्ता | भवेत् कान्ता युगरसहयैर्यभौ नरसा लगौ<br>।ऽऽ,ऽ॥,।॥,ऽ।ऽ,॥ऽ,।,ऽ | |
| चित्रलेखा<br>दशमे सप्तमे च यतिः । | ससजा भजगा ग दिक्स्वरैर्भवति चित्रलेखा<br>॥ऽ,॥ऽ,।ऽ।,ऽ॥,।ऽ।,ऽ,ऽ | |
| अतिशायिनी | ससजैरतिशायिनी मता भजयरैर्गुरुभ्याम्<br>॥ऽ,॥ऽ,।ऽ।,ऽ॥,।ऽ।,ऽ,ऽ | |
| पञ्चचामरम् | अवेहि पञ्चचामरं जरौ जरौ जगौ तवुच<br>।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ,। | |
| अष्टादशाक्षरा वृत्तिः । धृतिः । | | |
| कुसुमितलतावेल्लिता<br>पञ्चमे षष्ठे सप्तमे च यतिः । | स्यान्मूतर्त्वश्वैः कुसुमितलतावेल्लिता म्तौ नयौ यौ<br>ऽऽऽ,ऽऽ।,।॥,।ऽऽ,।ऽऽ,।ऽऽ | क्रीडत्कालिन्दीललितलहरीवारिभिर्दाक्षिण्यालै-<br>र्वातैः खेलद्भिः कुसुमितलता वेल्लिता मन्दमन्दम् ।<br>भृङ्गालीगीतैः किसलयकरोल्लासितोल्लासलक्ष्मीं<br>तस्यागा चेतो रभसतरलं चक्रपाणेश्चकार ॥ |
| नन्दनम्<br>एकादशे सप्तमे च यतिः । इद-<br>मेव वेदरेफेभिश्वा महामालिका<br>नाधिकरशभिच्छारका दशवसु-<br>भिर्हंसा इति कुत्रापि । | नजभजरैस्तु रेफसहितैः शिवैर्हयैर्नन्दनम्<br>।॥,।ऽ।,ऽ॥,।ऽ।,ऽ।ऽ,ऽ।ऽ | तरणिसुतातरङ्गपवनैः सलीलमान्दोलितं<br>मधुरिपुपादपङ्कजरजःसुपूतपृथ्वीतलम् ।<br>सुरहरचित्रचेष्टितकलाकलापसंस्मारकं<br>क्षितितलनन्दनं व्रज सखे ! सुखाय वृन्दावनम् ॥ |
| नाराचम् | इह ननरचतुष्कसृष्टन्तु नाराचमाचक्षते<br>।॥,।॥,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | दिनकरतनयातटीकानने चारुसञ्चारिणी<br>श्रवणनिकटकृष्टमेणीदृशा कृष्ण ! राधा त्वयि ।<br>ननु विकिरति नेत्रनाराचमेषा सिलुच्छेदनं<br>तदिह मदनविभ्रमोद्भ्रान्तचित्तावधत्स्व द्रुतम् ॥ |
| चित्रलेखा<br>चन्द्रलेखा इति क्वचित् । | मन्दाक्रान्ता नपरलघुयुता कीर्तिता चित्रलेखा<br>ऽऽऽ,ऽ॥,।॥,।,ऽऽ।,ऽऽ।,ऽ,ऽ | यत्कृष्टस्मिन् जगति मृगदृशां सारस्वरूपं यदाधी-<br>दालब्धेदं व्रजयुवतिसभा वेधसा सा व्यधायि ।<br>नैतादृक् चेत् कथमुदधिसुतामन्दिरेयाच्युतस्य<br>प्रीतं तस्यां नयनयुगमभूच्चित्रलेखाकुलायाम् ॥ |
| शार्दूलललितम्<br>द्वादशे चरणान्ते च यतिः । | मः सो जः सतसा दिनेशऋतुभिः शार्दूलललि-<br>तम्<br>ऽऽऽ,॥ऽ,।ऽ।,॥ऽ,ऽऽ।,॥ऽ | हत्वा कंसमृगे पराक्रमविधिं शार्दूलललितं<br>यश्चक्रे क्षितिभारकारिषु सुरारातिष्वतिदरम् ।<br>सम्प्रोयं परमस्तु देवकिनवी चैलोक्यरक्षकं<br>श्रेयो वः स तनोत्वपारमहिमा लक्ष्मीप्रियतमः ॥ |
| हरिणप्लुतम्<br>हरिणप्लुतेति कुत्रापि । | मात् सो नौ भरसंयुतौ करिबाणखैर्हरिणप्लुतम्<br>ऽऽऽ,॥ऽ,।ऽ।,।ऽ।,ऽ॥,ऽ।ऽ | |
| अश्वगतिः | पञ्चभकारयुताश्वगतिर्यदि चान्त्यसरचिता<br>ऽ॥,ऽ॥,ऽ॥,ऽ॥,ऽ॥,॥ऽ | |
| सुधा | सुधा तर्कर्त्वकैर्भवति ऋतुभिर्यो मो नसतसाः<br>।ऽऽ,ऽऽऽ,।॥,॥ऽ,ऽऽ।,॥ऽ | |
| चित्रलेखा | वर्णाश्वैर्मनततमकैः कीर्तिता चित्रलेखेयम्<br>ऽऽऽ,।॥,।॥,ऽऽ।,ऽऽ।,ऽऽऽ, | |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
| --- | --- | --- |
| भ्रमरपदकम् | भादृरनगा गयौ भ्रमरपदकमिदमभिहितम्<br>ऽ।।,ऽ।ऽ,।।।,।।।,।।।,।।ऽ | |
| शार्दूलम् | शार्दूलं वद मासषट्कयति मः सो जसौ रो मश्चेत्<br>ऽऽऽ,।।ऽ,।ऽ।,।।ऽ,ऽ।ऽ,ऽऽऽ | |
| केसरम् | अर्णाश्वाश्वैर्मभनयरयुगैर्वृत्तं मतं केसरम्<br>ऽऽऽ,ऽ।।,।।।,।ऽऽ,ऽ।ऽ,ऽ।ऽ | |
| चलम् | भ्नौ नृथौ भ्नौ चैत्रलमिदमुदितं युगैर्मुनिभिः स्वरैः<br>ऽऽऽ,ऽ।।,।।।,।ऽ।,ऽ।।,ऽ।ऽ | |
| लालसा | सैका वसुविरतिस्तनौ रैश्चतुर्भिर्युता लालसा<br>ऽऽ।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | |
| लता | भवति ननुगलं रभौ रौ दशभिर्गजेन्द्रैर्लता<br>।।।,।।।,ऽ।ऽ,ऽ।।,ऽ।ऽ,ऽ।ऽ | |
| सिंहविस्फूर्जितम् | तकूतर्वेमैर्मौ भमौ विरतिश्चेत् सिंहविस्फूर्जितं यौ<br>ऽऽऽ,ऽऽऽ,ऽ।।,ऽऽऽ,।ऽऽ,।ऽऽ | |
| हरनर्त्तनम्<br>विबुधप्रिया इति च क्वापि । | रसौ जजौ भरसंयुतौ करिबाणखैर्हरनर्त्तनम्<br>ऽ।ऽ,।।ऽ,।ऽ।,।ऽ।,ऽ।।,ऽ।ऽ | |
| क्रौञ्चपदम् | इदं क्रौञ्चपदं सदीर्घं समस्तैर्यकारैः समेतम्<br>।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ, | |
| हीरकम् | हीरकमुदितं भसनजनैरिह रगयोरन्ततः<br>ऽ।।,।।ऽ,।।।,।ऽ।,।।।,ऽ।ऽ | |
| ऊनविंशत्यक्षरा वृत्तिः। अतिधृतिः। | | |
| मेघविस्फूर्जिता<br>षष्ठे षष्ठे सप्तमे च यतिः । | रसर्त्वश्वैर्यमौ नसौ ररगुरुयुतौ मेघविस्फूर्जिता स्यात् ।<br>।ऽऽ,ऽऽऽ,।।।,।।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ | कदम्बामोदाढ्या विपिनपवनाः केकिनः कान्तकेका विनिद्राः कन्दल्यो दिशि दिशि मुदा दर्दुरा दृप्तनादाः। निशा नृत्यद्विद्युद्विलसितलसन्मेघविस्फूर्जिता चेत् प्रियः स्वाधीनोऽसौ दनुजदलनो राज्यमस्मात् किमन्यत्॥ |
| छाया<br>षष्ठे द्वादशे अन्ते च यतिः । | भवेत् सैवच्छाया तयुगगयुता स्यात् द्वादशान्ते यदा<br>।ऽऽ,ऽऽऽ,।।।,।।ऽ,ऽऽ।,ऽऽ।,ऽ | अभीष्टं कुष्टो यो वितरति समस्तोऽनवद्यायोगचूलः स्फुरन्नानारत्नस्तवकिततनुश्चञ्चदंशुकालम्बितः। न यस्याङ्घ्रिच्छायामुपगतवतां संसारतीव्रातप- स्तनोति प्रोत्तापं स जगदवतात् कंसारिकल्पद्रुमः॥ |
| शार्दूलविक्रीडितम्<br>द्वादशे ऊनविंशतौ च यतिः । | सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूल-विक्रीडितम्<br>ऽऽऽ,।।ऽ,।ऽ।,।।ऽ,ऽऽ।,ऽऽ।,ऽ | गोविन्दं प्रणमोत्तमाङ्ग ! रसने ! त्वं घोषयाहर्निशं पाणी ! पूजयतं मनः ! स्मर पदे ! तस्यालयं गच्छतम्। एवञ्चेत् कुरुताखिलं मम हितं प्रीत्योदयस्तद् ध्रुवं न प्रेक्षे भवता कृते भवमहाशार्दूलविक्रीडितम्॥ |
| सुरसा<br>सप्तमे चतुर्दशे अन्ते च यतिः । | म्रौ भ्नौ यो नो गुरुश्चेत् स्वरमुनिकरणैरत्र सुरसाम्<br>ऽऽऽ,ऽ।ऽ,ऽ।।,।।।,।ऽऽ,।।।,ऽ | कामक्रीडालसाङ्गो मधुसमयसमारम्भरभसात् कालिन्दीकूलकुञ्जे विहरणकुतुकाकृष्टहृदयः। गोविन्दो बल्लवीनामधररससुधां प्राप्य सुरसां शङ्के पीयूषपानप्रभवकृतसुखं व्यस्मरदसौ॥ |
| फुल्लदाम<br>पञ्चमे द्वादशे अन्ते च यतिः ।<br>पुष्पदाम इति केचित् । | मो गौ नौ तौ गौ स्वरहयतुरगैः फुल्लदाम प्रसिद्धम्<br>ऽऽऽ,ऽ,ऽ,।।।,।।।,ऽऽ।,ऽऽ।,ऽ,ऽ | शश्वल्लोकानां प्रकटितमदनं व्यस्तमालोक्य कंसं कुब्जायन्तोऽभिच्छिद्य विगलितिभिर्योमसंस्थैर्विसृष्टम्। सुग्धामोदेन स्थगितदशदिशाभोगमाकृष्टभृङ्गं मौलौ दैत्यारेर्न्यपतदनुपमं स्वस्तरोः फुल्लदाम॥ |
| पञ्चचामरः | नयुगलगलक्तू रजौर्जगा यदा स पञ्चचामरः<br>।।।,।।।,ऽ,।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।,ऽ | |
| बिम्बम् | वृत्तं बिम्बाख्यं शरमुनितुरगैर्म्तौ नृषौ ततौ चेद्गुरुः<br>ऽऽऽ,ऽऽ।,।।।,।।ऽ,ऽऽ।,ऽऽ।,ऽ | |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
| --- | --- | --- |
| मकरन्दिका | रसैः षड्भिर्लोकैर्यमनसजजा गुरुर्मकरन्दिका<br>।ऽऽ,ऽऽऽ,।।।,।।ऽ,।ऽ।,।ऽ।,ऽ | |
| मणिमञ्जरी | ऋष्यश्वैः स्यात् यभनयजजगाः कीर्त्तिता मणिमञ्जरी<br>।ऽऽ,ऽ।।,।।। ।ऽऽ,।ऽ।,।ऽ।,ऽ | |
| समुद्रतता | गजाब्धितुरगैर्जसौ जसतभा गश्चेत् समुद्रतता<br>।ऽ।,।।ऽ,।ऽ।,।।ऽ,ऽऽ।,ऽ।।,ऽ | |
| विंशत्यक्षरा वृत्तिः । कृतिः । | | |
| सुवदना<br>सप्तमे चतुर्दशे विंशतौ च यतिः । | ज्ञेया सप्ताश्वषड्भिर्मरभनययुता भ्लौ गः सुवदना<br>ऽऽऽ,ऽ।ऽ,ऽ।।,।।।,।ऽऽ, ऽ।।,।,ऽ | प्रत्याहृत्येन्द्रियाणि त्वदितरविषयान्नासाग्रनयना<br>त्वां ध्यायन्ती निकुञ्जे परमतरसं हर्षोत्थपुलका ।<br>आनन्दाश्रुप्लुताक्षी वसति सुवदना योगैकरसिका<br>कामार्त्तिं त्यक्तुकामा ननु नरकरिपो ! राधा मम सखी ॥ |
| गीतिका | सजजा भरौ सलगा यदा कथिता तदा खलु गीतिका<br>।।ऽ,।ऽ।,।ऽ।,ऽ।।,ऽ।ऽ,।।ऽ,।,ऽ | करतालचञ्चलकङ्कणस्वनमिश्रणेन मनोरमा<br>रमणीयवेणुनिनादरङ्गिमसङ्गमेन सुखावहा ।<br>बहुलानुरागनिवासरासससमुद्भवा भवरागिणां<br>विदधौ हरिं खलु वल्लवीजनचारु चामरगीतिका ॥ |
| वृत्तम् | वृत्तमीदृशन्तु नामतो रजौ रजौ रजौ गुरुर्लघुश्च<br>ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ,। | चित्रवृत्तलीलया निसर्गरम्यदेहरूपविभ्रमेण<br>राजमानसद्वयोविलाससम्पदा कलाकुतूहलेन ।<br>यः समं व्रजाङ्गनाजनैः सुराङ्गनानिभैः सुखं समेत्य<br>विष्णुरत्रलास चित्तपद्मकोषषट्पदः स मे सदास्तु ॥ |
| शोभा<br>षष्ठे त्रयोदशे अन्ते च यतिः । | रसाश्वाब्धैः शोभा नयुगगजठरा मेघविस्फूर्जिता चेत्<br>।ऽऽ,ऽऽऽ,।।।,।।।,ऽ,ऽ।ऽ,ऽ।ऽ,ऽ | सखीयं पीनोन्नतसरसिजयुगला मध्येनम्रा फलाभ्यां<br>तयोरूर्द्ध्वं राजत्तरलकिशलयाश्लिष्टसुस्निग्धशाखा ।<br>लसन्मुक्तारक्तोत्पलकुवलयवक्त्रबिम्बाञ्चिताग्रा<br>महाशोभा मौलौ मिलदलिपटलैः कृष्ण ! सा कामवल्ली ॥ |
| सुवंशा | ख्याता पूर्वैः सुवंशा यदि मरभनना तद्द्वयं गो गुरुश्च<br>ऽऽऽ,ऽ।ऽ,ऽ।।,।।।,ऽऽ।,ऽऽ।,ऽ,ऽ | |
| मत्तेभविक्रीडितम्<br>त्रयोदशे यतिः । | सभरा नमौ यलगाश्च त्रयोदशयतिर्मत्तेभविक्रीडितम्<br>।।ऽ,ऽ।।,ऽ।ऽ ।।।,ऽऽऽ.।ऽऽ,।,ऽ | |
| एकविंशत्यक्षरा वृत्तिः । प्रकृतिः । | | |
| स्रग्धरा<br>सप्तमे चतुर्दशे एकविंशतौ च यतिः । | म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्<br>ऽऽऽ,ऽ।ऽ,ऽ।।,।।।,।ऽऽ,।ऽऽ,।ऽऽ | व्याकीर्णेन्दीवराभा कनककपिलसत्पीतवासाः सुहासा<br>वर्हैश्चन्द्रकान्तैर्ज्वलयितचिकुरा चारुकर्णावतंसा ।<br>वंशध्वानामृतौघप्लवनसुखितजगद्गोपवीभिर्लसन्ती<br>मूर्त्तिर्गोपस्य विष्णोरवतु जगति वः स्रग्धरा हारिहारा ॥ |
| सरसी<br>सिंहकमिति सलिलनिधिरिति च क्वापि । | नजभजजा जरौ यदि तदा गदिता सरसी कवीश्वरैः<br>।।।,।ऽ।,ऽ।।,।ऽ।,।ऽ।,।ऽ।,ऽ।ऽ | चिकुरकलापशैवलकलापमदासु लसद्रसोर्म्मिषु<br>स्फुटवदनाम्बुजासु विलसद्भुजवालमृणालवल्लिषु ।<br>कुचयुगचक्रवाकमिथुनानुगता सुकलाकुतूहली<br>चरचयदच्युतो व्रजमृगीनयनासरसीषु विभ्रमम् ॥ |
| द्वाविंशत्यक्षरा वृत्तिः । आकृतिः । | | |
| हंसी<br>अष्टमे द्वाविंशतौ च यतिः । | मौ गौ नाश्चत्वारो गो गौ वसुभुवनयतिरिति भवति हंसी<br>ऽऽऽ,ऽऽऽ,ऽ,ऽ,।।।,।।।,।।।,।।।,ऽ,ऽ | सार्द्धं कान्तेनैकान्तेऽसौ विकचकमलमधुसुरभि पिबन्ती<br>कामक्रीडाकूतस्फीतप्रमदरसभरममलघु रसन्ती ।<br>कालिन्दीये पद्मारण्ये पवनचलनपरितरलपरागे<br>कंसाराते ! पश्य स्वच्छं सरभसगतिरिह विलसति हंसी ॥ |
| मदिरा | सप्तभकाररचितैकगुरुर्गदितेयमुदारतरा मदिरा<br>ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ | माधवमासि विकस्वरकेशरपुष्पलसत्करिरासुदिते-<br>भ्रङ्गकुलैरुपगीतवने वनमालिनमालि ! कलानिलयम् ।<br>कुञ्जगृहोदरपल्लवकल्पिततल्पमनल्पमनोजरसं<br>त्वं भज माधविका कदुनर्तकयाशुनवातलतोपगमा ॥ |

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणानि। | छन्दसामुदाहरणानि। |
|---|---|---|
| भद्रकम् | भ्रौ नरना रनावथ गुरुर्दिगर्कविरमं हि भद्रकमिदम्<br>ऽ।।,ऽ।ऽ,।।।,ऽ।ऽ,।।।,ऽ।ऽ,।।।,ऽ | * |
| लालित्यम् | लालित्यं भुजगेन्द्रेण भाषितमेतच्चेन् मसरक्त-<br>जनगुभिः<br>ऽऽऽ,।।ऽ,ऽ।ऽ,।।ऽ,ऽऽ।,।ऽ।,।।।,ऽ | |
| महास्रग्धरा | सभता नसौ रगौ गः फणितुरगहयैः स्यान्महा<br>स्रग्धराख्या<br>।।ऽ,।ऽ।,ऽऽ।,।।।,।।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ | |
| त्रयोविंशत्यक्षरा वृत्तिः। विकृतिः। | | |
| अद्रितनया<br>अश्वललितमित्यन्यत्र। | नजभजभा जभौ लघुगुरू बुधैस्तु गदितेय-<br>मद्रितनया<br>।।।,।ऽ।,ऽ।।,।ऽ।,ऽ।।,।ऽ।,ऽ।।,।,ऽ | खरतरशौर्यपावकशिखापतङ्गनिभमग्नदृप्तदनुजो<br>जलधिसुताविलासवसतिः सतां गतिरशेषमान्यमहिमा।<br>भुवनहितावतारचतुरश्चराचरधरोऽवतीर्ण इह हि<br>क्षितिवलयेऽस्ति कंसमथनस्तवेति तमवोचदद्रितनया॥ |
| मत्ताक्रीडम्<br>अष्टमे त्रयोदशे त्रयोविंशतौ च यतिः। मत्ताक्रीडा इति क्वचित्॥ | मत्ताक्रीडं वस्विष्वाशायति मयुगगयुगमनुलघु-<br>गुरुभिः<br>ऽऽऽ,ऽऽऽ,ऽ,ऽ,।।।।।।।।।।।।।,ऽ | मुग्धोल्लोलन्मत्ताक्रीडं मधुसमयसुलभमधुरमधुरसात्<br>गाने याने किञ्चित्स्पन्दत्पदमलसनयनयुगलसरसिजम्।<br>रासोल्लासक्रीडत्कन्याजनयुवतिवलयरचितभुजरसं<br>सान्द्रानन्दं वृन्दारण्ये स्मरत हरिमनघचरणपरिचयम्॥ |
| सुन्दरिका | इह सुन्दरिका पिङ्गलमुनिनोक्ता सद्यतो<br>भसता न्लभगाः<br>।।ऽ,।।ऽ,ऽ।।,।।ऽ,ऽऽ।,।ऽ।,।,ऽ।।,ऽ | |
| चतुर्विंशत्यक्षरा वृत्तिः। संस्कृतिः। | | |
| तन्वी<br>पञ्चमे द्वादशे चतुर्विंशतौ च यतिः। | भूतमुनीनैर्यतिरिह भतनाः सभौ भनयाश्च यदि<br>भवति तन्वी<br>ऽ।।,ऽऽ।,।।।,।।ऽ,ऽ।।,ऽ।।,।।।,।ऽऽ | माधव मुग्धैर्मधुकरविरुतैः कोकिलकूजितमलयसमीरैः<br>कम्पमुपेता मलयजसलिलैः प्लावनतोऽप्यधिगततनुदाहा।<br>पद्मपलाशैर्विरचितशयना देहजसंज्वरभरपरिपूर्णै<br>र्निःश्वसती सा मुहुरतिपरुषं ध्यानलये तव निवसति तन्वी॥ |
| किरीटम् | नाम किरीटमिदं भगणा यदि पिङ्गलनाग-<br>सुनीन्द्रमतं किल<br>ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।। | |
| दुर्मिलम् | सगणैरिह वृत्तवरं वसुभिः किल दुर्मिलमुक्तमिदं<br>कविभिः<br>।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ | |
| पञ्चविंशत्यक्षरा वृत्तिः। अतिकृतिः। | | |
| क्रौञ्चपदा<br>पञ्चमे दशमे अष्टादशे पञ्चविंशतौ च यतिः। | क्रौञ्चपदा स्यात् भौ मसभाश्चेदिषुशरवसुमुनि-<br>यति मनुलघुगैः<br>ऽ।।,ऽऽऽ,।।ऽ,ऽ।।,।।।।।।।।।।।।।,ऽ | क्रौञ्चपदालीचिञ्चिततीरा मदकलखगकुलकलकलरुचिरा<br>फुल्लसरोजश्रेणिविलासा मधुमुदितमधुपरवरभसकरी।<br>फेनविलासप्रोज्ज्वलहासा ललितलहरिभरपुलकितसुतनुः<br>पश्य सरित्सौ कस्य न चेतो हरति तरलगतिरहिम-<br>किरणजा॥ |
| षड्विंशत्यक्षरा वृत्तिः। उत्कृतिः। | | |
| भुजङ्गविजृम्भितम्<br>अष्टमे ऊनविंशतौ षड्विंशतौ च यतिः। | वस्वीशाश्वैश्छेदोपेतं ममतननयुग रसलगै-<br>र्भुजङ्गविजृम्भितम्<br>ऽऽऽ,ऽऽऽ,ऽऽ।,।।।,।।।,।।।,ऽ।ऽ,।।ऽ,।,ऽ | शैलोद्यन्नाट्यत्पादप्रकटविकटनटनभरो रणत्करनालक-<br>च्छादप्रेङ्खच्चूडावर्हः स्फुरितरलनवकिसलयसुरञ्जित-<br>हारधृत्।<br>यस्यन्नागस्त्रीभिर्भक्त्या मुकुलितकरकमलयुगं स्तुतस्तुति-<br>रम्युरलः<br>पायाद्विभिन्दन् कालिन्दीह्रदतटनिजवसतिश्चलद्भुजङ्ग-<br>विजृम्भितम्॥ |
| अपवाहम् | मो नाः षड् सगिति यदि नवरसरसशर-<br>यतियुतमपवाहाख्यम्<br>ऽऽऽ,।।।,।।।,।।।,।।।,।।।,।।।,।।ऽ,ऽ,ऽ | |

| छन्दसां इत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| अथ दण्डकाः ।<br>सप्तविंशत्यक्षरा वृत्तिः । | | |
| चण्डवृष्टिप्रपातः | यदिह नयुगलं ततः सप्तरेफास्तदा चण्डवृष्टिप्रपातो भवेद्दण्डकः<br>।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ, | प्रचलघनघटासमारम्भमेघावलीचण्डवृष्टिप्रपाताकुलं गोकुलं<br>झटिति समवलोक्य सद्येन हस्तेन गोवर्धनं नाम शैलं दधल्लीलया ।<br>कमलनयन ! रक्ष रक्षेति गर्वाप्रसन्नानुयायोपाङ्गनालिङ्गनानन्दितो<br>मलदभिनवधातुधाराविचित्राङ्गरागो सुरारातिरस्तु प्रमोदाय वः ॥ |
| प्रचितकः | प्रचितकसमभिधो धीरधीभिः स्मृतो दण्डको नद्वयादुत्तरैः सप्तभिर्यैः<br>।।।,।।।,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ | सुरवर ! यदुकुलाम्भोधिचन्द्र ! प्रभो ! देवकीगर्भरत्न ! त्रिलोकैकनाथ !<br>प्रचितकपटसुरारिप्रोद्दामदन्तावलस्तोमविद्रावणे केशरीन्द्र ! ।<br>चरणनखरसुधांशुच्छटोन्मीलनिःशेषितध्यायिचेतोनिविडान्धकार !<br>प्रणतजनपरितापोग्रदावानलोच्छेदमेघ ! प्रसीद प्रसीद प्रसीद ॥ |
| कुसुमस्तवकम् | सगणः सकलः खलु यत्र भवेत्तमिह प्रवदन्ति बुधाः कुसुमस्तवकम्<br>।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ | विरराज यदीयकरः कनकद्युतिबन्धुरवामहरः कुचकुड्मलगो<br>भ्रमरप्रकरेण यथाश्रितमञ्जिरशोकलताविलसत्कुसुमस्तवकः ॥<br>स नवीनतमालदलप्रतिमच्छविबिभ्रदतीवविलोचनहारिवपु-<br>श्चपलारुचिरांशुकवल्लिधरो हरिरस्तु मदीयहृदम्बुजमध्यगतः ॥ |
| मत्तमातङ्गलीलाकरः | यत्र रेफः परं स्वेच्छया गुम्फितः स स्मृतो दण्डको मत्तमातङ्गलीलाकरः<br>ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | हेमगौरं वसानोंऽशुकं प्रक्रमीलासिते वर्ष्मणि स्पष्टदिव्याकुलेपाङ्गिनो<br>हारताराम्बुवद्दीनभञ्चित्रमालाञ्चितो भव्यभूषोज्ज्वलाङ्गः समं सौरिणा ।<br>अञ्जनाभास्वरेणेन्दुकुन्दाभ देहेन लीलापरिहासहासोर्मिकौतूहलैः<br>कंसरङ्गाङ्गिणः पातु वस्सङ्गमात्कीर्तिसक्रीडया मत्तमातङ्गलीलाकरः ॥ |
| अष्टविंशत्यक्षरा वृत्तिः ।<br>अशोकपुष्पमञ्जरी | यत्र दृश्यते गुरोः परो लघुः क्रमात् स उच्यते बुधैरशोकपुष्पमञ्जरीति<br>ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ। | मूर्ध्नि चारुचम्पकस्रजा सलीलवेष्टनं लसन्नवङ्गचारुचन्द्रिका कचेषु<br>कर्णयोरशोकपुष्पमञ्जरीवतंसको गलेच कान्तकेशरोपकल्पदाम ।<br>पुन्नागकेशरादिपुष्परेणुरूषणं तनौ विचित्रमित्युपात्तवेश एव<br>केशवः पुनातु वः सुपुष्पभूषितः स मूर्तिमानिवागतो मधुर्विहर्तुमत्र ॥ |
| अनङ्गशेखरः | लघुर्गुरुर्निरन्तरं यदा निवेश्यते तदैव दण्डको भवत्यनङ्गशेखरः<br>।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ | उदेत्यसौ सुधाकरः पुरो विलोकयाद्य राधिके ! विजृम्भमाणगौरदीधितौ<br>रतिस्तनस्वर्णनिर्मितः कलाङ्कतूहलेन चारुचम्पकैरनङ्गशेखरः क्रियः ।<br>इति प्रमोदकारिणीं प्रियाप्रमोदलक्षणां गिरं समुद्गिरन्मुरारिरङ्गुतां<br>प्रदोषकालसङ्गमोल्लसन्मना मनोजकेलिकौतुकी करोतु वः कृतार्थताम् ॥ |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| त्रिंशदक्षरा वृत्तिः । अर्णः | प्रतिचरणविवृद्धरेफाः स्युरर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः प्रतिचरणं चण्डवृष्टिप्रपातस्य रत्नार्थः । ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | जय जय जगदीश विष्णो हरे राम दामोदर श्रीनिवासाच्युतानन्त नारायण त्रिदशगणगुरो मुरारे मुकुन्दासुरारे हृषीकेश पीताम्बर श्रीपते माधव । गरुडगमन लक्ष्म वैकुण्ठ गोविन्द विश्वम्भरोपेन्द्र चक्रायुधाधोक्षज श्रीनिधे बलिदमन नृसिंह शौरे। भवाम्भोधिघोरार्णसि त्वं निमज्जन्तमभ्युद्धरोपेत्य माम् ॥ |
| सिंहविक्रीडः | यकारैः कवीच्छानुरोधान्निबद्धैः प्रसिद्धो विशुद्धोऽपरो दण्डकः सिंहविक्रीडनामा ।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ | |
| एकत्रिंशदक्षरा वृत्तिः । अर्णवः | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | अर्णोवदर्णवादीनामप्युदाहरणानि बोद्धव्यानि ॥ |
| अशोकमञ्जरी | स्वेच्छया रजौ क्रमेण संनिवेश्य यत्र दारधीः कविः स दण्डकः स्मृतो जयत्यशोकमञ्जरी ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ | |
| षट्त्रिंशदक्षरा वृत्तिः । व्यालः | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | |
| ऊनचत्वारिंशदक्षरा वृत्तिः । जीमूतः | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ, ऽ।ऽ | |
| द्वाचत्वारिंशदक्षरा वृत्तिः । लीलाकरः | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ, ऽ।ऽ,ऽ।ऽ | |
| पञ्चचत्वारिंशदक्षरा वृत्तिः । उद्दामः | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ, ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | |
| सिंहविक्रान्तः | नयुगलगुरुयुगेवं यकाराः कवीच्छानुरोधात्पदा यत्र यस्य स्मृतोऽपरो दण्डकः पण्डितैः कीर्तितः सिंहविक्रान्तनामा ।।।,।।।,।,ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ, ।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ | |
| अष्टचत्वारिंशदक्षरा वृत्तिः । शङ्खः इत्यादयः । | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ, ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | |
| इति समवृत्तानि समाप्तानि ॥*॥ | | |
| अथार्धसमवृत्तानि । उपचित्रम् ११ । ११ वृत्तिः । | विषमे यदि सौ सलगा दले भौ युजि भाद्गुरुकावुपचित्रम् । द्विरावृत्त्या श्लोकः पूरयितव्यः | |
| प्रथमपादे तृतीयपादे च | ।।ऽ,।।ऽ,।।ऽ,।,ऽ | सुरवैरिवपुःक्षतजं सुदं हेमनिभांशुकचन्दनलिप्तम् । |
| द्वितीयपादे चतुर्थपादे च | ऽ।।,ऽ।।,ऽ।।,ऽ,ऽ | गगनस्थपलाशिमिलितं यथा शारदनीरधरैरुपचित्रम् ॥ |
| वेगवती १० । ११ वृत्तिः । | विषमे प्रथमाक्षरहीनं दोधकमेव हि वेगवती स्यात् | |
| प्रथमपादे तृतीयपादे च | ।।ऽ,।।ऽ,।।ऽ,ऽ | स्मर वेगवती व्रजरामा केशववंशरवैरतिमुग्धा । |
| द्वितीयपादे चतुर्थपादे च | ऽ।।,ऽ।।,ऽ।।,ऽ,ऽ | रभसान्न गुरून्गणयन्ती केलिनिकुञ्जगृहाय जगाम ॥ |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| भद्रविराड् १०।११ वृत्तिः । | ओजे तपरौ जरौ गुरुश्चेत् मसौ जगौ ग भद्रविराड् भवेदनोजे | |
| प्रथमपादे तृतीयपादे च | ऽऽ।,।ऽ।,ऽ।ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ऽऽऽ,।।ऽ,।ऽ।,ऽ,ऽ | |
| केतुमती १०।११ वृत्तिः । | असमे सजौ सगुरुयुक्तौ केतुमती समे भरनगाद् गः | |
| प्रथमपादे तृतीयपादे च | ।।ऽ,।ऽ।,।।ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ऽ।।,ऽ।ऽ,।।।,ऽ ऽ | |
| विपरीतपूर्वा ११।११ वृत्तिः । | जतौ जगौ गो विषमे समे चेत् तौ जगौ ग एषा विपरीतपूर्वा | |
| प्रथमपादे तृतीयपादे च | ।ऽ।,ऽऽ।,।ऽ।,ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ऽऽ।,ऽऽ।,।ऽ।,ऽ,ऽ | |
| आख्यानकी ११।१२ वृत्तिः । | आख्यानकी तौ जगुरू ग ओजे जतावनोजे जगुरू गुरुश्चेत् | |
| प्रथमपादे तृतीयपादे च | ऽऽ।,ऽऽ।,।ऽ।,ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ।ऽ।,ऽऽ।,।ऽ।,ऽ,ऽ | |
| हरिणप्लुता ११।१२ वृत्तिः । | अयुजि प्रथमेन विवर्जितं द्रुतविलम्बितकं हरिणप्लुता | |
| प्रथमपादे तृतीयपादे च | ।।,ऽ।।,ऽ।।,ऽ।ऽ | स्फुटफेनचया हरिणप्लुता बलिमनोज्ञतटा तरणेः सुता । |
| द्वितीयपादे चतुर्थपादे च | ।।।,ऽ।।,ऽ।।,ऽ।ऽ | कलहंसकुलारवशालिनी विहरतो हरति स्म हरेर्मनः ॥ |
| अपरवक्त्रम् ११।१२ वृत्तिः । | अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ | |
| प्रथमे तृतीये च पादे | ।।।,।।।,ऽ।ऽ,।,ऽ | स्फुटसुमधुरवेणुगीतिभिस्तमपरवक्त्रमवेत्य माधवम् । |
| द्वितीये चतुर्थे च पादे | ।।।,।ऽ।,।ऽ।,ऽ।ऽ | मृगयुवतिगणैः समं स्थिता व्रजवनिता धृतचित्तविभ्रमाः ॥ |
| द्रुतमध्या ११।१२ वृत्तिः । | भत्रयमोजगतं गुरुणी चेद् युजि च नजौ ज्यगुरू द्रुतमध्या | |
| प्रथमपादे तृतीयपादे च | ऽ।। ऽ।।,ऽ।।,ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ।।।,।ऽ।,।ऽ।,।ऽऽ | |
| मालभारिणी ११।१२ वृत्तिः । | विषमे ससजा यदा गुरू चेत् सभरा येन तु मालभारिणीयम् | |
| प्रथमपादे तृतीयपादे च | ।।ऽ,।।ऽ,।ऽ।,ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ।।ऽ,ऽ।।,ऽ।ऽ,।ऽऽ | |
| कौमुदी १२।१२ वृत्तिः । | अयुजि ननभभा समकेऽपि तु नयुगरयुगलं तदा कौमुदी | |
| प्रथमपादे तृतीयपादे च | ।।।,।।।,ऽ।।,ऽ।। | |
| द्वितीयपादे चतुर्थपादे च | ।।।,।।।,ऽ।ऽ,ऽ।ऽ | |
| पुष्पिताग्रा १२।१३ वृत्तिः । | अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा | |
| प्रथमपादे तृतीयपादे च | ।।।,।।।,ऽ।ऽ,।ऽऽ | करकिसलयशोभया विभान्तौ कुचफलभारविनम्रदेहयष्टिः । |
| द्वितीयपादे चतुर्थपादे च | ।।।,।ऽ।,।ऽ।,ऽ।ऽ,ऽ | स्मितरुचिरविलासपुष्पिताग्रा व्रजयुवतिर्वसतौ हरेर्मुदेऽभूत् ॥ |
| यवमती १२।१३ वृत्तिः । | स्यादयुग्मके रजौ रयौ समे चेत् जरौ जरौ गुरुश्चैवात् परा मतीयम् | |
| प्रथमपादे तृतीयपादे च | ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽऽ | |
| द्वितीयपादे चतुर्थपादे च | ।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,ऽ | |
| मञ्जुसौरभम् १२।१३ वृत्तिः । | यदि विषमे भवतो नजौ जरौ सजयाः समे तु जगौ मञ्जुसौरभम् | |
| प्रथमपादे तृतीयपादे च | ।।।,।ऽ।,।ऽ।,ऽ।ऽ | |
| द्वितीयपादे चतुर्थपादे च | ।।ऽ,।ऽ।,।ऽऽ,।ऽ।,ऽ | |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| सुन्दरी १०।११ वृत्तिः । | अयुजोर्यदि सौ जगौ युजो: सभरा: लगौ यदि सुन्दरी तदा | |
| प्रथमे तृतीये पादे च | ॥ऽ,॥ऽ,।ऽ।,ऽ | यदवोचदवेक्ष्य सुन्दरी परित: स्नेहमयेन चक्षुषा । |
| द्वितीये चतुर्थे पादे च | ॥ऽ,ऽ॥,ऽ।ऽ,।,ऽ | अपि कंसहरस्य दुर्लभं मदनस्ताद्विदधीत विक्रयम् ॥ |
| इत्यर्द्धसमवृत्तानि समाप्तानि ॥ * ॥ | | |
| अथ विषमवृत्तानि । | | |
| उद्गता | प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरम् । यद्यथ भनभगा: स्युरथो सजसा जगौ च भवतीयमुद्गता ॥ | |
| प्रथमे पादे १० | ॥ऽ,।ऽ।,॥ऽ,। | विललास गोपरमणीषु तरणितनयाप्रभोद्गता । |
| द्वितीये १० | ॥।,॥ऽ,।ऽ।,ऽ | श्यामनयनचकोरयुगे दधती सुधांशुकिरणोर्म्मिविभ्रमम् ॥ |
| तृतीये १० | ऽ॥,॥।,ऽ॥,ऽ | |
| चतुर्थे १३ | ॥ऽ,।ऽ।,॥ऽ,।ऽ।,ऽ | |
| अस्याविधोद्गता | प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरम् । यद्यथ भनजलगा: स्युरथो सजसा जगौ च भवतीयमुद्गता ॥ | |
| प्रथमे पादे १० | ॥ऽ,।ऽ।,॥ऽ,। | अथ वासवस्य वचनेन रुचिरवदनस्त्रिलोचनम् । |
| द्वितीये १० | ॥।,॥ऽ,।ऽ।,ऽ | क्लान्तिरहितमभिराधयितुं विधिवत्तपांसि विदधे धनञ्जय: ॥ |
| तृतीये ११ | ऽ॥,॥।,।ऽ।,।,ऽ | इति भारव्युद्गताभेद: । १२ । १ ॥ |
| चतुर्थे १३ | ॥ऽ,।ऽ।,॥ऽ,।ऽ।,ऽ | |
| सौरभम् | अयमुद्गता सदृशमेव पदमिह तृतीयमन्यथा । जायते रनभगैर्ग्रथितं कथयन्ति सौरभकमेतदीदृशम् ॥ | |
| प्रथमे पादे १० | ॥ऽ,।ऽ।,॥ऽ,। | परिभूतफुल्लशतपत्रवनविकृतगन्धविभ्रमा । |
| द्वितीये १० | ॥।,॥ऽ,।ऽ।,ऽ | कस्य कृष्ण हरतीह हरे सुखपद्मसौरभकला नवाङ्गना ॥ |
| तृतीये १० | ऽ।ऽ,॥।,ऽ॥,ऽ | |
| चतुर्थे १३ | ॥ऽ,।ऽ।,॥ऽ,।ऽ।,ऽ | |
| ललितम् | नयुगं सकारयुगलञ्च भवति चरणे तृतीयके । तद्वदितमुरुमतिभिर्ललितं यदि शेषमस्य सकलं यथोद्गता । | |
| प्रथमे पादे १० | ॥ऽ,।ऽ।,॥ऽ,। | व्रजसुन्दरी समुदयेन मुदितमनसा स पीयते । |
| द्वितीये १० | ॥।,॥ऽ,।ऽ।,ऽ | हिमकरगलितमिवामृतकं ललितं मुरारिमुखचन्द्रबिम्बगम् ॥ |
| तृतीये १२ | ॥।,॥।,॥ऽ,॥ऽ | |
| चतुर्थे १३ | ॥ऽ,।ऽ।,॥ऽ,।ऽ।,ऽ | |
| वक्त्रम् | वक्त्रं युग्भ्यां मगौ स्यातामब्धेर्य्योऽनुष्टुभि ख्यातम् । | |
| प्रथमे पादे ८ | ऽऽऽऽ।ऽऽऽ | वक्त्राम्भोजं सदा स्मेरं चक्षुर्नीलोत्पलं फुल्लम् । |
| द्वितीये ८ | ऽऽऽऽ।ऽऽऽ | व्रजस्त्रीणां मुरारातेश्चेतोभृङ्गं जहारोच्चै: ॥ |
| तृतीये ८ | ऽ।ऽऽ।ऽऽऽ | |
| चतुर्थे ८ | ऽऽऽऽ।ऽऽऽ | |
| पथ्यावक्त्रम् | युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्त्तितम् । | |
| प्रथमे पादे ८ | ऽऽ।।ऽऽ। | रासकेलिसतृष्णस्य कृष्णस्य मधुवासरे । |
| द्वितीये ८ | ऽऽ॥।ऽ।ऽ | आसीद्गोपाङ्गनागीर्या पथ्या वक्त्रमधुस्रुति: ॥ |
| तृतीये ८ | ऽऽऽ॥ऽऽऽ | |
| चतुर्थे ८ | ऽऽऽ।ऽ।ऽ | |

| छन्दसां वृत्तिनामानि । | | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|---|
| अनुष्टुप् | | पञ्चमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः ।<br>गुरु षष्ठञ्च पादानां शेषेष्वनियमो मतः ॥<br>प्रयोगे प्रायिकं प्राहुः केऽप्येतद्वक्त्रलक्षणम् ।<br>लोकेऽनुष्टुबिति ख्यातं तस्याष्टाक्षरता मता ॥ | |
| प्रथमे चरणे | ८ | ऽ।ऽ।।ऽऽ। | पञ्चमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः । |
| द्वितीये | ८ | ऽ।ऽ।।ऽ।ऽ | गुरु षष्ठञ्च पादानां शेषेष्वनियमो मतः ॥ |
| तृतीये | ८ | ।।ऽऽ।ऽऽऽ | |
| चतुर्थे | ८ | ऽऽ।।।ऽ।ऽ | |
| इति वृषमवृत्तानि समाप्तानि ॥*॥ | | | |
| अथ मात्रावृत्तानि । | | | |
| आर्य्या अर्थात् गाथा | | लक्ष्मैतत् सप्तगणा गोपेता भवति नेह विषमे जः ।<br>षष्ठो जश्च नलघु वा प्रथमार्द्धे नियतमार्य्यायाः ॥<br>षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयतिपद-नियमः ।<br>चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥ | |
| प्रथमे पादे | १२ | ऽऽ।ऽ।ऽऽ | कृष्णः शिशुः सुतो मे वक्षवकुलाटाभिराकुलो न यदि । |
| द्वितीये | १८ | ऽ।।।।ऽ।ऽ।ऽ।।ऽ | चचामपि वसव्यसाविति जगाद गोष्ठ्यां यशोदार्य्या ॥ |
| तृतीये | १२ | ।।।।।ऽ।ऽ।। | |
| चतुर्थे | १५ | ।ऽ।ऽऽ।ऽऽऽ | |
| प्रकारान्तरो यथा | | | |
| प्रथमे पादे | १२ | ऽऽ।ऽ।ऽऽ | वृन्दावने सलीलं वल्गुद्रुमकाननिहितततनुयष्टिः । |
| द्वितीये | १८ | ऽऽ।।ऽ।।।।।ऽऽ | कोरमुखार्पितवेणुः कृष्णो यदि मनसि कः स्वर्गः ॥ |
| तृतीये | १२ | ऽ।ऽ।।ऽऽ | |
| चतुर्थे | १५ | ऽऽ।।।।।ऽऽऽ | |
| नवधा आर्य्या क्रमेण यथा । | | [पथ्या ।<br>प्रथमगणत्रयविरतिर्दलयोरुभयोः प्रकीर्त्तिता | |
| पथ्या | | | |
| प्रथमे पादे | १२ | ।।।।ऽ।।ऽऽ | जय जय नाथ! मुरारे! केशव! कंसान्तकाच्युतानन्त ! । |
| द्वितीये | १८ | ऽ।।ऽऽ।ऽ।ऽऽऽ | कुरु करुणामिति निर्मितः पथ्या भवरोगदुःस्थानाम् ॥ |
| तृतीये | १२ | ।।।।ऽ।।।।ऽ | अत्र द्वितीयपादान्तलघोर्गुरुत्वम् । |
| चतुर्थे | १५ | ऽऽ।।ऽ।ऽऽऽ | पूर्व्वपरार्द्धयोर्द्वादशमात्रायां यतिः ॥ |
| विपुला | | संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः ।<br>यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति ॥ | |
| प्रथमे पादे | १८ | ऽऽ।।ऽऽऽ।।ऽऽ | पुंसां कलिकालव्यालहतानां नान्यत्प्रपद्दनिरस्त्यपि । |
| द्वितीये | १२ | ऽ।।।।ऽऽऽ | वीर्य्यविपुला सुखे चेत् स्याद्गोविन्दाख्यमन्त्रकला ॥ |
| तृतीये | १४ | ऽ।।।ऽ।ऽऽऽ | अत्र द्वितीयचरणान्तलघोर्गुरुत्वम् । |
| चतुर्थे | १३ | ऽऽऽ।ऽ।।ऽ | पूर्व्वपरार्द्धयोर्द्वादशमात्रां संलङ्घ्य यतिः ॥ |
| चपला | | द्वयोर्द्वितीयतुर्य्यौ गणौ जकारौ तु यत्र चपला सा । | |
| प्रथमे पादे | १२ | ।।ऽ।ऽ।ऽऽ | चपला न चेत् कदाचिन्मतिर्भवेद्भक्तिभावना कृष्णे । |
| द्वितीये | १८ | ।ऽ।ऽऽ।ऽ।ऽऽऽ | धर्म्मार्थकाममोक्षास्तदा करस्था न सन्देहः ॥ |
| तृतीये | १२ | ऽऽ।ऽ।ऽऽ | |
| चतुर्थे | १५ | ।ऽ।ऽऽ।ऽऽऽ | |
| मुखचपला | | आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः ।<br>शेषः पूर्व्वजलक्ष्मा मुखचपला सोदिता मुनिना ॥ | |
| प्रथमे पादे | १२ | ऽ।।।ऽ।ऽऽ | नन्दसुत ! चञ्चलत्वं दृढं न ते प्रेम गच्छ तत्रैव । |
| द्वितीये | १८ | ।ऽ।ऽऽ।ऽ।ऽऽऽ | यत्र भवति ते रागः कापि जगादेति मुखचपला ॥ |
| तृतीये | १२ | ऽ।।।।ऽऽऽ | अत्र द्वितीयपदान्तलघोर्गुरुत्वम् ॥ |
| चतुर्थे | १५ | ऽ।।ऽऽ।।।।।ऽ | |

# छन्दः

<table>
<tr><th>छन्दसां वृत्तिनामानि।</th><th></th><th>छन्दसां लक्षणानि।</th><th>छन्दसामुदाहरणानि।</th></tr>
<tr><td>जघनचपला</td><td></td><td>प्राक्प्रतिपादितमर्द्धे प्रथमे प्रथमेतरे च चपलायाः।<br>लक्षणाश्रयेण सोक्ता विशुद्धधीभिर्जघनचपला॥</td><td></td></tr>
<tr><td>प्रथमे चरणे</td><td>१२</td><td>ऽऽऽऽ||ऽ</td><td>लब्धः शृङ्गारपटुर्यौवनमदचञ्चलः सुललिताङ्गः।</td></tr>
<tr><td>द्वितीये</td><td>१८</td><td>ऽ||||ऽ|ऽ|||ऽऽ</td><td>आसीद्व्रजाङ्गनानां मनोहरो जघनचपलानाम्॥</td></tr>
<tr><td>तृतीये</td><td>१२</td><td>ऽऽ|ऽ|ऽऽ</td><td></td></tr>
<tr><td>चतुर्थे</td><td>१५</td><td>|ऽ|ऽ|||||ऽऽ</td><td></td></tr>
<tr><td>गीतिः</td><td></td><td>आर्याप्रथमार्द्धसमं यस्या अपरार्द्धमाह तां गीतिम्।</td><td></td></tr>
<tr><td>प्रथमे चरणे</td><td>१२</td><td>ऽ||ऽऽऽऽ</td><td>केशववंशीगीतिर्लोकमनोहारिणी हारिणी जयति।</td></tr>
<tr><td>द्वितीये</td><td>१८</td><td>ऽ||ऽ|||ऽ|ऽ||ऽ</td><td>गोपीमानग्रन्थिविमोचनी दिव्यगायनाचार्या॥</td></tr>
<tr><td>तृतीये</td><td>१२</td><td>ऽऽऽऽऽऽ</td><td>अत्र द्वितीयचरणान्तलघोर्गुरुत्वम्॥</td></tr>
<tr><td>चतुर्थे</td><td>१८</td><td>|ऽ|ऽऽ|ऽ|ऽऽऽ</td><td></td></tr>
<tr><td>उपगीतिः</td><td></td><td>आर्यापरार्द्धतुल्ये दलद्वये प्राहुरुपगीतिम्।</td><td></td></tr>
<tr><td>प्रथमे चरणे</td><td>१२</td><td>||ऽ|ऽ|ऽऽ</td><td>नवगोपसुन्दरीणां रासोल्लासे मुरारातिम्।</td></tr>
<tr><td>द्वितीये</td><td>१५</td><td>ऽऽऽऽ|ऽऽऽ</td><td>अस्मारयदुपगीतिः स्वर्गाङ्गनाक्रीडयां गीतिम्॥</td></tr>
<tr><td>तृतीये</td><td>१२</td><td>ऽऽ||||ऽऽ</td><td></td></tr>
<tr><td>चतुर्थे</td><td>१५</td><td>ऽ||ऽऽ|ऽऽऽ</td><td></td></tr>
<tr><td>उद्गीतिः</td><td></td><td>आर्याशकलद्वितये विपरीते पुनरिहोद्गीतिः।</td><td></td></tr>
<tr><td>प्रथमे चरणे</td><td>१२</td><td>ऽऽ|ऽ|ऽ||</td><td>नारायणस्य सन्ततमुद्गीतिः संस्मृतिर्भक्त्या।</td></tr>
<tr><td>द्वितीये</td><td>१५</td><td>ऽऽऽऽ|ऽऽऽ</td><td>अर्चायामासक्तिर्दुस्तरसंसारसागरे तरणिः॥</td></tr>
<tr><td>तृतीये</td><td>१२</td><td>ऽऽऽऽऽऽ</td><td></td></tr>
<tr><td>चतुर्थे</td><td>१८</td><td>ऽ||ऽऽ|ऽ|ऽ||ऽ</td><td></td></tr>
<tr><td>आर्यागीतिः</td><td></td><td>आर्याप्रागदलमन्तेऽधिकगुरु तादृगपरार्द्धमार्यागीतिः।</td><td></td></tr>
<tr><td>प्रथमे चरणे</td><td>१२</td><td>ऽऽऽ||||ऽ</td><td>हर्षाश्रुस्तिमितदृशः प्रमोदरोमाञ्चकञ्चुकाञ्चितदेहाः।</td></tr>
<tr><td>द्वितीये</td><td>२०</td><td>|ऽ|ऽऽ|ऽ|ऽ||ऽऽ</td><td>आर्यागीतिं भक्त्या गायन्ति श्रीपतेश्चरितसम्बद्धाम्॥</td></tr>
<tr><td>तृतीये</td><td>१२</td><td>ऽऽऽऽऽऽ</td><td>लघुगुरुविपर्ययरूपप्रस्तारभेदेन बहुविधा आर्या भवन्ति॥</td></tr>
<tr><td>चतुर्थे</td><td>२०</td><td>ऽऽऽऽ|ऽ|||ऽऽऽ</td><td></td></tr>
<tr><td>पूर्वार्द्धे त्रिंशत्याश्चतुर्विंशत्या वा मात्राणां परार्द्धे सप्तविंशतिमात्रायां परे लघुवर्णचतुष्टये सति प्रथमं द्वितीयं वा लघ्वक्षरं प्राप्य आर्यायाः सामान्येन यतिनियमः॥</td><td></td><td></td><td></td></tr>
<tr><td>वैतालीयम्। अपरवक्त्रमित्येके।</td><td></td><td>षड् विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तरा।<br>न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः॥</td><td></td></tr>
<tr><td>प्रथमे चरणे</td><td>१४</td><td>||ऽ||ऽ|ऽ|ऽ</td><td>कुसुमेन मदेन वर्धितं तव यन्निन्दति राधिके कुचम्।</td></tr>
<tr><td>द्वितीये</td><td>१६</td><td>||ऽऽ||ऽ|ऽ|ऽ</td><td>मदमातनुतेऽत्र पश्चिमं तद्वैतालीयं फलं हरेः॥</td></tr>
<tr><td>तृतीये</td><td>१४</td><td>||ऽ||ऽ|ऽ|ऽ</td><td>लघुगुरुव्यत्ययेनापि बहुधा भवति॥</td></tr>
<tr><td>चतुर्थे</td><td>१६</td><td>ऽऽऽऽऽ|ऽ|ऽ</td><td></td></tr>
<tr><td>औपच्छन्दसकम्</td><td></td><td>तत्रैवान्तेऽधिके गुरौ स्यादौपच्छन्दसकं कवीन्द्रहृद्यम्।</td><td></td></tr>
<tr><td>प्रथमे चरणे</td><td>१६</td><td>ऽऽऽऽ|ऽ|ऽऽ</td><td>आतन्वानं सुरारिकान्ताखौपच्छन्दसकं मुदा विनोदम्।</td></tr>
<tr><td>द्वितीये</td><td>१८</td><td>ऽऽऽ||ऽ|ऽ|ऽऽ</td><td>कंसं यो निर्जघान देवो वन्दे तं जगतां स्थितिं दधानम्॥</td></tr>
<tr><td>तृतीये</td><td>१६</td><td>ऽऽऽऽ|ऽ|ऽऽ</td><td></td></tr>
<tr><td>चतुर्थे</td><td>१८</td><td>ऽऽऽ||ऽ|ऽ|ऽऽ</td><td></td></tr>
<tr><td>इतद्वैतालीयभेदः॥</td><td></td><td></td><td></td></tr>
</table>

| छन्दसां वृत्तिनामानि । | | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|---|
| पज्झटिका | | प्रतिपदयमकितषोडशमात्रा नवमगुरुत्वविभूषितगात्रा । पज्झटिकापुनरत्र विवेकः क्वापि न मध्यगुरुर्गण एकः ॥ | |
| प्रथमे चरणे | १६ | ।।।।ऽऽऽऽऽऽ | तरलवतंसाश्लिष्टस्कन्धश्चलतरपज्झटिकाकटिबन्धः । |
| द्वितीये | १६ | ।।।।ऽ।।ऽ।।ऽऽ | मौलिचपलशिखिचन्द्रकचन्द्रः कालियशिरसि ननर्त मुकुन्दः ॥ |
| तृतीये | १६ | ऽ।।।।।।ऽ।।ऽऽ | इयं प्रतिपदयमकितषोडशमात्रा लघुगुरुव्यत्ययेनापि बहुधा । |
| चतुर्थे | १६ | ऽ।।।।।।ऽ।।ऽऽ | अस्या नवमी मात्रा च कदाचित् लघ्वी भवति ॥ |
| दोधकिका | | मात्रा त्रयोदशकं यदि पूर्व्वं लघुकविरामि । पश्चादेकादशकन्तु दोधकिका विगुणेन ॥ | |
| प्रथमे चरणे | १३ | ऽऽऽ।।।।।।। | माई दोधकिपठन सुनि चलिओ काह्न गोआल । |
| द्वितीये | १३ | ऽ।ऽऽ।ऽऽ। | वृन्दावनघनकुञ्ज चलिओ कमलरसाल ॥ |
| तृतीये | ११ | ऽऽ।।।।ऽ। | अस्यार्थः । हे मातः ! दोधकिकापाठं श्रुत्वा कृष्णो |
| चतुर्थे | ११ | ।।ऽ।।।।ऽ। | गोपालो हसित्वा कमपि रसालं चलितः कुत्र वृन्दावनघनकुञ्जे वृन्दावनस्य निविडनिकुञ्जे । राई इति क्वचित् पाठः तत्पक्षेन राधिकाया दोधकिकापाठं श्रुत्वा ॥ |
| अस्या अन्त्या मात्रा लघ्वी अपभ्रंशभाषया प्रचारः ॥ | | | गुरुलघुव्यत्ययेन बहुधा भवति ॥ |
| इति मात्रावृत्तानि समाप्तानि ॥*॥ | | | |

अत्र समवृत्तानि (२४७) सप्तचत्वारिंशदधिकं द्विशतं, अर्द्धसमवृत्तानि (१५) पञ्चदश, विषमवृत्तानि (७) सप्त, मात्रावृत्तानि च (१५) पञ्चदश, समुदायेन (२८४) चतुरशीत्यधिकद्विशतसंख्यकानि छन्दांसि लिखितानीति ॥ * ॥

छन्दकपातनः, पुं, ( छन्दकेन छद्मना पातयति लोकानिति । पत्+णिच्+ल्युः । ) छद्मतापसः । इति जटाधरः ॥

छन्दोगः, पुं, (छन्दो वेदविशेषं सामेत्यर्थः गायतीति । गै+"गापोष्टक् ।" ३।२।८। इति टक् ।) सामगः । सामवेदी । इति जटाधरः ॥ (यथा, मनुः । ३ । १४५ ।
"यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम् ।
शाखान्तगमथाध्वर्य्युं छन्दोगन्तु समाप्तिकम् ॥")

छन्दोगपरिशिष्टं, क्ली, ( छन्दोगेन सामगेन कात्यायनेन मुनिनेत्यर्थः । प्रणीतं यत् परिशिष्टम् । यद्वा, छन्दोगेभ्यः कृतं परिशिष्टम् ।) कात्यायनमुनिकृतं सामवेदिकर्म्मबोधकगोभिलसूत्राणां परिशेषशास्त्रम् । इति स्मृतिः ॥

छन्दोविचितिः, स्त्री, ( छन्दसां विचितिर्यत्र । ) श्रुतिच्छन्दसां प्रत्यायकं शास्त्रम् । इत्यमरटीकायां भरतः ॥ (यथा, बृहत्संहितायाम् । १०४ । ६४ ।
"विपुलामपि बुद्ध्वा छन्दोविचितिं भवति कार्य्यमेतावत् ।
श्रुतिसुखवृत्तसंग्रहमिममाह वराहमिहिरो-ऽतः ॥")

छन्नं, क्ली, (छद्+क्तः ।) रहः । निर्जनस्थानम् । इति मेदिनी । ने, ५ ॥

छन्नः, त्रि, ( छद्+क्तः । ) छादितः । इति मेदिनी । ने, ५ ॥ (आवृतः । यथा, महाभारते । ३ । २० । २४ ।
"न हया न रथो वीर ! न यन्ता मम दारुकः ।
अदृश्यन्त शरैश्छन्नास्तथाहं सैनिकाश्च मे ॥")
रहः । इत्यमरः । २ । ८ । २२ ॥

छप, द क सर्पे । इति कविकल्पद्रुमः ॥ ( चुरां-परं-सकं-सेट् ।) द क, छम्पयति । सर्पो गतिः । इति दुर्गादासः ॥

छम, उ भक्षे । इति कविकल्पद्रुमः । ( भ्वां-परं-सकं-सेट् । उदित्वात् क्त्वावेट् । ) छमति । उ, छमित्वा छान्त्वा । इति दुर्गादासः ॥

छमण्डः, पुं, (छमति भक्षयति जनकपक्षयोरन्तरं पितरं नाशयतीत्यर्थः । छम+बाहुलकादण्डन् ।) मृतपितृकः । इत्युणादिकोषः ॥ छैमड़ा इति भाषा ॥ बन्धुहीनः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

छर्द्द, क वमने । इति कविकल्पद्रुमः । (चुरां-परं-सकं-सेट् ।) वमनं वान्तिः । क, छर्द्दयति अन्नं लोकः । इति दुर्गादासः ॥ ( तथाच, महाभारते । ५ । ८६ । ४२ ।
"स्वपन्ति च प्रवन्ति च छर्द्दयन्ति च मानवाः ॥")

छर्द्द, स्त्री, ( छर्द्द+भावे घञ् । ) वमनम् । इति हेमचन्द्रः । ३ । १३३ ॥

छर्द्दनं, क्ली, ( छर्द्द+भावे ल्युट् । ) वमनम् । इति हेमचन्द्रः ॥ (यथा, सुश्रुते । ४ । १० ।
"तत्रासु मदनालाबुबिम्बीकोशातकीफलैः ।
छर्द्दनं दधुग्दन्धिभ्यामथवा तण्डुलाम्बुना ॥")

छर्द्दनः, पुं, (छर्द्दयति नरपश्वादिकं भक्षित्वा पुनरुद्गिरतीति । छर्द्द+ल्युः ।) अलम्बुषराक्षसः । (छर्द्दयति कटुगन्धेन उद्गिरत्यनेनेति । छर्द्द+ल्युट् । ) निम्बवृक्षः । इति हेमचन्द्रः ॥ मदनवृक्षः । इति भावप्रकाशः ॥

छर्द्दापनिका, स्त्री, ( छर्द्द वमनं आपयति प्रापयतीत्यर्थः । आप्+णिच्+ल्युः । ततः स्वार्थे कः । टापि अत इत्वञ्च । ) कर्कटी । इति राजनिर्घण्टः ॥

छर्द्दिः, स्त्री, ( छर्द्दयत्यनेनेति । छर्द्द वमने+इन् । ) वमिरोगः । वाँति इति भाषा ॥ तत्पर्य्यायः । प्रच्छर्द्दिका २ छर्द्दिम् ३ वमथुः ४ वमनम् ५ वमिः ६ । इति हेमचन्द्रः । ३ । १३३ ॥ छर्द्दिका ७ छर्द्दीका ८ वान्तिः ९ उद्गारः १० । इति राजनिर्घण्टः ॥ उत्कासिका ११ छर्द्दनम् १२ । इति शब्दरत्नावली ॥ तस्या निदानादि यथा,—
"दुष्टैर्दोषैः पृथक्सर्व्वैर्बीभत्सालोकनादिभिः ।
छर्द्दयः पञ्च विज्ञेयास्तासां लक्षणमुच्यते ॥
अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरति ।
अकाले चातिमात्रैश्च तथा सात्म्यैश्च भोजनैः ॥
श्रमाद्भयात्तथोद्वेगादजीर्णात् क्रिमिदोषतः ।
नार्य्याश्चापन्नसत्त्वायास्तथातिद्रुतमश्नतः ॥
बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात् ।
छादयन्नाननं वेगैरर्द्दयन्नङ्गभञ्जनैः ॥
निरुच्यते छर्द्दिरिति दोषो वक्त्रं प्रधावितः ॥"
तस्याः पूर्व्वरूपं यथा,—
"हृल्लासोद्गाररोधौ च प्रसेको लवणस्तनुः ।
द्वेषो भक्ते च पाने च वमीनां पूर्व्वलक्षणम् ॥"
वातजायास्तस्या रूपं यथा,—
"हृत्पार्श्वपीडामुखशोषशीर्ष-
नाभ्यर्त्तिकासस्वरभेदतोदैः ।
उद्गारशब्दप्रबलं सफेनं
विच्छिन्नकृष्णं तनुकं कषायम् ॥
कृच्छ्रेण चाल्पं महता च वेगे-
नार्त्तोऽनिलाच्छर्द्दयतीह दुःखम् ॥"
तस्याः पित्तजाया रूपं यथा,—
"मूर्च्छा पिपासा मुखशोषमूर्द्ध-
ताल्वक्षिसन्तापतमोभ्रमार्त्तः ।

पीतं भृशोष्णं हरितं सतिक्तं
धूम्रञ्च पित्तेन वमेत् सदाहम् ॥”
तस्याः श्लेष्मजाया रूपं यथा,—
“तन्द्रास्यमाधुर्य्यकफप्रसेक-
सन्तोषनिद्रारुचिगौरवार्त्तः ।
स्निग्धं घनं स्वादु कफाद्विशुद्धं
सलोमहर्षोऽल्परुजं वमेच्च ॥”
तस्यास्त्रिदोषजाया रूपं यथा,—
“शूलाविपाकारुचिदाहतृष्णा-
श्वासप्रमोहप्रबलाप्रसक्तम् ।
छर्द्दिस्त्रिदोषाल्लवणाम्लनील-
सान्द्रोष्णरक्तं वमतां नृणां स्यात् ॥”
असाध्याया लक्षणं यथा,—
“विट्स्वेदमूत्राम्बुवहानि वायुः
स्रोतांसि संरुध्य यदोर्द्ध्वमेति ।
उत्सन्नदोषस्य समाचितं तं
दोषं समुद्धूय नरस्य कोष्ठात् ॥
विण्मूत्रयोस्तत्समगन्धवर्णां
तृट्श्वासहिक्कार्त्तियुतां प्रसक्ताम् ॥
प्रच्छर्द्दयेद्दुष्टमिहातिवेगा-
त्तयार्द्दितश्चाशु विनाशमेति ॥”
आगन्तुजाया लक्षणं यथा,—
“वीभत्सजा दौर्हृदजामजा तु
असात्म्यजा या क्रिमिजा च या हि ।
सा पञ्चमी ताञ्च विभावयेच्च
दोषोच्छ्रयेणैव यथोक्तमादौ ॥”
क्रिमिजाया लक्षणं यथा,—
“शूलहृल्लासबहुला क्रिमिजा च विशेषतः ।
क्रिमिहृद्रोगतुल्येन लक्षणेन च लक्षिता ॥
क्षीणस्य या च्छर्द्दिरतिप्रसक्ता
सोपद्रवा शोणितपूययुक्ता ।
सचन्द्रिकां तां प्रवदेदसाध्यां
साध्याञ्चिकित्सेन्निरुपद्रवाञ्च ॥”
तस्या उपद्रवा यथा,—
“कासः श्वासो ज्वरो हिक्का तृष्णा वैचित्त्य-
मेव च ।
हृद्रोगस्तमकश्चैव ज्ञेयाश्छर्द्देरुपद्रवाः ॥”
इति माधवकरः ॥
तस्यौषधं यथा, गारुडे १८७ अध्याये ।
“अश्वगन्धाभया चैव उदकेन समं पिबेत् ।
हरीतकीकुष्ठचूर्णं कृत्वा आस्यञ्च पूरयेत् ॥
शीतं पीत्वाथ पानीयं सर्व्वच्छर्द्दिनिवारणम् ।
गुडूचीपद्मकारिष्टधन्याकं रक्तचन्दनम् ॥
पित्तश्लेष्मज्वरच्छर्द्दिदाहतृष्णाप्रमर्द्दनम् ॥”
अपिच ।
“बिल्वमूलस्य समधु गुडूचीक्वथितं जलम् ।
पीतं हरेच्च त्रिविधां छर्द्दिं वै नात्र संशयः ॥
पीता दूर्व्वा च्छर्द्दि नश्येत् पिष्टा तण्डुलवारिणा ॥”
इति च गारुडे १६४ अध्यायः ॥ * ॥
अथ छर्द्दिचिकित्सा ।
“आमाशयोत्क्लेशभवा हि सर्व्वा-
श्छर्द्द्यो मता लङ्घनमेव तस्मात् ।
विधीयते मारुतजां विना तु
संशोधनं वा कफपित्तहारि ॥”
अत्र च्छर्द्दीशब्दः ।
“हन्यात् क्षीरोदकं पीतं छर्द्दिं पवनसम्भवाम् ।
सुशामलकयूषो वा ससर्पिष्कः ससैन्धवः ॥
क्षीरोदकं नाशितस्य क्षीरस्योदकम् ।
गुडूचीत्रिफलानिम्बपटोलैः क्वथितं जलम् ।
पिबेत् मधुयुतं तेन छर्द्दिर्नश्यति पित्तजा ॥
हरीतकीनां चूर्णन्तु लिह्यान्माक्षिकसंयुतम् ।
अधोभागीकृते दोषे छर्द्दिः शीघ्रं निवर्त्तते ॥
विडङ्गत्रिफलाविश्वाचूर्णं मधुयुतं पिबेत् ।
विडङ्गप्लवशुण्ठीनां चूर्णं वा कफजां वमिम् ॥
प्लवं केवर्त्तीमुस्तं गुड़लक्षी इति लोके ।
पिष्ट्वा धात्रीफलं लाजान् शर्कराञ्च पलोन्मिताम् ।
दत्त्वा मधुपलञ्चापि कुड़वं सलिलस्य च ॥
वाससा गालितं पीतं हन्ति छर्द्दिं त्रिदोषजाम् ।
गुडूच्या रचितं हन्ति हिमं मधुसमन्वितम् ॥
दुर्निवारामपि छर्द्दिं त्रिदोषजनितां बलात् ॥
एलालवङ्गगजकेशरकोलमज्जा-
लाजाप्रियङ्गुघनचन्दनपिप्पलीनाम् ।
चूर्णानि माक्षिकसितासहितानि लीढ्वा
छर्द्दिं निहन्ति कफमारुतपित्तजाताम् ॥
इति एलादिचूर्णम् ॥
अश्वत्थवल्कलं शुष्कं दग्धं निर्व्वापितं जले ।
तज्जलं पानमात्रेण छर्द्दिं जयति दुर्ज्जयाम् ॥
यथा त्रिकटुधान्याकजीरकाणां रजो लिहन् ।
मधुना नाशयेच्छर्द्दिमरुचिञ्च त्रिदोषजाम् ॥
बिल्वत्वचो गुडूच्या वा क्वाथः क्षौद्रेण संयुतः ।
छर्द्दिं त्रिदोषजां हन्ति पर्पटः पित्तजां तथा ॥
आम्रास्थिबिल्वनिर्यूहः पीतः समधुशर्करः ।
निहन्याच्छर्द्द्यतीसारं वैश्वानर इवाहुतिम् ॥
निर्यूहः क्वाथः ।
जम्ब्वाम्रपल्लवकृतं लाजरजःसंयुतं शीतम् ।
शमयति मधुना युक्तं वमिमतिसारं च यापि-
सुग्राम् ॥
वीभत्सजां हृद्यतमैरिष्टैर्हृद्यैर्दौर्हृदजां फलैः ।
लङ्घनैरामजां छर्द्दिं जयेत् सात्म्यै रसात्मजाम् ॥
क्रिमिहृद्रोगवच्चात्र क्रिमिं क्रिमिसमुद्भवाम् ।
तत्र तत्र यथा दोषं क्रियां कुर्य्याच्चिकित्सकः ॥
इति छर्द्द्यधिकारः ।” इति भावप्रकाशः ॥
छर्द्दिः, [स्] स्त्री, ( छर्द्दयति छर्द्द्यते इति वा ।
छर्द्द वमने + “अर्च्चिशुचिहुसृपिच्छादिच्छर्द्दिभ्य
इसिः ।” उणां । २ । १०८ । इति इसिः । )
वमिः । इत्युणादिकोषः ॥ ( यथा, चरके
चिकित्सास्थाने २६ अध्याये ।
“तदग्निवेशस्य वचो निशम्य
प्रीतो भिषक्श्रेष्ठ इदं जगाद ।
छर्द्दीर्विपञ्चेह पुरोदितानि
विस्तारतस्तानि निबोध सम्यक् ॥”)
छर्द्दिका, स्त्री, (छर्द्दि + स्वार्थे कन् । स्त्रियां टाप् । यद्वा,
छर्द्दयतीति । छर्द्दि + ण्वुल् । टापि अत इत्वञ्च ।)
छर्द्दिः । विष्णुक्रान्ता । इति राजनिर्घण्टः ॥
छर्द्दिकारिपुः, पुं, (छर्द्दिकाया रिपुः नाशक इत्यर्थः ।)
सूक्ष्मैला । इति शब्दचन्द्रिका ॥
छर्द्दिघ्नः, पुं, (छर्द्दिं हन्तीति । हन् + टक् ।) निम्बवृक्षः ।
इति रत्नमाला ॥ (निम्बशब्देऽस्य विवरणं ज्ञेयम् ॥)
छलं, क्ली, (छो + वृषादित्वात् कलच् । यद्वा, छल +
अच् । ) स्खलितम् । शाठ्यम् । इति मेदिनी ।
ले, १७ ॥ ( यथा, मनुः । ८ । ४६ ।
“धर्म्मेण व्यवहारेण छलेनाचरितेन च ।
प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥”
व्याजः । यथा, मार्कण्डेये । २५ । १० ।
“सा वै मदालसा पुत्त्रं बालमुत्तानशायिनम् ।
उल्लापनच्छलेनाह रुदमानमविह्वरम् ॥”
तात्पर्य्यान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरेण
कथनम् । यथा, न्यायदर्शने । ५० ।
“वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ॥”
“अर्थस्य वाद्यभिमतस्य यो विकल्पो विरुद्धः
कल्पः अर्थान्तरकल्पनेति यावत् तदुपपत्त्या
युक्तिविशेषेण यो वचनस्य वाद्युक्तस्य विघातो
दूषणं तच्छलमित्यर्थः । वक्तृतात्पर्य्याविषयार्थ-
कल्पनेन दूषणाभिधानमिति फलितम् । तात्-
पर्य्याविषयत्वं विशेष्ये विशेषणे संसर्गे वा । यथा,
नेपालादागतोऽयं नवकम्बलत्वादित्यत्र नव-
संख्यापरत्वकल्पनयाऽसिद्ध्यभिधानम् । प्रमेयं
धर्म्मत्वादित्यत्र पुण्यत्वार्थकल्पनया भागासिद्ध्य-
भिधानम् । वह्निमान् धूमादित्यत्र धूमावयवे
व्यभिचाराभिधानम् । तत्त्रिविधम् । वाक्छलं
सामान्यच्छलमुपचारच्छलञ्च ॥” “छलं नाम
परिशठमर्थाभासमपार्थकं वाग्वस्तुमात्रमेव ।
तद्द्विविधं वाक्छलं सामान्यच्छलञ्च । तत्र वाक्-
छलं नाम यथा कश्चिद्ब्रूयात् नवतन्त्रोऽयं
भिषगिति भिषग् ब्रूयात नाहं नवतन्त्र एकतन्त्रो-
ऽहमिति । परो ब्रूयात् नाहं ब्रवीमि नव
तन्त्राणि तवेति अपितु नवाभ्यस्तं ते तन्त्रमिति
भिषग् ब्रूयात् न मया नवाभ्यस्तं तन्त्रं अनेक-
शोऽभ्यस्तं मया तन्त्रमिति । एतद्वाक्छलम् ।
सामान्यच्छलं नाम यथा, व्याधिप्रशमनायौषध-
मित्युक्ते परो ब्रूयात् सत् सत्प्रशमनायेति भवा-
नाह सन्रोगः सदौषधं यदि च सत्प्रशमनाय
भवति सत्कासः सत्क्षयः सत्सामान्यात् कासस्ते
क्षयप्रशमनाय भविष्यतीति एतत्सामान्य-
छलम् ॥” इति चरके विमानस्थाने अष्टमे
अध्याये ॥)
छल्लिः, स्त्री, ( छदं छादनं लातीति । ला +
बाहुलकात् किः ।) त्वक् । इति शब्दरत्नावली ॥
छाल इति भाषा ॥
छल्ली, स्त्री, (छदं छादनं लातीति । ला + किः ।
ततः कृदिकारादिति वा ङीष् ।) वीरुत् ।
सन्तानः । वल्कलम् । कुसुमविशेषः । इति
मेदिनी । ले, १८ ॥
छविः, स्त्री, ( छ्यति खण्डं करोति यद्वा
छ्यति छिनत्ति दूरीकरोति मालिन्यादिकमेषा-
मिति । छो + “कृविघृष्विच्छविस्थविकिकीदिवि ।”

उणां । ४।५६ । इति क्विप् प्रत्ययेन निपातनात् साधुः ।) शोभा । दीप्तिः । इत्यमरः । १।३।१७॥ (यथा, मेघदूते । ३५ ।
"भर्त्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः॥")
छष, ञ वधे । इति कविकल्पद्रुमः । (भ्वा-उभं-सर्क-सेट् ।) ञ, छषति छषते । अयं केश्चिन्न मन्यते । इति दुर्गादासः ।
छा, स्त्री, ( छद्+डः टाप् च ।) आच्छादनम् । इति मेदिनी । छे, १ ॥
छाः, पुं, (छाद्यते मातृपक्षाभ्यामसौ । छद्+"सर्व्वधातुभ्योऽसुन् ।" उणां ।४।१८८। इति असुन् ततः पृषोदरात् साधुः ।) शावकः । इत्येकाक्षरकोषः ॥
छागः, पुं, स्त्री, ( छ्यति छिद्यते देवबलये इति । छो+"छापूखडिभ्यः कित् ।" उणां । १।१२४। इति गन् ।) पशुविशेषः । तत्पर्य्यायः । वस्तः २ छगलकः ३ अजः ४ स्तुभः ५ । इत्यमरः । २ । ६ । ७६ ॥ छगः ६ छगलः ७ छागलः ८ तभः ९ स्तभः १० शुभः ११ । इति तट्टीका ॥ लघुकामः १२ क्रयसदः १३ वर्करः १४ पर्णभोजनः १५ लम्बकर्णः १६ मेनादः १७ बुक्कः १८ अल्पायुः १९ शिवाप्रियः २० । इति शब्दरत्नावली ॥ अबुकः २१ मेध्यः २२ पशुः २३ पयस्वलः २४ । तन्मांसगुणाः । लघुत्वम् । स्निग्धत्वम् । नातिशीतत्वम् । रुचिबलपुष्टिदातृत्वम् । निर्द्दोषत्वम् । वातपित्तनाशित्वम् । मधुरत्वञ्च । इति राजनिर्घण्टः ॥ शुक्रधातुसाम्यकारित्वम् । बृंहणत्वम् । स्निग्धत्वम् । मृदुत्वम् । अनभिष्यन्दित्वम् । नातुष्णत्वञ्च । इति राजवल्लभः ॥*॥ छागपोतमांसगुणाः । लघुत्वम् । शीतत्वम् । प्रमेहनाशित्वञ्च ॥ स्तनचारिच्छागस्य मांसगुणः । ईषल्लघुत्वम् । बलदातृत्वञ्च ॥ तन्मूत्रगुणाः । कटुत्वम् । उष्णत्वम् । रूक्षत्वम् । नाडीविषार्त्तिशोथोदरकफश्वासगुल्मशोफनाशित्वम् । लघुत्वञ्च । इति राजनिर्घण्टः ॥
"छागलो बर्करश्छागो बस्तोऽजश्चैलकः शुभः ।
छागमांसं लघु स्निग्धं स्वादुपाकं त्रिदोषनुत् ॥
नातिशीतमदाहि स्यात् स्वादु पीनसनाशनम् ।
परं बलकरं रुच्यं बृंहणं बलवर्द्धनम् ॥
अजाया अप्रसूताया मांसं पीनसनाशनम् ।
शुष्ककासेऽरुचौ शोषे हितमग्नेश्च दीपनम् ॥
अजासुतस्य बालस्य मांसं लघुतरं स्मृतम् ।
हृद्यं ज्वरहरं श्रेष्ठं सुस्वादु बलदं भृशम् ॥
मांसं निष्कासिताण्डस्य छागस्य कफकृद्गुरु ।
स्रोतःशुद्धिकरं बल्यं मांसदं वातपित्तनुत् ॥
वृद्धस्य वातलं रूक्षं तथा व्याधिमृतस्य च ।
ऊर्द्ध्वजत्रुविकारघ्नं छागमुण्डं रुचिप्रदम् ॥"
इति भावप्रकाशः ॥
(एतन्मांसं पितॄणां तृप्तिकरत्वात् श्राद्धाय देयम् । यथाह याज्ञवल्क्यः । १ । २५८ ।
"मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥"
छागमांसेन पितॄणां षण्मासान् यावत्तृप्तिः । यथाह मनुः । ३ । २६९ ।
"षण्मासान् छागमांसेन पार्षतेन च सप्त वै ॥"
भोजराजेन युक्तिकल्पतरौ एतत्परीक्षोक्ता । यथा,—
"गन्धमाल्यं विशेषेण नराणान्तु गणत्रयम् ।
तेषां शुभाय निर्द्दिष्टं पशुवस्तत्रयं बली ।
ये कृष्णाः शुभदश्छागाः पशवोऽन्ये तथैव च ।
देवतातिभिस्तद्वध्यास्ते सर्व्वार्थोपसिद्धये ॥
ये पीता हरिता वापि नरजातिरुदीरिता: ।
ये शुक्लाश्च महान्तो वा रत्नजातिः शुभप्रदाः ॥
यो मोहादथवाज्ञानाद्बलिमन्यं प्रयच्छति ।
वध एव फलं तस्य नान्यत् किञ्चित् फलं भवेत् ॥"
एतस्य पशोर्लक्षणादिकं विशेषतो वृहत्संहितायाम् ६५ अध्याये उक्तम् । यथा,—
"छागशुभाशुभलक्षण-
मभिधास्ये नवदशाष्टदन्तास्ते ।
धन्याः स्थाप्या वेश्मनि
सन्त्याज्याः सप्तदन्ता ये ॥
दक्षिणपार्श्वे मण्डल-
मसितं शुक्लस्य शुभफलं भवति ।
ऋष्यनिभकृष्णलोहित-
वर्णानां श्वेतमपि शुभदम् ॥
स्तनवदवलम्बते यः
कण्ठेऽजानां मणिः स विज्ञेयः ।
एकमणिः शुभफलकृ-
द्धन्यतमा द्वित्रिमणयो ये ॥
मुण्डाः सर्व्वे शुभदाः
सर्व्वसिताः सर्व्वकृष्णदेहाश्च ।
अर्द्धासिताः सितार्द्धा
धन्याः कपिलार्द्धकृष्णाश्च ॥
विचरति यूथस्याग्रे
प्रथमं चाम्भोऽवगाहते योऽजः ।
स शुभः सितमूर्द्धा वा
मूर्द्धनि वा टिक्किका यस्य ॥
पृषतकण्ठशिरा वा
तिलपिष्टनिभश्च ताम्रदृक् शस्तः ।
कृष्णचरणः सितो वा
कृष्णो वा श्वेतचरणो यः ॥
यः कृष्णाण्डः श्वेतो
मध्ये कृष्णेन भवति पट्टेन ।
यो वा चरति सशब्दं
मन्दञ्च स शोभनश्छागः ॥
ऋष्यशिरोरुहपादो
यो वा प्राक् पाण्डुरोऽपरे नीलः ।
स भवति शुभकृच्छागः
श्लोकश्चाप्यत्र गर्गोक्तः ॥
कुट्टकः कुटिलश्चैव जटिलो वामनस्तथा ।
ते चत्वारः श्रियः पुत्रा नालक्ष्मीके वसन्ति ते ॥
अथाप्रशस्ताः खरतुल्यनादाः
प्रदीप्तपुच्छाः कुनखा विवर्णाः ।
निकृत्तकर्णा द्विपमस्तकाश्च
भवन्ति ये चासिततालुजिह्वाः ॥
वर्णैः प्रशस्तैर्मणिभिश्च युक्ता
मुण्डाश्च ये ताम्रविलोचनाश्च ।
ते पूजिता वेश्मसु मानवानां
सौख्यानि कुर्व्वन्ति यशः श्रियञ्च ॥")
छागणः, पुं, (छगण एव । स्वार्थे अण् ।) करीषाग्निः । इति त्रिकाण्डशेषः ॥ घुँटेर आगुन इति भाषा ॥
छागभोजी, [न्] पुं, स्त्री, ( छागं भुङ्क्ते भक्षयतीति । भुज्+णिनिः ।) वृकः । इति राजनिर्घण्टः ॥ छागभक्षके, त्रि ॥
छागरथः, पुं, (छागः रथो वाहनमस्य ।) अग्निः । इति हेमचन्द्रः । ४ । १६३ ॥
छागलः, पुं, स्त्री, ( छगल एव इति प्रज्ञाद्यण् ।) छागः । इति राजनिर्घण्टः ॥ ( यथा, पञ्चतन्त्रे । ३ । ११७ ।
"बहुबुद्धिसमायुक्ताः सुविज्ञाना बलोत्कटान् ।
शक्ता वञ्चयितुं धूर्त्ता ब्राह्मणं छागलादिव ॥"
छगलस्य गोत्रापत्यं पुमान् इति । छगल+ "विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु ।" ४ । २ । ११७ । इति अण् । आत्रेय ऋषिभेदः । इति सिद्धान्तकौमुदी ॥ )
छागलकः, पुं, (छागल इव कायतीति । कै+कः ।) मत्स्यविशेषः । यथा,—
"श्वेतं सुपाकं समदीर्घहस्तं
निःशल्कमं छागलकं वदन्ति ।
गले द्विकण्टः किल तस्य पृष्ठे
कण्टः सुपथ्यो रुचिदो बलप्रदः ॥"
इति राजनिर्घण्टः ॥
( स्वार्थे कन् । ) छागलश्च ॥
छागलाद्यं, क्ली, ( छागल आद्यः प्रधानो यत्र । ) छागलादिघृतम् । तच्च वातरोगस्यौषधम् । यथा,
"आजं चर्म्मविनिर्म्मुक्तं त्यक्तशृङ्गखुरादिकम् ।
पञ्चमूलीद्वयञ्चैव जलद्रोणे विपाचयेत् ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ।
जीवनीयैः सयष्ट्याह्वैः क्षीरञ्चैव शतावरी ॥
छागलाद्यमिदं नाम्ना सर्व्ववातविकारनुत् ।
अर्द्दिते कर्णशूले च बाधिर्य्ये मूकमिन्मिने ॥
जडगद्गदपङ्गूनां खञ्जे गृध्रसिकुब्जयोः ।
अपतानेऽपतन्त्रे च सर्पिरेतत् प्रशस्यते ॥
पृथगष्टतुला पञ्चमूलद्वन्द्वाजमांसयोः ।
निःक्वाथ्य सलिलद्रोणे क्वाथे पादावशेषिते ॥"
इति स्वल्पच्छागलाद्यं घृतम् ॥ * ॥
घृतारम्भे मन्त्रः ।
"ओँ कालि वज्रेश्वरि अमुकस्य फलसिद्धं देहि वदवचनेन स्वाहा ।
स्नापयित्वा छागमादौ मधु दत्त्वा ललाटके ।
उदङ्मुखः प्राङ्मुखो वा भिषगेनमुपालभेत् ॥
छागमारणमन्त्रः ।
ओँ ह्रीं ओँ गाँ गणपतये स्वाहा ।
छागमांसतुलां गृह्य दशमूल्याः पलं शतम् ।
अश्वगन्धापलशतं बाट्यालकशतं तथा ॥
घृताढ़कं पचेत्तोयेऽष्टभागावशेषिते ।

क्षीरं चैकत्र दद्यात् शतावर्या रसं तथा ॥
साधयामि दृढ़े चैव शनैर्मृद्वग्निना पचेत् ।
अश्वगन्धस्य कल्कस्य प्रत्येकं शुक्तिसम्मितम् ॥
जीवन्ती मधुकं माषाकाकोल्यौ नीलमुत्पलम् ।
मुस्तं सचन्दनं रास्ना पर्णिनीद्वयशारिवे ॥
मेदे द्वे च तथा कुष्ठं जीवकर्षभकौ शटी ।
दार्व्वी प्रियङ्गु त्रिफला नतं तालीशपत्रकौ ॥
एलापत्रं वरीनागजातीकुसुमधान्यकम् ।
मञ्जिष्ठा दाडिमं दारु रेणुकं शैलवालुकम् ॥
विडङ्गं जीरकञ्चैव पेषयित्वा विनिक्षिपेत् ।
वस्त्रपूते च शीते च शर्करामष्टपलं शुभम् ॥
निधापयेत् स्निग्धभाण्डे आर्द्रे वा भाजने शुभे ।
अश्वगन्धस्य सिद्धस्य घृतस्य वीर्य्यमतःपरम् ॥
देवदेवं नमस्कृत्य संपूज्य गणनायकम् ।
पिबेत् पाणितलं तस्य व्याधिं वीक्ष्याशु-
पावकः ॥

सर्व्ववातविकारेषु अपस्मारे विशेषतः ।
उन्मादे पक्षघाते च आयामे कोष्ठनिग्रहे ॥
कर्णरोगे शिरोरोगे वाधिर्य्ये चापतन्त्रके ।
भूतोन्मादे च मूर्च्छायां मोहारे चाक्षिपातके ॥
पार्श्वशूले च कुक्कूले बाह्यायामाहितै तथा ।
वातकण्टककुब्जोगन्धमलञ्चे सपङ्गुके ॥
क्रोष्टुशीर्षे तथा खञ्जे कुब्जे चार्धाङ्ग चिक्किने ।
अपतानेऽन्तरायामे रक्तपित्ते तथोर्द्ध्वगे ॥
आमादौ शर्कोविकारेषु चातुर्थकज्वरेऽपि च ।
हनुग्रहे तथा शोथे क्षीणे चैवावबाहुके ॥
दण्डापतानके भग्ने दाहे चाक्षेपके तथा ।
जीर्णज्वरे विषे कुष्ठे शेफःस्तम्भे मदात्यये ॥
आढ्यवातेऽग्निमान्द्ये च वातरक्तादिषु च ।
एकाङ्गरोगिणी चैव तथा सर्व्वाङ्गरोगिणी ॥
हस्तकम्पे शिरःकम्पे जिह्वाकम्पे जड़े ऽथमे ।
चीर्णक्लिये नष्टशुक्रे शुक्रनिःसरणे तथा ॥
क्षीणां बालासपाते च पटले चाक्षिस्पन्दने ।
एकाङ्गस्पन्दने चैव सर्व्वाङ्गस्पन्दने तथा ॥
नगादिपतिते वाते क्षीणाममशिशिहितुके ।
चाक्षिवादिकदोषे च धनस्तम्भापकर्षणे ॥
ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः ।
शिरोमध्यगता ये च जङ्घापार्श्वविसंस्थिताः ॥
मालव्याभिभूतश्च शिशुर्येन विशुध्यति ।
प्रक्षीणबलमांसश्च न बलेगमनक्षमः ॥
घृतेनानेन सिध्यन्ति वक्षशुक्तिरिवासुरान् ।
निहन्ति सकलान् रोगान् घृतं परमदुर्लभम् ॥

रसायनं वह्निबलप्रदञ्च
वपुःप्रकर्षं विदधाति रूपम् ।
दन्तावलेन्द्रैव समानतेजा
दीर्घायुषं पुत्रशतं करोति ॥
क्षीणां शतं गच्छति वातिरेकं
न याति ग्लानिं करवः समाङ्गः ।
अपुत्रिणीपुत्रशतं करोति
शतायुषं कामसमं बलिष्ठम् ॥
अश्वद्युतं नाम तु छागलाद्यं
विनिर्म्मितं वातविकारदण्ड ।
शिवं शुभं रोगभयापहञ्च
चकार हारीतमुनिर्विशिष्टः ॥
छागालवह्निश्च पाके पुमांसं तत्र दापयेत् ।
मयूरी जम्बुकी छागी वीर्य्यहीनाः स्वभावतः ॥
भावितं काश्चिरागेन छागमेव नपुंसकम् ॥"
घृतम् १६ शेर । क्वाथार्थं छागमांसपलम् १०० ।
पाकार्थं जलं शं ६४ । शेषः शं १६ । विल्वादि-
दशमूलं प्रपलम् १० । जलं शं ६४ । शेषः
शं १६ । अश्वगन्धा १०० पलम् । जलं शं ६४ ।
शेषः शं १६ । वाट्यालकं १०० पलम् ।
जलं शं ६४ । शेषः शं १६ । दुग्धं शं १६ ।
शतमूलीरसः शं १६ । कल्कार्थं जीवन्त्या-
दीनां जीरकपर्य्यन्तानां कल्कद्रव्याणां प्रं तो ४ ।
वस्त्रपूते शीते शर्करा शं २ । इति द्रवच्छागलाद्यं
घृतम् । इति भैषज्यरत्नावली ॥
("छागमांसं तुलार्द्धं स्यात् दशमूलं तथापरम् ।
तोयद्रोणे पचेद्धीमान् यावत् स्यादंशशेषितम् ॥
तैलप्रस्थद्वयञ्चैव क्षीरञ्चैव शतावरी ।
जीवनीयं समधुकं बला रास्ना च शैलजम् ॥
मांसीत्वाङ्मेलतालीशनाशुकायवबालुकम् ।
पृथक् पृथक् समादाय सर्व्वमेकत्र साधयेत् ॥
मञ्जिष्ठालोध्रलाक्षा च प्रत्येकं कुड़वान्वितम् ।
आढ़कञ्च जलञ्चैव विधिना च विपाचयेत् ॥
छागलाद्यमिदं तैलं हारीतेन महात्मना ।
पाने वस्तौ तथाभ्यङ्गे भोज्ये चैव प्रशस्यते ।
सर्व्वज्वरगदं हन्ति सन्धिमज्जास्थिजन्तथा ॥"
इति छागलाद्यं तैलम् ॥
इति वैद्यकचक्रमालिकायां वातरोगाधिकारे ॥)

छागलान्त्रिका, स्त्री, (छागलान्त्री + संज्ञायां कन् । टापि पूर्व्वह्रस्वः ।) वृद्धदारकवृक्षः । इति राजनिर्घण्टः ॥

छागलान्त्री, स्त्री, (छागलं अन्तयतीति बाहुलकात् डक् ततो ङीप् ।) वृकः । इति राजनिर्घण्टः ॥

छागवाहनः, पुं, (छागेन आत्मानं वाहयतीति । वह + णिच् + ल्युः । यद्वा, छागो वाहनमस्य ।) अग्निः । इति त्रिकाण्डशेषः ॥

छागिका, स्त्री, (छागी + स्वार्थे कन् । ततः टापि पूर्व्वह्रस्वः ।) छागी । इति हेमचन्द्रः । ४।३४१ ॥

छागी, स्त्री, (छायते छिद्यते देवोपहारायेति । छो + "छापूखड़िभ्यः कित् ।" उणां ।१।१२४। इति गन् छागः ततः स्त्रियां जातौ ङीप् ।) छागमाता । बकरी इति मांटी इति च भाषा । तत्पर्य्यायः । अजा २ पयस्विनी ३ भीरुः ४ मेध्या ५ मनोज्ञनी ६ । इति राजनिर्घण्टः ॥ छागिका ७ मञ्जा ८ सर्व्वभक्ष्या ९ गलस्तनी १० । इति हेमचन्द्रः ॥ चुलुम्पा ११ । इति त्रिकाण्डशेषः ॥ सञ्जा १२ सुखविलुब्धिका १३ । इति शब्दरत्नावली ॥ तद्दुग्धगुणाः । मधुरत्वम् । शीतलत्वम् । ग्राहित्वम् । दीपनत्वम् । रक्तपित्तविकारक्षयकासनाशित्वञ्च । यथा, राजनिर्घण्टे ।
"अजानां लघुकायत्वाच्छागाद्यनिषेवनात् ।
नात्यम्बुपानात् व्यायामात् सर्व्वव्याधिहरं पयः ॥"
कषायत्वम् । लघुत्वम् । अतीसारज्वरनाशित्वञ्च । यथा, भावप्रकाशे ।
"छागं कषायं मधुरं शीतं ग्राहि पयो लघु ।
रक्तपित्तातिसारघ्नं क्षयकासज्वरापहम् ॥
अजानामल्पकायत्वात् कटुतिक्तादिभक्षणात् ।
स्तोकाम्बुपानाद्व्यायामात् सर्व्वरोगापहं पयः ॥"
तद्दधिगुणाः । उत्तमत्वम् । ग्राहित्वम् । लघुत्वम् । दोषत्रयापहत्वम् । श्वासकासार्शःक्षयकार्य्येषु शस्तत्वम् । दीपनत्वञ्च । इति भावप्रकाशः ॥ कफवातनेत्रदोषदुर्नामश्वासकासनाशित्वम् । उष्णत्वम् । बल्यत्वम् । पाचनत्वञ्च ॥ तन्नवनीतगुणाः । लघुत्वम् । मधुरत्वम् । कषायत्वम् । त्रिदोषनाशित्वम् । चक्षुष्यत्वम् । दीपनत्वम् । बल्यत्वम् । सदा हितत्वञ्च ॥ तत्रवोत्थनवनीतगुणाः । क्षयकासनेत्रामयकफनाशित्वम् । बल्यत्वम् । परमदीपनत्वञ्च ॥ तद्घृतगुणाः । चक्षुष्यत्वम् । दीपनत्वम् । बलवर्द्धनत्वम् । कासश्वासकफनाशित्वम् । राजयक्ष्मणि शस्तत्वञ्च । इति राजनिर्घण्टः ॥

छातः, त्रि, (छो + क्तः । "शाच्छोरन्यतरस्याम् ।" ७ । ४ । ४१ । इति विभाषायामित्वाभावः ।) छिन्नः । दुर्व्वलः । इत्यमरः । ३ । १ । १०३ ॥

छात्रं, क्ली, वरटीच्छत्रसम्भवं मधु । तस्य गुणाः । श्वित्रक्रिमिरोगरक्तपित्तनाशित्वम् । गुरुत्वञ्च । इति राजवल्लभः ॥
("वरटाः कपिलाः पीताः प्रायो हिमवतो वने ।
कुर्व्वन्ति छत्रकाकारं तज्जं छात्रं मधु स्मृतम् ॥"
छात्रं कपिलपीतं स्यात् पिच्छिलं शीतलं गुरु ।
स्वादुपाकं क्रिमिश्वित्ररक्तपित्तप्रमेहजित् ।
भ्रमतृण्मोहविषहृत् तर्पणञ्च गुणाधिकम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे द्वितीये भागे ॥)

छा(त्त)त्रः, पुं, (छत्रं गुरोर्दोषाच्छादनं तच्छीलमस्येति । "छत्रादिभ्यो णः ।" ४ । ४ । ६२ । इति णः ।) शिष्यः । इत्यमरः । २ । ७ । ११ ॥
(यथा, राजतरङ्गिण्याम् । ६ । ८७ ।
"भुभुजा दानशौण्डेन पैत्रिके स्थण्डिले कृतः ।
छात्राणामार्य्यदेशानां तेन विद्यार्थिनां मठः ॥")

छात्रकं, क्ली, (छात्र + स्वार्थे कन् ।) छात्रं मधु ।
यथा, राजनिर्घण्टे ।
"छत्राकारन्तु पटलं वरटाः पीतपिङ्गलाः ।
ये कुर्व्वन्ति तदुत्पन्नं मधु च्छात्रकमीरितम् ।
श्वित्रमेहक्रिमिघ्नञ्च विद्याच्छात्रं गुणोत्तरम् ॥"
अपिच भावप्रकाशे ।
"वरटाः कपिलाः पीताः प्रायो हिमवतो वने ।
कुर्व्वन्ति छत्रकाकारं तज्जं छात्रं मधु स्मृतम् ॥
छात्रं कपिलपीतं स्यात् पिच्छिलं शीतलं गुरु ।
स्वादुपाकं क्रिमिश्वित्ररक्तपित्तप्रमेहजित् ॥
भ्रमतृण्मोहविषहृत्तर्पणञ्च गुणाधिकम् ॥"

छात्रगण्डः, पुं, (छात्रो गण्ड इव ।) पदार्थवित् । विभक्त्यन्तस्य श्लोकपदस्य वा आदिमात्रवेत्ता ।

( अल्पमच्छायः । ) इति चारावली । २१६ ॥

छात्रदर्शनं, क्ली, ( छात्रं वरटीच्छत्रसदृशं मधु तदिव दृश्यते इति । दृश + कर्म्मणि ल्युट् । ) हैयङ्गवीनम् । इति शब्दचन्द्रिका ॥ (छात्राणां दर्शनम् ।) शिष्यावलोकनञ्च ॥

छादः, स्त्री, (छाद्यते गृहमनेनेति । छद + णिच् + करणे घञ् । छादयतीति । छद + णिच् + अच् वा ।) पटलम् । इति जटाधरः ॥ छात इति चाल इति च भाषा ॥

छादनं, क्ली, ( छद कि संवृतौ + णिच् + करणे ल्युट् । ) छदनम् । अन्तर्द्धानम् । (कर्त्तरि ल्युः ।) पत्रम् । इत्यमरटीकायां भरतः ॥ (भावे ल्युट् ।) आच्छादनम् । (यथा, हरिवंशे । ६१ । २५ ।
"नियोमपार्श्वे रावर्त्तैर्गम्भीरैस्तम्भसङ्कुलैः ।
छादनार्थं प्रकीर्णैश्च कण्टकैस्तृणसङ्कटैः ॥")

छादनः, पुं, (छादयति आवृणोति पत्रादिभिरिति । छादि + ल्युः । ) नीलाम्लानवृक्षः । इति राजनिर्घण्टः ॥

छादितः, त्रि, (छाद्यते स्मेति । छद + "वा दान्तशान्तेति ।" ७।२।२७ । इत्यागमात् साधुः । ) छन्नः । इति जटाधरः ॥ आच्छादितः । यथा,
"वनतरुवनकुञ्जैश्छादितौ पुष्पवन्तौ ॥"
इत्युद्भटः ॥

छान्दसः, पुं, ( छन्दो वेदं अधीते वेत्ति वा । छन्दस् + "तदधीते तद्वेद ।" ४ । २ । ५९ । इत्यण् । ) वेदाध्येता । इत्यमरः । २।७।६ ॥ ( छन्द एवेति । स्वार्थे अण् । वेदः ।
"मन्ये त्वां विषये वाचां स्नातमन्यत्र छान्दसात् ॥"
इति भागवते । १ । ४ । १३ ॥
त्रि, छन्दसो व्याख्यानस्तत्र भवः । "छन्दसो यदणौ ।" ४ । ३ । ७१ । इत्यण् । वेदभवः ॥ छन्दसोऽयम् ।"तस्येदम् ।"इत्यण् । वेदसम्बन्धी । स्त्रियान्तु ङीप् । यथा, हरिवंशे । २१५ । ७ ।
"छान्दसीभिरुदाराभिः श्रुतिभिः समलङ्कृतः ॥")

छान्दोग्यं, क्ली, (छन्दोगानां धर्म्मः आम्नायो वा । छन्दोग + "छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ।" ४ । ३ । १२९ । इति ञ्यः । ) सामवेदोपनिषत् । इति वैदिकसम्प्रदायः ॥ (यथा, मौक्तिकोपनिषदि १ अध्याये ।
"ऐतरेयञ्च छान्दोग्यं बृहदारण्यकन्तथा ॥")

छाया, स्त्री, (छ्यति छिनत्ति सूर्य्यादेः प्रकाशं नाशयतीत्यर्थः । छो + "माच्छाससिसूभ्यो यः ।" उणां । ४ । १०९ । इति यस्ततष्टाप् च । ) रौद्रशून्यम् । तत्पर्य्यायः । भावानुगा २ प्रशामा ३ अतेजः ४ भीरुः ५ अनातपः ६ आभीतिः ७ आतपाभावः ८ भावालीना ९ । अस्या गुणाः । मधुरत्वम् । शीतलत्वम् । दाहश्रमहरत्वञ्च । इति राजनिर्घण्टः ॥ घर्म्मनाशित्वम् । मेघच्छायागुणाः । श्रमभ्रममूर्च्छासन्तापनाशित्वम् । इति राजवल्लभः ॥ * ॥ छायाविशेषे दोषो यथा,—
"दीपखट्वातरुच्छाया छिन्नकेशनखादिकम् ।
अजमार्ज्जाररेणुश्च हन्ति पुण्यं पुराकृतम् ॥"
इति कर्म्मलोचनम् ॥ * ॥
(तत्तद्भेदेनास्या अरिष्टकारित्वं यथा,—
"ज्योत्स्नायामातपे दीपे सलिलादर्शयोरपि ।
अङ्गेषु विकृता यस्य छायाप्रेतस्तथैव सः ॥
छिन्ना भिन्नाकुला च्छाया हीना वाप्यधिकापि वा ।
नष्टा तन्वी द्विधा च्छाया विशिरा विकृता च या ॥
एताश्चान्याश्च याः काश्चित् प्रतिच्छाया विगर्हिताः ।
सर्व्वा मुमूर्षतां ज्ञेया नचेल्लक्ष्मनिमित्तजाः ॥
संस्थानेन प्रमाणेन वर्णेन प्रभया तथा ।
छाया विवर्त्तते यस्य स्वप्नेऽपि प्रेत एव सः ॥"
"खादीनां पञ्चपञ्चानां छाया विविधलक्षणाः ।
नाभसी निर्म्मला नीला सस्नेहा सप्रभेव च ॥
रूक्षा श्यावारुणा या तु वायवी सा हतप्रभा ।
विशुद्धरक्ता त्वाग्नेयी दीप्ताभा दर्शनप्रिया ॥
शुद्धवैदूर्य्यविमला सुस्निग्धा चाम्भसी मता ।
स्थिरा स्निग्धा घना श्लक्ष्णा श्यामा श्वेता च पार्थिवी ॥
वायवी गर्हिता त्वासां चतस्रः स्युः सुखोदयाः ।
वायवी तु विनाशाय क्लेशाय महतेऽपि वा ॥
स्यात्तैजसी प्रभा सर्व्वा सा तु सप्तविधा स्मृता ।
रक्ता पीता सिता श्यावा हरिता पाण्डुरासिता ॥
तासां याः स्युर्विकासिन्यः स्निग्धाश्च विपुलाश्च याः ।
ताः शुभा रूक्षमलिनाः संक्षिप्ताश्चाशुभोदयाः ॥
वर्णमाक्रामति च्छाया भास्तु वर्णप्रकाशिनी ।
आसन्ना लक्ष्यते च्छाया भाः प्रकृष्टा प्रकाशते ॥
नाच्छायो नाप्रभः कश्चिद्विशेषाश्चिह्नयन्ति तु ।
नृणां शुभाशुभोत्पत्तिं काले च्छायाः प्रभाश्रिताः ॥"
इतीन्द्रियस्थाने सप्तमेऽध्याये चरकेणोक्तम् ॥)
प्रतिबिम्बम् । (यथा, याज्ञवल्क्ये । ३ । २७९ ।
"मयि तेज इति च्छायां स्वां दृष्ट्वाम्बुगतां जपेत् ॥")
सूर्य्यपत्नी । सा संज्ञाप्रतिकृतिः । (यथा मत्स्यपुराणे । ११ । ५ ।
"नारीमुत्पादयामास स्वशरीरादनिन्दिताम् ।
त्वाष्ट्रीस्वरूपेण नाम्ना छायेति भामिनी तदा ॥")
पालनम् । उत्कोचः । कान्तिः । (यथा, मेघदूते । ३१ ।
"वेणीभूतप्रतनुसलिला तामतीतस्य सिन्धुः
पाण्डुच्छायातटरुहतरुभ्रंशिभिः शीर्णपर्णैः ॥")
सच्छोभा । पङ्क्तिः । इति मेदिनी । ये, २३ ॥ कात्यायनी । इति शब्दरत्नावली ॥ तमः । इति हेमचन्द्रः ॥ साहाय्यम् । यथा,—
"अङ्गादङ्गैर्मृषं जन्म आघ्राय शिशुकं हि ।
वस्त्रादिभिरलङ्कृत्य पुत्रच्छायावहं सुतम् ॥
पुत्रच्छाया पुत्रसाहाय्यम् ।" इति दत्तकचन्द्रिका ॥
(कर्णविंशत्यक्षरवृत्तिविशेषः । इति छन्दोमञ्जरी ॥ अस्य लक्षणादिकं छन्दःशब्दे द्रष्टव्यम् ॥)

छायाकरः, त्रि, (करोतीति । कृ + अच् । छायायाः करः । छायां करोतीति वा ।) छत्रधारः । इति हेमचन्द्रः ॥ छातावरदार इति भाषा ॥

छायातनयः, पुं, ( छायायाः सूर्य्यपत्न्यास्तनयः पुत्रः ।) शनिः । इति हलायुधः ॥

छायातरुः, पुं, (छायाप्रदः छायाप्रधानो वा तरुः । शाकपार्थिववत् मध्यपदलोपिसमासः । ) शिरच्छायवृक्षः । इति त्रिकाण्डशेषः ॥ (अस्य लक्षणं यदाह कश्चित् ।
"पूर्व्वाह्णे च पराह्णे च तलं यस्य न मुञ्चति ।
अत्यन्तशीतलच्छाया स च्छायातरुरुच्यते ॥"
यथा, मेघदूते । १ ।
"कश्चित् कान्ताविरहगुरुणा स्वाधिकारप्रमत्तः
शापेनास्तंगमितमहिमा वर्षभोग्येण भर्त्तुः ।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्य्याश्रमेषु ॥")

छायात्मजः, पुं, ( छायायाः सूर्य्यपत्न्या आत्मजस्तनयः । ) शनिग्रहः । इति त्रिकाण्डशेषः ॥

छायापथः, पुं, ( छाया मेघच्छाया तदभ्यन्तरः पन्थाः । छायायुक्तः पन्था इत्येके । ) देवपथः । आकाशः । इति त्रिकाण्डशेषः ॥

छायापुरुषः, पुं, ( छायायां दृष्टः पुरुषः पुरुषाकृतिविशेषः ।) आकाशे दृष्टः स्वीयच्छायारूप पुरुषः । यथा,—
श्रीदेव्युवाच ।
"भगवन् ! देवदेवेश ! सर्व्वागमविशारद ! ।
नराणां पापिनां लोके पापनिर्म्मोचनं कथम् ॥
कालज्ञानं कथं वा स्यात् सूक्ष्मोपायेन तद्वद ।
श्रुतानि साधनानीश ! मयानेकानि भूरिशः ॥
तथापि तानि मनुजैरशक्यान्यल्पबुद्धिभिः ।
प्रायेण मनुजा लोके कलौ स्वल्पायुषो ध्रुवम् ॥
अनेकवर्षसाध्येऽस्मिन् योगाभ्यासे ह्यशक्तयः ॥
शिव उवाच ।
साधु देवि ! त्वया पृष्टं लोकानां हितकाम्यया ।
तादृशं साधनं वक्ष्ये सर्व्वसाधारणं लघु ॥
गोपनीयं प्रयत्नेन न वाच्यं वै कथञ्चन ।
सिद्धाय भक्तियुक्ताय सेवकाय सुचेतसे ॥
पापिने क्रूरचेष्टाय भक्तिहीनाय भामिनि ! ।
न वदेद्यदि वा मोहात् वदेत् सिद्धिं न विन्दति ॥
तस्मात् परीक्ष्य वक्तव्यं शिष्याय ज्ञानिने शिवे ! ।
स्वच्छायापुरुषं पश्येद्गगने शुद्धमानसः ॥
तस्यावलोकनात् सद्यः पापराशिर्विनश्यति ।
महापातकसङ्घैश्च तत्समैश्चोपपातकैः ॥
विलुप्यते यथार्केण तूलराशिर्यथानलात् ।
कालज्ञानञ्च षण्मासे तस्मिन् दृष्टे भवेद्ध्रुवम् ॥
देव्युवाच ।
आतच्छायां कथं पश्येद्गगने भूतलस्थिताम् ।
षण्मासकालज्ञानञ्च तस्मिन् दृष्टे कथं भवेत् ॥
शिव उवाच ।
निरभ्रे गगने देवि ! यदा भवति निर्म्मलम् ।
तदा छायासुखो भूत्वा निश्चलं प्रयतो शिवा ॥

स्वच्छायां कथमालोक्य यद्गुरुक्तक्रमेण वै ।
सम्मुखं गगनं पश्येन्निर्निमेषैकधीः ॥
शुद्धस्फटिकसङ्काशः पुरुषस्तत्र दृश्यते ।
न दृश्यते यदा तत्र पुनस्तद्वत् परीक्षयेत् ॥
बहुधा दर्शनेनैव साक्षात्कारी भवेद् ध्रुवम् ।
कदाचिद् भाग्यतः पश्येद् यदि विष्णोऽखिलेश्वरः ।
भवत्येव न सन्देहो गुरुविश्वासतः शिवे ! ।
गुरुं सम्यक् पूजयित्वा पश्येच्छायां समाहितः ॥
तथा षण्मासपर्य्यन्तं मृत्युस्तस्य न विद्यते ।
शिरोहीनं यदा पश्येत् षण्मासाभ्यन्तरे मृतिः ॥
यदा पादौ न दृश्येते भार्य्याहानिर्न संशयः ।
न दृश्येते यदा पाणी भ्रातुर्हानिर्न संशयः ॥
एतज्ज्ञात्वा सुधीः सम्यक् गङ्गातीरं समाश्रयेत् ।
योगाभ्यासेन सततं प्राणायामेन संस्थितिः ॥
यथा वा सत्समीपस्थो लक्षं मृत्युञ्जयं जपेत् ।
यो न शक्तो हविष्याशी सततागतमानसः ॥
मृत्युञ्जयेन सन्देहो ह्यन्यथा मृत्युमृच्छति ।
यदा तु मलिनं पश्येत् ज्वरपीडा भवेत्तदा ॥
तस्य शान्तिं प्रकुर्व्वीत शिवसेवां समाश्रितः ।
रक्तवर्णं यदा पश्येदैश्वर्य्यं भवति ध्रुवम् ॥
मध्यच्छिन्नं यदा पश्येत् शत्रुघातो भवेत्तदा ।
एवं सन्दर्शनाद् देवि ! ज्ञानवान् भवति ध्रुवम् ॥
नारदाय पुरा प्रोक्तं मया पुरुषदर्शनम् ।
तत्प्रसादान्महायोगी भूत्वा लोकांश्चरत्यसौ ॥
स्वच्छायादर्शनं देवि ! कलौ पुरुषलक्षणम् ।
दीर्घायुः समवाप्नोति ज्ञानञ्चापि सुनिर्म्मलम् ॥”

इति योगप्रदीपिकायां उमामाहेश्वरसंवादे छायापुरुषलक्षणं नाम पञ्चमः पटलः ॥ * ॥

“ओम् अस्य श्रीच्छायापुरुषमन्त्रस्य ब्रह्मर्षि-र्हृद्गायत्री छन्दः छायादेवी देवता ह्रीं बीजं स्वाहा शक्तिः पुरुष इति कीलकं सर्व्व-सिद्धिसन्दर्शनसिद्ध्यर्थे जपे विनियोगः । ह्रामि-त्यादि षडङ्गन्यासः ॥ मायया मायया ओँ ओँ ह्रीँ माया शिवविचार्य्या अक्षयः ओँ ह्रीँ अं गां सरस्वति ओँ नमो भगवति भूतशरीर-मात्मानमाकाशे दर्शय दर्शय ह्रीँ ह्रीँ ह्रीँ ह्रीँ भैरवाय नमः स्वाहा । इति मन्त्रः ॥

पादाभावे च पुत्रं वा बाह्वभावे च बान्धवम् ।
आत्मानं शिरसोऽभावे सर्व्वाभावे कुलक्षयम् ॥
विशीर्णे विष्टते धृते कृष्णे धूमे च विज्वरम् ।
दुर्भिक्षं जायते घोरं कज्जले च पराङ्मुखे ॥
संपूर्णे च सुखे लक्षे क्षेमलाभं सुचिह्नये ।
हीने रक्ते जये प्रीते उग्रे मृत्युर्न संशयः ॥
पतिभीतिं प्रवासमिति वेदविदो विदुः ।
मृत्युञ्जयं जपन्नेव शान्तिस्तस्य विधीयते ॥
षण्मासे मरणं तस्य शीर्षाद्यभावे विदुः ॥

अथ मृत्युञ्जययन्त्रम् ।
“प्रथमं प्रणवमालिख्य तन्मध्ये साध्यनामकम् ।
बहिरष्टदलं पद्मं यन्त्रान्तं वसुपत्रके ॥
विलेखेत् सहकारेण केशरेषु सुशोभितम् ।
तद्बहिश्चक्ररत्नं स्यात् षोडशाक्षरकं लिखेत् ॥
द्वारं भूपुरमालिख्य चतुर्द्वारेण वायवम् ।
पार्थिवश्च चतुष्कोणं यन्त्रं मृत्युञ्जयं भवेत् ॥
ज्वरादिसर्व्वरोगादिदाहशान्तिकरं परम् ।
मृत्युञ्जयं महायन्त्रं सर्व्वरक्षाकरं शुभम् ॥”

अथ ध्यानम् ।
“चन्द्रार्काग्निविलोचनं स्मितमुखं पद्मद्वयान्तः-स्थितं
मुद्रापाशमृगाक्षसूत्रविलसत्पाणिं हिमांशु-प्रभम् ।
कोटीरेन्दुगलत्सुधाप्लुततनुं हारादिभूषोज्ज्वलं
कान्त्या विश्वविमोहनं पशुपतिं मृत्युञ्जयं भावयेत् ॥ * ॥
गत्वा तालगुरुं शिवं प्रणमतिं मन्त्रं जपेत् सर्व्वदा ।
खे लक्षेत् सततं विलोकनपरां मुक्तिं रवौ प्रत्यहम् ॥
खे विलोकनमन्त्रस्तु ।
ओँ ह्रीँ भूचरी खेचरी आत्मानमाकाशे दर्शय सर्व्वतत्त्वं कथय कथय हुं फट् स्वाहा ।
यः पश्येत् सर्व्वगं शान्तमात्मानं सत्यमद्वयम् ।
न तेन किञ्चिद्ज्ञातव्यं ज्ञातव्यं नावशिष्यते ॥”

इति योगप्रदीपिकायां छायापुरुषोपदेशो नाम षष्ठः पटलः ॥

छायाव्यवहारः, पुं, ज्योतिःशास्त्रोक्ताङ्कविशेषः । अथ छायाव्यवहारे करणसूत्रं वृत्तम् ।
“छाययोः कर्णयोरन्तरे ये तयो-
र्व्वर्गविश्लेषभक्ता रसाद्रीषवः ।
सैकलब्धेः पदघ्नं तु कर्णान्तरं
भान्तरेणोनयुक्तं दले स्तः प्रभे ॥

उदाहरणम् ।
नन्दचन्द्रैर्मितं छाययोरन्तरं
कर्णयोरन्तरं विश्वतुल्यं ययोः ।
ते प्रभे वक्ति यो युक्तिमान् वेत्त्यसौ
व्यक्तमव्यक्तयुक्तं हि मन्येऽखिलम् ॥

न्यासः

छा $\frac{७}{२}$ छाया $\frac{४५}{२}$

छायान्तरम् ।१९। कर्णान्तरम् ।१३। अनयो-र्व्वर्गान्तरेण ।१९२। भक्ता रसाद्रीषवः ।५७६। लब्धम् ।३। सैकस्यास्य ।४। मूलम् ।२। अनेन कर्णान्तरम् ।१३। गुणितम् ।२६। द्विष्ठम् ।२६। भान्तरेण ।१९। ऊनयुते ।७।४५। तदर्द्धे लब्धे छाये $\frac{७}{२}$ $\frac{४५}{२}$ तत्शङ्को-र्व्वर्गयोगपदमित्यादिना जातौ कर्णौ $\frac{२५}{२}$ $\frac{५१}{२}$

छायान्तरे करणसूत्रं वृत्तार्द्धम् ।
शङ्कुः प्रदीपतलशङ्कुतलान्तरघ्न-
श्छाया भवेद्विनरदीपशिखौच्च्यभक्तः ।

उदाहरणम् ।
शङ्कुप्रदीपान्तरभूस्त्रिहस्ता
दीपोच्छ्रितिः सार्द्धकरत्रया चेत् ।
शङ्कोस्तदार्काङ्गुलसम्मितस्य
तस्य प्रभा स्यात् कियती वदाशु ॥

न्यासः $\frac{७}{२}$ दीपोच्छ्रितिः शङ्कुः $\frac{१}{२}$

भूः ३ छाया $\frac{१}{२}$ शङ्कुः $\frac{१}{२}$ प्रदीपशङ्कुतलान्तरम् ३

अनयोर्घातः $\frac{३}{२}$ विनरदीपशिखौच्च्येन ।३। भक्तो लब्धानि छायाङ्गुलानि ।१२।

अथ दीपोच्छ्रित्यानयनाय करणसूत्रं वृत्तार्द्धम् ।
छायाहृते तु नरदीपतलान्तरघ्ने
शङ्कौ भवेन्नरयुते खलु दीपकौच्च्यम् ।

उदाहरणम् ।
प्रदीपशङ्क्वन्तरभूस्त्रिहस्ता
छायाङ्गुलैः षोडशभिः समा चेत् ।
दीपोच्छ्रितिः स्यात् कियती वदाशु
प्रदीपशङ्क्वन्तरमुच्यतां मे ॥

न्यासः शङ्कुः $\frac{१}{२}$

भूः ३ छाया $\frac{२}{३}$

शङ्कुः ।१२। छायाङ्गुलानि ।१६। शङ्कु-प्रदीपान्तरहस्ताः ।३। लब्धं दीपकौच्च्यं हस्ताः $\frac{११}{४}$

प्रदीपशङ्क्वन्तरभूमानानयनाय करणसूत्रं वृत्तार्द्धम् ।
विशङ्कुदीपोच्छ्रयसंगुणा भा
शङ्कूद्धृता दीपनरान्तरं स्यात् ॥

उदाहरणम् । पूर्व्वोक्त एव दीपोच्छ्रायः $\frac{११}{४}$

शङ्कुङ्गुलानि ।१२। छाया ।१६। लब्धाः शङ्कुप्रदीपान्तरहस्ताः ।३।

छायाप्रदीपान्तरदीपौच्च्यानयनाय करणसूत्रं सार्द्धवृत्तम् ।
छायाग्रयोरन्तरसंगुणाभा
छायाप्रमाणान्तरहृद्भवेद्भूः ।

भूघ्नकुघ्नात: प्रभया विभक्त:
प्रजायते दीपशिखौच्यमेवम् ॥
त्रैराशिकेनैव यदेतदुक्तं
व्याप्तं स्वभेदैर्हरिणेव विश्वम् ॥

उदाहरणम् ।
शङ्कोर्भार्कमिताङ्गुलस्य सुमते! दृष्टा किलाष्टाङ्गुला
छायाग्निमिताङ्गुलं वदकरमिते त्वन्तरे तस्य पुन:।
तस्यैवार्कमिताङ्गुला यदि तदा छायाप्रदीपान्तरं
दीपौच्च्यञ्च कियद्वद व्यवहृतिं छायाभिधां वेत्सि
चेत् ॥

न्यास:

भू: $\frac{१३}{२}$ छा $\frac{१}{२}$ भू: २ छा $\frac{१}{२}$

अत्र छायाग्रयोरन्तरमङ्गुलात्मकम् । ५२ ।
छायै च । ८ । १२ । अनयोरन्तरम् । ४ । इय-
मनेन । ५२ । गुणिता । ४१७ । छायाप्रमाणा-
न्तरेण । ४ । भक्ता लब्धं भूमानम् । १०४ ।
इदं प्रथमछायाग्रदीपतलयोरन्तरमित्यर्थ: ।
एवं द्वितीयच्छायाभूमानम् ।१५६। भूघ्नकुघ्नात:
प्रभया विभक्त इति जातमुभयतोऽपि दीपौच्च्यं

सममेव हस्ता: ६$\frac{१}{२}$ ।

एवमित्यत्र छायाव्यवहारे त्रैराशिककल्पनया-
नयनं वर्त्तते तद्यथा । प्रथमच्छायातो द्वितीय-
च्छाया । १२ । यावताधिका तावता छाया-
वयवेन यदि छायाग्रान्तरतुल्याभूर्लभ्यते तदा
छायया किमिति एवं पृथक् पृथक् छाया-
प्रदीपतलान्तरप्रमाणं लभ्यते । ततो द्वितीयं
त्रैराशिकं यदि छायातुल्ये भुजे शङ्कु: कोटि-
स्तदा भूतुल्ये भुजे किमिति लब्धं दीपकौच्च्य-
मुभयतोऽपि तुल्यमेव । एवं पञ्चराशिकादिक-
मखिलं त्रैराशिककल्पनयैव सिद्धं यथा भग-
वता श्रीनारायणेन जननमरणक्लेशापहारिणा
निखिलजगज्जननैकबीजेन सकलभुवनभावनेन
गिरिसरित्सुरनरासुरादिभि: स्वभेदैरिदं जग-
द्व्याप्तं तथेदमखिलं गणितजातं त्रैराशिकेन
व्याप्तं यद्येवं तद्बहुभि: किमित्याशङ्क्याह ।
यत्किञ्चिद्गुणभागहारविधिना बीजेऽत्र वा
गण्यते
तत् त्रैराशिकमेव निर्म्मलधियामेवावगम्यं
विदाम् ।
एतद्यद्बहुधास्मदादिजडधीधीवृद्धिबुद्ध्या बुधै-
स्तद्भेदान् सुगमान् विधाय रचितं प्राज्ञै:
प्रकीर्णादिकम् ॥”

इति श्रीभास्कराचार्य्यविरचितायां लीलावत्यां
छायाधिकार: समाप्ततामगात् ॥

छायाभृत्, पुं, (छायां छायारूपकलङ्कं यद्वा
छायां शीतलकान्तिं बिभर्त्तीति । भृ + क्विप् ।)
चन्द्र: । इति हेमचन्द्र: । २ । १९ ॥

छायामित्रं, क्ली, ( छायया छायाकरणेन मित्र-
मिव छायाया मित्रमिति वा । ) छत्रम् । इति
शब्दरत्नावली ॥

छायाङ्कधर:, पुं, (छाया छायारूप एव अङ्कं
धरतीति । धृ + अच् । छायाङ्कस्य धरो वा ।)
चन्द्र: । इति त्रिकाण्डशेष: ॥

छायासुत:, पुं, (छायाया: सूर्य्यपत्न्या: सुत: पुत्र: ।)
शनि: । इति हेमचन्द्र: । २ । ३४ ॥

छि:, पुं, ( छ्यति छिनत्ति कीर्त्त्यादिकं नाशयती-
त्यर्थ: । छो + बाहुलकात् कि: । ) गर्हा ।
इत्येकाक्षरकोष: ॥

छिक्कनी, स्त्री, ( छिक् इत्यव्यक्तशब्दं करोत्य-
नया । कृ + करणे अप् ततो ङीष् । ) क्षुप-
विशेष: । छिकुनी इति नाकछिकुनी इति
छाँचोटी इति च भाषा ॥ तत्पर्य्याय: । अव-
क्षुत् २ तिक्ता ३ छिक्किका ४ घ्राणदु:खदा ५ ।
अस्या गुणा: । कटुत्वम् । रुच्यत्वम् । तीक्ष्णो-
ष्णत्वम् । उष्णत्वम् । वह्निपित्तकारित्वम् । वात-
रक्तकुष्ठकृमिवातकफनाशित्वञ्च । इति भाव-
प्रकाश: ॥

छिक्का, स्त्री, ( छिगित्यव्यक्तशब्देन कायतीति ।
कै + क: । ततष्टाप् । ) क्षुतम् । इति शब्दरत्ना-
वली ॥ छिँक् इति हिन्दी भाषा ॥ ( यथा,
गारुडे ज्योतिश्चक्रे ६० अध्याये ।
“छिक्काया लभ्यते वर्णे लभेत् पूर्ब्बे महाफलम् ।
आग्नेये शोकसन्तापौ दक्षिणे हानिमाप्नुयात् ॥
नैरृते शोकसन्तापौ मिष्टान्नञ्चैव पश्चिमे ।
अन्नं प्राप्नोति वायव्ये उत्तरे कलहो भवेत् ।
ईशाने मरणं प्रोक्तं प्रोक्तं छिक्काफलाफलम् ॥”)

छिक्किका, स्त्री, (छिक्का क्षुतं साध्यत्वेनास्त्यस्या: ।
बाहुलकात् ठन् । ) छिक्कनी । इति भाव-
प्रकाश: ॥ [छेदनकर्त्ता ॥

छित्, [ द् ] त्रि, ( छिनत्तीति । छिद् + क्विप् । )

छितं, त्रि, (छायते स्मेति । छो + क्त: । “शाच्छो-
रन्यतरस्याम् ।” ७।४।४१ । इतीत्त्वम् ।) छिन्नम् ।
इत्यमर: । । ३ । १ । १०३ ॥

छित्ति:, पुं, ( छिद् + क्तिन् । ) वारणहस्त: । इति
शब्दचन्द्रिका ॥ छेदश्च ॥

छित्वर:, त्रि, ( छिनत्तीति । छिद् + “छित्वर-
च्छत्वरेति ।” उणां । ३ । १ । इति ष्वरच् प्रत्य-
येन निपातनात् साधु: । ) छेदनकर्त्ता । धूर्त्त: ।
वैरी । इत्युणादिकोष: ॥

छिद, इर ञ ज औ द्वैधे । इति कविकल्पद्रुम: ॥
(रुधां-उभं-सकं-अनिट् ।) द्वैधो द्विधाकरणम् ।
इर, अच्छिदत् अच्छैत्सीत् । ञ ज, छिनत्ति
छिन्ते दात्रेण तृणं लोक: । औ, छेत्ता । इति
दुर्गादास: ।

छिद्रकं, क्ली, (छिनत्तीति । छिद् + वुन् ।) वज्रम् ।
इत्युणादिकोष: ॥

छिदा, स्त्री, ( छिद् + “षिद्भिदादिभ्योऽङ् ।” ३ ।
३ । १०४ । इत्यङ् ततष्टाप् । ) छेदनम् । इति
मुग्धबोधम् ॥

छिदि:, स्त्री, (छिद्यतेऽनया इति । छिद् + “कृषृ-
कुटिभिदिच्छिदिभ्यश्च ।” उणां । ४ । १४२ ।
इति इ: स च कित् ।) कुठार: । इत्युणादिकोष: ॥

छिदिर:, पुं, (छिनत्त्यनेनेति । छिद् + “इषिमदि-
मुदिखिदिच्छिदीति ।” उणां । १ । ५१ । इति
किरच् । ) करवाल: । परशु: । पावक: ।
रज्जु: । इति मेदिनी । रे, १५५ ॥

छिदुर:, पुं, ( छिनत्तीति । छिद् + “विदिभिदि-
च्छिदे: कुरच् ।” ३।२।१६२ । इति कुरच् ।)
छेदनकर्त्ता । धूर्त्त: । वैरी । इति मेदिनी । रे,
१५६ ॥ (स्वयं छिन्ने, त्रि । यथा, रघु: । १६।६२।
“संलक्ष्यते न छिदुरोऽपि हार: ॥” )

छिद्र, क भेदे । इति कविकल्पद्रुम: ॥ ( अदन्त-
चुरां-परं-सकं-सेट् । ) भेद इह रन्ध्रकरणम् ।
छिद्रयति छिद्रापयति भाण्डं बालक: । इति
दुर्गादास: ॥

छिद्रं, क्ली, ( छिद्यते भिद्यते यत् । छिदिरौ
द्वैधने + “स्फायितञ्चिवञ्चीति ।” उणां । २।१३।
इति रक् । ) भेद: । छिँदा इति भाषा । तत्-
पर्य्याय: । कुहरम् २ शुषिरम् ३ विवरम् ४
बिलम् ५ निर्व्यथनम् ६ रोकम् ७ रन्ध्रम् ८
श्वभ्रम् ९ वपा १० शुषि: ११ । इत्यमर: ।
१ । ८ । २ ॥ श्वभ्रम् १२ शुषी १३ । इति
तट्टीका ॥ ( यथा, महाभारते । ३।८२।५३ ।
“ततो गच्छेत धर्म्मज्ञ ! छिद्रमवतमनुत्तमम् ।
पृथिव्यां यत्र वै छिद्रं पूर्ब्बमासीत् युधिष्ठिर !॥”)
दूषणम् । इति मेदिनी । रे, ३८ ॥ ( यथा,
महाभारते । २ । १२ । २९ ।
“बहुविघ्नश्च नृपते ! क्रतुरेष स्मृतो महान् ।
छिद्राण्यत्र तु वाञ्छन्ति यज्ञघ्ना ब्रह्मराक्षसा: ॥”
अवकाश: । नवमसंख्या । इति ज्योतिषम् ॥
लग्नादष्टमस्थानम् । “छिद्राख्यमष्टमं स्थान-
मिति ।” इति ज्योतिस्तत्त्वम् ॥ )

छिद्रवैदेही, स्त्री, (छिद्रप्रधाना वैदेही पिप्पली ।)
गजपिप्पली । इति राजनिर्घण्ट: ॥

छिद्रान्त:, [ र् ], पुं, ( छिद्रमन्तर्मध्ये यस्य । )
नल: । इति राजनिर्घण्ट: ॥

छिद्रापलं, क्ली, (छिद्रं दूषणमापलतीति । आ +
पल + अच् ।) मायाफलम् । इति राजनिर्घण्ट: ॥

छिद्रित:, त्रि, ( छिद्र + तच् । ) सञ्जातच्छिद्र: ।
तत्पर्य्याय: । वेधित: २ विद्ध: ३ । इत्यमर: ।
३ । १ । ९९ ॥

छिन्नं, त्रि, ( छिद्यते स्म इति । छिद् + क्त: । )
कृतच्छेदनम् । छेँड़ा इति काटा इति च
भाषा । तत्पर्य्याय: । छातम् २ लूनम् ३ कृत्तम् ४
दातम् ५ दितम् ६ छितम् ७ वृक्णम् ८ । इत्य-
मर: । ३।१।१०३॥ लूनम् ९ छादितम् १० । इति
जटाधर: ॥ छेदितम् ११ अवकृत्तम् १२ । इति
हेमचन्द्र: ॥ ( यथा, मार्कण्डेये । ८० । ११ ।

"छिन्ने मङ्गुष्ठि दैवेन्द्रस्तथा शक्तिमथाद्दृ ॥"*॥
मन्त्रविशेषे, पुं। तल्लक्षणादिकं यथा, विश्वसारे।
"मनोर्यस्यादिमध्यान्तेष्वागतं बीजमुच्यते।
संयुक्तं वा वियुक्तं वा पराकान्तच्छिन्ना पुनः॥
चतुर्धा एकधा वापि स मन्त्रश्छिन्नसंज्ञकः॥")

छिन्नपत्त्रिका, स्त्री, (छिन्ना पत्त्रिणी। संज्ञायां कन् ततष्टाप् पूर्व्वस्य च।) निपत्रिका। इति राजनिर्घण्टः॥

छिन्नपर्णी, स्त्री, (छिन्नं पर्णं यस्याः। स्त्रियां ङीष्।) अम्बष्ठा। इति राजनिर्घण्टः॥ (विवरणमस्या अम्बष्ठाशब्दे ज्ञेयम्॥)

छिन्नमस्ता, स्त्री, (छिन्नं मस्तं शिरो यस्याः।) दशमहाविद्यान्तर्गतषष्ठमहाविद्या। सा च प्रचण्डचण्डिका। यथा,—
"प्रचण्डचण्डिकां वक्ष्ये सर्व्वकामफलप्रदाम्।
यस्याः प्रसादमात्रेण सदाशिवो भवेन्नरः॥
अपुत्रो लभते पुत्रं अधनो धनवान् भवेत्।
कवित्वञ्च सुपाण्डित्यं लभते नात्र संशयः॥"
अथ प्रचण्डचण्डिकामन्त्राः। विश्वसारे तामसे च।
"लक्ष्मीं लज्जां ततो मायां माया द्वादशिका-
मपि।
वज्रवैरोचनीये द्वे मायां फट्स्वाहया युतः॥
लक्ष्मीबीजं यदाद्यं स्यात् तदा श्रीः सर्व्वतोमुखी।
लज्जाबीजेन चाद्येन वश्यतां यान्ति योषितः॥
मायाबीजेन चाद्येन महापातकनाशनम्।
माया द्वादशिका बीजमाद्यं स्याद्भुक्तिदायकम्॥
भैरवोऽस्य ऋषिर्द्देवि! सम्राट् छन्द उदीरितम्।
छिन्नमस्ता स्मृता देवी बीजं कूर्च्चद्वयं पुनः॥
स्वाहा शक्तिरभीष्टार्थे विनियोग उदाहृतः॥"
"अत्र लज्जापदं कामबीजपरम्। तथा च।
अत्र लज्जापदे देवि! कामबीजं विलक्ष्यते।
महाकालमतं ज्ञेयं मन्त्रोद्धारं शुभावहम्॥"
पूर्व्वमायापदे इति पाठे मायायाः पूर्व्वं लज्जाबीजं तत्त्विन्नित्यर्थः। तथा च। पूर्व्वमायापदेन लज्जाबीजमुच्यते। अन्यथा तामिस्रादिविरोधः। तथा च।
"कामाद्यां वाग्भवाद्यां वा मायाद्यां वा जपेत्
सुधीः।
लज्जाद्यां वा जपेद्विद्यां चतुर्व्वर्गफलप्रदाम्॥
अन्यैवाच सुनीनां मते सर्व्वत्र मायापदं कूर्च्च-
परम्। तत्रैव।
वान्तं वह्निसमायुक्तं रतिबिन्दुसमन्वितम्।
लक्ष्मीबीजमिदं प्रोक्तं सर्व्वकामार्थसिद्धये॥
वामाक्षिवह्निसंयुक्तं बिन्दुनादविभूषितम्।
शिवबीजं महेशानि! लज्जाबीजमुदाहृतम्॥
वैश्वानरसहितं पुरारिबीजं
सबिन्दुकं नादविभूषितञ्च।
सवामनेत्रं परितः प्रकल्प्य
माया मदन्तीह मनीषिवक्त्राम्॥
द्वादशस्वरवर्णं स्यात् नादबिन्दुविभूषितम्।
वाग्भवं बीजमित्युक्तं सर्व्ववाक्यविभूतये॥
इति मन्त्रे चतुर्व्वीजव्याख्यानात् अयमु

बीजम्। भैरवमते तु माया भुवनेश्वर्य्येव॥
लक्ष्मीः प्रथमबीजेऽस्मिन् लज्जाबीजे मनोभवः।
तृतीयेऽस्मिन् सदा देवी महापातकनाशिनी॥
चतुर्थे तु शुभालीला मुक्तिविद्याप्रदायिका।
वकारे वरदः साक्षात् जकारे तु सुराधिपः॥
रेफे कुलाग्रणी देवो वकारे वसुधाधिपः।
ऐकारे त्रिपुरा देवी रेफे त्रिपुरसुन्दरी॥
त्रैलोक्यविजया देवी यद्देवौकारसंस्थिता।
चकारे चन्द्रमा देवो नकारे हि विनायकः॥
ईकारे कमला साक्षात् यकारे च सरस्वती।
मायायुग्मे सदा देवी प्रज्ञया च चञ्चला॥
वैखरी चैव फट्कारे स्वाकारे कुसुमायुधः।
हाकारे च रतिस्तिष्ठेदिवं मन्त्रसमुच्चयः॥"
इति व्याख्यानाच॥*॥
अस्याः पूजाप्रयोगः।
प्रातःकृत्यादिकं कृत्वा मन्त्राचमनं कुर्य्यात्।
यथा,—
"लक्ष्मीमायाकूर्च्चबीजैस्त्रिभिः पीत्वाम्बु साधकः।
वाग्भवेनौष्ठौ संमृज्य मायाभ्यान्तु क्षिरस्पृशेत्॥
कूर्च्चेन क्षालयेत् पाणी एभिर्म्मन्त्रैश्च विन्यसेत्।
श्रीमायाकूर्च्चवाक्कामत्रिपुटाभगवर्गकैः॥
कामकलाकुण्ड्याश्याच्च वह्निमालाश्विकर्णकाम्।
नाभिस्तम्भपर्णं चासौ स्पृष्ट्वा शम्भुर्भवेत् ध्यानात्॥
आचम्यैवं छिन्नमस्तां वत्सरान्तां प्रपश्यति॥
ततः प्राणायामान्तं विधाय षोढान्यासं कुर्य्यात्।
मन्त्रषोढां ततः कुर्य्यात् त्रैलोक्यवशकारिणीम्।
श्रीबालात्रिपुटायोनिप्रासादप्रणवैस्तथा॥
कालीवध्वकूर्च्चैः कामकलाकूर्च्चात्मकैः क्रमात्।
षोडशीमनुवर्णैश्च पृथगष्टादशाक्षरी॥
एभिर्बीजैर्म्मात्रकाणां स्थानेषु स्थानेषु विन्यसेत्।
एषा ब्रह्मस्वरूपा हि बीजषोढा प्रकीर्त्तिता॥
अस्याः संन्यसनात् सर्व्वे वन्द्येषा भवन्ति हि।
सर्व्वैश्वर्य्ययुतास्ते हि जीवन्मुक्ता इत्यादृताः॥"*॥
तत ऋष्यादिन्यासः।
अस्य मन्त्रस्य भैरव ऋषिः सम्राट् छन्दः छिन्नमस्ता देवता हुँकारद्वयं बीजं स्वाहा शक्तिरभीष्टार्थसिद्धये विनियोगः। यथा, शिरसि भैरवऋषये नमः। मुखे सम्राट्छन्दसे नमः। हृदि छिन्नमस्तायै देवतायै नमः। गुह्ये हूँ हूँ बीजाय नमः। पादयोः स्वाहाशक्तये नमः॥ ततः कराङ्गन्यासौ। ओम् आं खड्गाय हृदयाय स्वाहा। इति कनीयसि। ओम् ईं सुखड्गाय शिरसे स्वाहा। इति मध्यमायोः। ओम् ऊं सुवज्राय शिखायै स्वाहा। इति मध्यमयोः। ओम् ऐं पाशाय कवचाय स्वाहा। इति तर्ज्जन्योः। ओम् औं अङ्कुशाय नेत्रत्रयाय स्वाहा। इत्यङ्गुष्ठयोः। ओम् अः सुरक्षरक्षाहरपायाकाय फट्। इति करतलपृष्ठयोः। एवं हृदयादिषु। तदुक्तं भैरवतन्त्रे।
"उद्धरेत् पूर्व्वमाकारं बिन्दुनादिसमस्तकम्।
खड्गाय हृदयायेति स्वाहायुक्तं कनीयसि॥

ईकारञ्च ततो देवि! चन्द्रकोटिसमप्रभम्।
सुखड्गाय ततो वाच्यं शिरसे तदनन्तरम्॥
स्वाहायुक्तं ततो वाच्यं पविताङ्गुलिसंयुतम्।
ऊकारञ्च ततो वाच्यं बिन्दुनादिसमस्तकम्॥
सुवज्राय ततो वाच्यं शिखायै तदनन्तरम्।
स्वाहान्तं मध्यमायाञ्च विन्यसेत्तदनन्तरम्॥
माया द्वादशिका देवी विन्यसेच्च ततः परम्।
पाशायेति समुच्चार्य्य प्रवदेत् कवचाय च॥
स्वाहान्तं विन्यसेत्तत्र तर्ज्जन्यां तदनन्तरम्।
औकारञ्च ततो देवि! चाङ्कुशं तदनन्तरम्॥
नेत्रत्रयाय स्वाहान्तमङ्गुष्ठे करयोर्द्वयोः।
अकारञ्च विसर्गान्तं सुरक्षारक्षसंयुतम्॥
असुरक्षायसंयुक्तं अस्त्रायेति ततः परम्।
फट्कारसमायुक्तं विन्यसेत् करयोर्द्वयोः॥
हृदि मूर्द्ध्नि शिखायाञ्च कवचे नेत्रमस्त्रके।
यावदस्त्रं चतुर्द्दिक्षु विदिक्षु च यथाक्रमम्॥"
विप्रस्तितन्त्रे भैरववाक्यम्।
"उद्धरेत् प्रथमं पूर्व्वमाकारं बिन्दुसंयुतम्।"
इत्यादिवाक्यात् कराङ्गेषु प्रणवसहितो न्यासः। ततो मूलेन मस्तकादिपादपर्य्यन्तं पादादिमस्तकपर्य्यन्तं वारत्रयं न्यसेत्॥*॥
ततो ध्यानम्।
"स्वनाभौ नीरजं ध्यायेदष्टं विकसितं सितम्।
तत्पद्मकोषमध्ये तु मण्डलं चण्डरोचिषः॥
जवाकुसुमसङ्काशं रक्तबन्धूकसन्निभम्।
रजःसत्त्वतमोरेखायोनिमण्डलमण्डितम्॥
मध्ये तु तां महादेवीं सूर्य्यकोटिसमप्रभाम्।
छिन्नमस्तां करे वामे धारयन्तीं स्वमस्तकम्॥
प्रसारितमुखीं देवीं लेलिहानाग्रजिह्विकाम्।
पिबन्तीं रौधिरीं धारां निजकण्ठविनिर्गताम्॥
विकीर्णकेशपाशाञ्च नानापुष्पसमन्विताम्।
दक्षिणे च करे कर्त्रीं मुण्डमालाविभूषिताम्॥
दिगम्बरीं महाघोरां प्रत्यालीढपदे स्थिताम्।
अस्थिमालाधरां देवीं नागयज्ञोपवीतिनीम्॥
रतिकामोपरिष्ठाञ्च सदा ध्यायन्ति मन्त्रिणः।
सदा षोडशवर्षीयां पीनोन्नतपयोधराम्॥
विपरीतरतासक्तौ ध्यायेद्रतिमनोभवौ।
डाकिनीवर्णिनीयुक्तां वामदक्षिणयोगतः॥
देवीगलोच्छलद्रक्तधारापानं प्रकुर्व्वतीम्।
वर्णिनीं लोहितां सौम्यां मुक्तकेशीं दिगम्बरीम्।
कपालकर्त्तृकाहस्तां वामदक्षिणयोगतः।
नागयज्ञोपवीताढ्यां ज्वलत्तेजोमयीमिव॥
प्रत्यालीढपदां दिव्यां नानालङ्कारभूषिताम्।
सदा द्वादशवर्षीयामस्थिमालाविभूषिताम्॥
डाकिनीं वामपार्श्वे तु कल्पसूर्य्यानलोपमाम्।
विद्युज्जटां त्रिनयनां दन्तपङ्क्तिबलाकिनीम्॥
दंष्ट्राकरालवदनां पीनोन्नतपयोधराम्।
महादेवीं महाघोरां मुक्तकेशीं दिगम्बरीम्॥
लेलिहानमहाजिह्वां मुण्डमालाविभूषिताम्।
कपालकर्त्तृकाहस्तां वामदक्षिणयोगतः॥
देवीगलोच्छलद्रक्तधारापानं प्रकुर्व्वतीम्।
करस्थितकपालेन भीषणेनातिभीषणाम्॥

वाभ्यां निपिबमानां तां ध्यायेद्देवीं विचक्षणः ॥"
ध्यानस्यास्य फलमाह । तन्त्रे ।
"प्रत्यक्षमथिकामेवमध्यात्वा यस्तु पूजयेत् ।
तस्यास्य शिरश्छित्त्वा देवी पिबति शोणितम् ॥"
पिबन्तीमिति तेन मुखेनेति शेषः ।
तथा च ।
"स्वमस्तकं स्वकर्त्रे रक्तधाराभिपूरितम् ।
लसज्जिह्वं महाभीमं धृतं वामकरे तथा ॥"
इति भैरवतन्त्रे ।
तत्रैव ।
"सितं कुर्य्याद्दलं पूर्व्वमाग्नेयं रक्तवर्णकम् ।
याम्यं कृष्णमतः पीतं शुक्लं रक्तं सितासितम् ॥
ततः पीतां प्रकुर्व्वीत कर्णिकां तस्य मध्यगाम् ।
तन्मध्ये तु प्रकुर्व्वीत मण्डलं चक्ररोचिषः ॥
रजःसत्त्वतमोरेखा रक्ता शुक्लासिता क्रमात् ।
मायायुक्तं ततो न्यस्य षट्कारसमन्वितम् ॥
बाह्ये तस्य च चक्रस्य कुर्य्यात् प्राकारवेष्टितम् ।
पूर्व्वं रक्तं ततः कृष्णं सितं पीतं यथाक्रमम् ॥
चतुर्द्वारसमायुक्तं त्रिशूलैरभिवेष्टितम् ॥"
इत्यस्याः पूजायन्त्रम् ॥ * ॥
यथा वा ।
"त्रिकोणं विन्यसेदादौ तन्मध्ये मण्डलत्रयम् ।
तन्मध्ये विन्यसेद्योनिं द्वारत्रयसमन्विताम् ॥
बहिरष्टदलं पद्मं भूबिम्बत्रितयं पुनः ।
कूर्च्चबीजं लिखेन्मध्ये त्रिकोणे फट् समन्वितम् ॥"
यद्वा स्वतन्त्रोक्तं यन्त्रम् ।
तथा च ।
"अपरञ्च प्रवक्ष्यामि शृणु देवि ! यथाक्रमम् ।
स्वनाभौ नीरजं ध्यायेद्भानुमण्डलसन्निभम् ॥
योनिचक्रसमायुक्तं गुणत्रितयसंस्थितम् ।
तत्र मध्ये महादेवीं छिन्नमस्तां स्मरेद्यतिः ॥
प्रदीपकलिकाकारामद्वितीयव्यवस्थिताम् ।
योनिमुद्रासमायुक्तां हृदयस्थितलोचनाम् ॥
ध्येयमेतद्यतीनाञ्च गृहस्थानां निशामय ॥"
यथा,—
"अन्तरे स्वशरीरस्य नाभिनीरजसङ्गताम् ।
निर्लेपां निर्गुणां शुद्धां बालचन्द्रसमप्रभाम् ॥
समाधिमात्रगम्यान्तु गुणत्रितयवेष्टिताम् ।
कलातीतां गुणातीतां मुक्तिमात्रप्रदायिनीम् ॥"
एवं ध्यात्वा मानसैः संपूज्य तारिणीवच्छङ्ख-स्थापनं कुर्य्यात् । ततः पीठपूजा । आधारश-क्तये । प्रकृतये । कूर्म्माय । अनन्ताय । पृथिव्यै । क्षीरसमुद्राय । श्वेतद्वीपाय । कल्पवृक्षाय । तदधः सर्व्वसिंहासनाय । आनन्दकन्दाय । संवि-न्नालाय । सर्व्वतत्त्वात्मकपद्माय । सं सत्त्वाय । रं रजसे । तं तमसे । आं आत्मने । अं अन्त-रात्मने । पं परमात्मने । ह्रीं ज्ञानात्मने नमः । मध्ये रतिकामाभ्याम् ॥ भैरवमते तु ।
...शक्तिं कूर्म्मञ्च नागराजमतःपरम् ।
...ञ्च पूजयेन्मन्त्रवित्तमः ॥
...रजः सत्त्वं तमस्तथा ।
ह ...पूज्य शक्तिपूजां समाचरेदिति ॥

रतिकामोपरि वज्रवैरोचनीये देहि देहि एहि एहि यज्ञ यज्ञ मम सिद्धिं देहि देहि मम शत्रून् मारय मारय करालिके हूँ फट् स्वाहेति पीठमन्त्रः ॥ सर्व्वत्र प्रणवादिनमो-ऽन्तेन पूजयेत् । पुनर्ध्यात्वावाहयेत् । सर्व्व-सिद्धिवर्णनीये सर्व्वसिद्धिडाकिनीये वज्रवैरोच-नीये इहावह इहावह पुनस्तन्मन्त्रमुच्चार्य्य इह तिष्ठ इह तिष्ठ सन्निधेहि इह सन्निरुध्यस्व इत्यनेनावाह्य आं ह्रीं क्रोँ हं सः इत्यनेन प्राण-प्रतिष्ठां कृत्वा । ओम् आं खड्गाय हृदयाय स्वाहा इत्यादिना षडङ्गं विन्यस्य यथाशक्ति पूजां कृत्वा बलिं दद्यात् । यथा । वज्रवैरो-चनीये देहि देहि एहि एहि यज्ञ यज्ञ इमं बलिं मम सिद्धिं देहि देहि मम शत्रून् मारय मारय करालिके हूं फट् स्वाहा इति मन्त्रेण । ततो देव्या दक्षिणे ओँ वर्णिन्यै नमः । वामे ओँ डाकिन्यै नमः । ततो देव्यङ्गे षडङ्गं संपूज्य दक्षिणे ओँ शङ्खनिधये नमः । वामे ओँ पद्मनिधये नमः । पूर्व्वादिदिक्षु लक्ष्मीं लज्जां मायां वाणीञ्च पूजयेत् । विदिक्षु ब्रह्म-विष्णुरुद्रेश्वरान् मध्ये सदाशिवं सर्व्वत्र प्रणवादि नमोऽन्तेन पूजयेत् । ततः पञ्च पुष्पाञ्जलिं दत्त्वा आवरणान् पूजयेत् । अग्नीशासुरवायुषु मध्ये दिक्षु च ओम् आं खड्गाय हृदयाय स्वाहा इत्यादिना षडङ्गानि संपूज्य अष्टपत्रेषु पूर्व्वादिक्रमेण ओम् ह्रीं काल्यै नमः एवं वर्णिन्यै डाकिन्यै भैरव्यै महाभैरव्यै इन्द्राक्ष्यै पिङ्गाक्ष्यै संहारिण्यै सर्व्वत्र प्रणवादिनमोऽन्तेन पूजयेत् । यथा,—
"एकां नामाभिधां कालीं वर्णिनीं डाकिनीं तथा ।
भैरवीञ्च महापूर्व्वां भैरवीं तदनन्तरम् ॥
इन्द्राक्षीञ्च सपिङ्गाक्षीं ततः संहारकारिणीम् ।
पूर्व्वादिकं दले पूज्याः शक्तयश्च यथाक्रमम् ॥
प्रणवादिनमोऽन्तेन लज्जाबीजं समुच्चरन् ।"
पद्ममध्ये हूं हूं फट् नमः स्वाहा नमः । देव्या दक्षिणे सम्राट्छन्दसे नमः । देव्या उत्तरे सर्व्ववर्णेभ्यो नमः । पुनर्दक्षिणे ओं बीज-शक्तिभ्यां नमः । पत्राग्रेषु पूर्व्वादिक्रमेण ब्राह्म्यै माहेश्वर्य्यै कौमार्य्यै वैष्णव्यै वाराह्यै इन्द्राण्यै चामुण्डायै महालक्ष्म्यै सर्व्वत्र प्रणवादिनमो-ऽन्तेन पूजयेत् । ततश्चतुर्दिक्षु द्वारेषु ओम् करालाय नमः । विकरालाय नमः । एवं अति-करालाय महाकरालाय । यथा, भैरवीये ।
"पूर्व्वद्वारे करालञ्च विकरालञ्च दक्षिणे ।
पश्चिमेऽतिकरालञ्च महाकरालमुत्तरे ॥"
ततो धूपादिविसर्ज्जनान्तं कर्म्म समापयेत् । विसर्ज्जने त्वयं विधिः । संहारमुद्रां प्रदर्श्य आज्ञामारोप्य वामनासापुटेन ।
योनिमुद्रासमारूढां प्रदीपकलिकोज्ज्वलाम् ।
हृत्पद्मे विधुमिव क्रमेण नीयतां गताम् ॥
इमं मन्त्रं समुच्चार्य्य चक्षुरक्षौ निवेशयेत् ।
उत्तरे शिखरे इत्यादि । अस्य पुरश्चरणं लक्ष-जपः । सिद्धविद्यात्वात् ॥ * ॥ बलिदाने तु भैरवीये ।
"रात्रौ बलिः प्रदातव्यो मत्स्यमांससुरादिभिः ।
अथवा मधुपानाद्यैर्मधुरैर्व्विभवक्रमैः ॥
मन्त्रस्तु ।
उच्चरेत् प्रणवं पूर्व्वं सर्व्वसिद्धिप्रदेऽन्वितम् ।
वर्णिनीये ततो वाच्यं सर्व्वसिद्धिप्रदे ततः ॥
डाकिनीये ततो वाच्यं देवीनाम ततः परम् ।
गृह्णीति ततो वाच्यं इमं बलिमनन्तरम् ॥
यज्ञ यज्ञ ततः प्रोक्ता मम सिद्धिमनन्तरम् ।
देहि देहीति मायं च ततः फट्स्वाहया युतः ॥
बलिमन्त्रः समाख्यातः पूजितोऽयं सुरेश्वरीति ॥
मन्त्रान्तरम् ।
भुवनेशी कामबीजं कूर्च्चबीजञ्च वाग्भवम् ।
भुवनेशी कूर्च्चबीजं वाग्भवं तदनन्तरम् ॥
वज्रवैरोचनीये च हूं फट् स्वाहा ततः परम् ॥
अस्य पूजाप्रयोगध्यानपूजादिकं षोडशीवत् कार्य्यम् ॥ * ॥
कुलेशा मादनं लक्ष्मीर्व्वाग्भवं कूर्च्चमेव च ।
अष्टार्णा छिन्नमस्ताया महाविद्या प्रकीर्त्तिता ॥
अस्यापि सदृशी विद्या जगत्स्वपि न विद्यते ।
षड्वर्णोऽयं मनुः साक्षान्मोक्षदो नात्र संशयः ॥
अस्या ध्यानमहं वक्ष्ये शृणुष्व कमलानने ! ।
प्रत्यालीढपदां सदैव दधतीं छिन्नं शिरः कर्त्तृकां
दिग्वस्त्रां स्वकबन्धशोणितसुधाधारां पिबन्तीं मुदा ।
नागाबद्धशिरोमणिं त्रिनयनां हृद्युत्पलालङ्कृतां
रत्यासक्तमनोभवोपरि दृढां ध्यायेज्जवासन्निभाम् ॥
दक्षे चातिसिता विमुक्तचिकुरा कर्त्रीं तथा खर्परं
हस्ताभ्यां दधती रजोगुणभवा नाम्नापि सा वर्णिनी ।
देव्याश्छिन्नकबन्धतः पतदसृग्धारां पिबन्ती मुदा
नागाबद्धशिरोमणिर्म्मनुविदा ध्येया सदा सा सुरैः ॥
वामे कृष्णतनुस्तथैव दधती खड्गं तथा खर्परं
प्रत्यालीढपदा कबन्धविगलद्रक्तं पिबन्ती मुदा ।
सैषा या प्रलये समस्तभुवनं भोक्तुं क्षमा तामसी
शक्तिः सापि परात्परा भगवती नाम्ना परा डाकिनी ॥
इति ध्यानम् ।
अस्याः पूजादिकं सर्व्वं षोडशीवत् कार्य्यम् ॥ * ॥
मन्त्रान्तरम् ।
तारं लज्जाद्वयं वज्रवैरोचनीये हूं फट् स्वाहा ।
अस्यापि ध्यानपूजादिकं सर्व्वं षोडशीवत् ॥ * ॥
वियत्तृष्णायुतं बिन्दुनादयुक्तं ततः प्रिये ! ।
एकाक्षरी महाविद्या त्रैलोक्यवशकारिणी ॥
हर्णं दीर्घं जकारः ॥
ठठान्तैषा महाविद्या त्रैलोक्यमोहकारिणी ।
ताराद्यन्ता भवेदेषा चतुर्व्वर्गफलप्रदा ॥ * ॥

मन्त्रान्तरं यथा,—
वज्रवैरोचनीये च कूर्च्चयुग्मं ठठद्वयम् ।
तारादेषा महाविद्या सर्व्वतेजोऽपहारिणी ॥
त्रैलोक्याकर्षिणी विद्या चतुर्व्वर्गफलप्रदा ।
ध्यानपूजादिकं सर्व्वं षोडशीवत् समाचरेत् ॥*॥
इदानीं षोडशीविद्याप्रसंगमाह ।
तथा सर्व्वप्रयत्नेन सर्व्वापाद्या च षोडशी ।
लक्ष्मीबीजादिका सैव सर्व्वैश्वर्य्यप्रदायिनी ॥
लज्जाद्या सर्व्वभूतानां मोहिनी चाकर्षिणी परा ।
कूर्चाद्या सर्व्वजन्तूनां महापातकनाशिनी ॥
वाग्भवाद्या यदा देवी वागीशत्वप्रदायिनी ।
एषा तु षोडशीविद्या सैषा सप्तदशाक्षरी ॥
बीजेनपुटिता सा तु कवीशत्वकरी सदा ।
लज्जया पुटिता विद्या त्रैलोक्याकर्षिणी परा ॥
कूर्च्चेन पुटिता सर्व्वपापनाशिनी पापहारिणी ।
वाग्बीजपुटिता सैषा वागीशत्वप्रदायिनी ॥
चतुर्व्विधेति विद्येषा प्रिये । सप्तदशाक्षरी ।
ताराद्या षोडशी चाद्या भवेत् सप्तदशाक्षरी ।
एषा विद्या महाविद्या भुक्तिमुक्तिकरी सदा ।
कमला भुवनेशानी कूर्चबीजं सरस्वती ॥
वज्रवैरोचनीये च पूर्व्वबीजानि योजयेत् ।
फट् स्वाहा च महाविद्या बहुचन्द्राक्षरी परा ।
ताराद्येकोनविंशत्यर्णा महाविद्यास्वरूपिणी ।
एते विद्योत्तमे देवि ! भुक्तिमुक्तिप्रदे शुभे ॥ * ॥
लज्जादिपुटिता पूर्व्वा रन्ध्रचन्द्राक्षरी भवेत् ।
चतुर्थी च महाविद्या चतुर्व्वर्गफलप्रदा ॥
प्रणवाद्या यदा सैषा भोगमोक्षकरी सदा ॥*॥
विद्यान्तरं प्रवक्ष्यामि सावधानावधारय ।
हृल्लेखाकूर्च्चवाग्बीजवज्रवैरोचनीयं हूं ॥
अस्त्रं स्वाहा महाविद्या चतुर्द्दशाक्षरी मता ।
सर्व्वैश्वर्य्यप्रदा सैषा सर्व्वसंमोहकारिणी ॥*॥
भुवनेशी त्रितत्त्वञ्च वाग्बीजं प्रणवं ततः ।
वज्रवैरोचनीये च फट् स्वाहा च तथापरा ॥
चतुर्द्दशाक्षरी सैषा चतुर्व्वर्गफलप्रदा ।
एषा विद्या महाविद्या जन्ममृत्युविनाशिनी ॥*॥
तन्त्रान्तरे ।
रमा कामकला लज्जा वाग्भवं वज्र वै पदम् ।
रोचनीये लज्जाद्वन्द्वमस्त्रं स्वाहासमन्वितम् ॥
इयं सा षोडशी प्रोक्ता सर्व्वकामफलप्रदा ।
कथिताः सकला विद्याः सारात्सारतराः शुभाः ॥
आसां ऋषिर्भैरवोऽयं गायत्री तु छन्दोभूपतिः ।
सम्राट् छन्दो देवता च छिन्नमस्ता प्रकीर्त्तिता ।
षड्दीर्घभाक्स्वरेणैव प्रणवाद्येन सुन्दरि ! ।
षडङ्गानि न्यसेत् तत्र षडङ्गानि प्रकल्पयेत् ॥
नादिबीजादिकश्चासौ ताः सुविद्याः सुरासुरैः ।
सकलेषु च वर्णेषु सकलेष्वाश्रमेषु च ॥
अखिलेषु च सर्व्वेषु भुक्तिमुक्तिप्रदायिका ।
प्रणवाद्या च या विद्या शूद्राणां च वर्ज्जिता ॥
अस्याश्चैव विधिश्चायं योषिच्चैव सदुपासयेत् ।
डाकिनी या भवत्येव डाकिनीभिः प्रजायते ॥
पतिहीना पुत्त्रहीना यथा स्यात् सिद्धयोगिनी ।
इति ते कथितं सर्व्वं रहस्यमखिलं प्रिये ! ॥
अतिगोप्यतरञ्चैव भक्त्या गोपायितं ते प्रिये ! ।
एतासां ध्यानपूजादिकं षोडशीवत् कार्य्यम् ॥*॥
नाभौ शुभ्रारविन्दं तदुपरि विमलं मण्डलं चण्ड-
रश्मेः
संसारस्यैकसारां त्रिभुवनजननीं धर्म्म-
कामार्थदात्रीम् ।
तस्मिन् मध्ये त्रिकोणे त्रितयतनुधरां छिन्नमस्तां
प्रशस्तां
तां वन्दे ज्ञानरूपां निखिलभयहरां योगिनीं
योगमुद्राम् ॥”
इति छिन्नमस्ताप्रकरणम् । इति तन्त्रसारः ॥

छिन्नरुहः, पुं, ( छिन्नोऽपि रोहतीति । रुह+ “इगुपधज्ञेति ।” ३ । १ । १३५ । इति कः । ) तिलकवृक्षः । इति राजनिर्घण्टः ॥

छिन्नरुहा, स्त्री, ( छिन्ना सत्यपि रोहतीति । रुह +कः । अजादित्वात् टाप् । ) गुडूची । इत्यमरः । २ । ४ । ८२ ॥ (यथास्याः पर्य्यायाः ।
“वत्सादनी छिन्नरुहा मधुपर्ण्यमृतामरा ।
कुण्डल्यमृतवल्ली च गुडूची चक्रलक्षणा ॥”
इति वैद्यकरत्नमालायाम् ॥)
स्वर्णकेतकी । शातकी । इति राजनिर्घण्टः ॥

छिन्नवेशिका, स्त्री, (छिन्नो विच्छिन्नो वेशो यस्याः । संज्ञायां कन् । ततष्टापि अत इत्वम् ।) पाठा । इति शब्दचन्द्रिका । आकनादी इति भाषा ॥

छिन्ना, स्त्री, (छिद्यतेऽसौ । छिद+क्त । “अजाद्यतष्टाप् ।”४।१।४। इति टाप् ।) गुडूची । (यथा, भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।
“गुडूची मधुपर्णी स्यादमृताऽमृतवल्लरी ।
छिन्ना छिन्नरुहा छिन्नोद्भवा वत्सादनीति च ॥”
छिद्यते कुलात् वहिष्क्रियते इति । ) पुंश्चली । इति विश्वः ॥

छिन्नोद्भवा, स्त्री, ( छिन्ना विभिन्ना सत्यपि उद्भवति पुनर्जायते इति । उत्+भू+अच् । यद्वा, छिन्ने छेदनेऽपि उद्भव उत्पत्तिर्यस्याः । ) गुडूची । इति राजनिर्घण्टः ॥ (गुडूचीशब्देऽस्या विवृतिर्ज्ञेया ॥)

छिलिहिण्टः, पुं, ( चिक्कणतया सर्पस्वरूपतया हिण्डते अनादियते इति । हिडि अनादरे+ अच् । पृषोदरादित्वात् चस्य छः । ) पाताल-गरुडवृक्षः । इति भावप्रकाशः ॥

छुछुन्दरी, स्त्री, ( छुछुमित्यव्यक्तशब्दो दीर्य्यते निर्गच्छत्यस्याः । दॄ+“सर्व्वधातुभ्य इन् ।” उणां ४ । ११७ । इति इन् । ततः कृदिकारादिति ङीष् । ) मूषिकविशेषः । छुँचा इति भाषा । तत्पर्य्यायः । गन्धमूषा २ । इति हेमचन्द्रः । ४ । ३६७ ॥ चिकः ३ वेश्मनकुलः ४ पुंडयः ५ गन्ध-मूषिका ६ । इति त्रिकाण्डशेषः ॥ गन्धमूषिका ७ । इति हलायुधः । राजपुत्त्री ८ प्रतिमूषिका ९ सुगन्धिमूषिका १० गन्धशुण्डिनी ११ शुचि-मूषिका १२ । इति राजनिर्घण्टः ॥ गन्धाखुः १३ गन्धनकुलः १४ छुछुः १५ । इति शब्दरत्नावली । (छुछुन्दरिः १६ । इति मार्कण्डेयपुराणम् ।१५।२१॥
“अन्यक्षामापहरणेन क्षिप्रं मनुष्यो छुछुन्दरीत्वम् ।
छुछुन्दर्यो विपद्यन्ते तथा लोकेषु जुगुप्सम् ॥”
इति वैद्यकचक्रपाणिसंग्रहे गन्धमालाधिकारे ॥)

छुट, क ञि छेदे । इति कविकल्पद्रुमः ॥ ( चुरां-तुदां च-सकं-सेट् । ) क, छोटयति । ञि, छुटति । अच्छुटीत् । इति दुर्गादासः ॥

छुद्रं, क्ली, (छुद+रक् । पृषोदरादित्वात् उत्वम् ।) प्रतीकारवाक्यम् । रक्षिः । इति संक्षिप्तसार उणादिवृत्तिः ॥

छुप, श औ स्पर्शे । इति कविकल्पद्रुमः ॥ ( तुदां-परं-सकं-अनिट् । ) श, छुपति । औ, छोप्ता । इति दुर्गादासः ॥

छुपः, पुं, ( छुप+कर्म्मणि कः । ) स्पर्शः । समीरणम् । इति मेदिनी । पे, ६ ॥ चपलः । युद्धम् । इति विश्वः ॥

छुर, छेदे । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-सकं-सेट् । छोरति । अच्छोरीत् ॥ )

छुर, श लेपे । इति कविकल्पद्रुमः । (तुदां-परं-सकं सेट् । ) श, छुरति, अच्छुरीत् चुच्छोर । लोपश्छेदः । इति दुर्गादासः ॥

छुरा, स्त्री, ( छुरति रञ्जयति नाशयति दुर्गन्धा-दिकमिति वा । छुर+कः टाप् च । ) सुधा । चूर्णम् । इति हारावली । १३५ ॥

छुरिका, स्त्री, ( छुरति छिनत्तीति । छुर+वुन् । यद्वा, छुरी+स्वार्थे कन् । पूर्व्ववद्ध्रस्वः । ) अस्त्रविशेषः । छुरी इति ख्याता । तत्पर्य्यायः । शस्त्री २ असिपुत्त्री ३ असिधेनुका ४ । इत्यमरः । २ । ८ । ९२ ॥ छुरी ५ । इति भरतः ॥ क्षुरी ६ छूरी ७ लघ्वासिका ८ वेणुपुत्त्री ९ । इति हेमचन्द्रः ॥ छूरिका १० । इति शब्दरत्नावली ॥ (यथा, कथासरित्सागरे ।२५।१४९ ।
“तावत् क्षियमपाश्यन्ती छित्त्वा च छुरिकया गुरुः ।
खादन्ती तस्य मांसानि पुंसः शूलाग्रवर्त्तिनः ॥”)

छुरितं, त्रि, ( छुर+क्तः । ) खचितम् । इति जटाधरः ॥ ( रञ्जितम् । यथा, माघे ।१।२२।
“परस्परेण च्छुरितामलच्छवी
तदेकवर्णाविव तौ बभूवतुः ॥”)
छिन्नञ्च ॥

छुरी, स्त्री, ( छुरति छिनत्तीति । छुर छेदे+ “इगुपधज्ञेति ।” ३ । १ । १३५ । इति क । ततो ङीष् । ) छुरिका । इति भरतः ॥

छूरिकापत्री, स्त्री, ( छुरिका इव पत्राणि यस्याः । स्त्रियां ङीष् । ) श्वेता । इति राजनिर्घण्टः ॥

छूरी, स्त्री, ( छुरी+पृषोदरादित्वात् दीर्घः । ) छुरिका । इति हेमचन्द्रः । ३ । ४४८ ॥

छृद, कि सन्दीपे । इति कविकल्पद्रुमः ॥ ( चुरां-पक्षे भ्वां-परं-सकं-सेट् । ) सन्दीपो दीप्ती-करणम् । कि, छर्द्दयति छर्द्दति दीपं लोकः । इति दुर्गादासः ॥

छृद, उ न ध इर् दीप्तौ । लिपि । वमने । इति कविकल्पद्रुमः ॥ (रुधां-उभं-सकं-सेट् । उदित्वात् क्त्वावेट् । ) उ, छर्द्दित्वा छृत्त्वा । न ध, छृणत्ति

कृन्ते। इर्, अकृदत् अच्छैत्सीत्। छेदनं निर्गीर्वस्त्रावयवादिस्फुलिङ्गितिर्गीकारस्य:। इति केचित्। तन्मते तु नौकृनमेव अन्यथा निमो गच्छाद्यनर्थकं स्यात्। निवि दीप्तौ। इति दुर्गादास: ॥

छेक:, त्रि, ( छ्यति वनवासादिसुखं छिनत्ति नाग्र-यतीति। छो य कृषौ + बाहुलकात् छेकन्।) गृहासक्तपक्षिमृगौ। तत्पर्य्याय:। गृह्यक: २। इत्यमर:। २।६।४३ ॥ नागर:। इति मेदिनी। के, २४ ॥ (शब्दालङ्कारविशेषे, पुं। स तु अनु-प्रासभेद:। तल्लक्षणं यथा, साहित्यदर्पणे।१०।४। "छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा ॥" तदुदाहरणं यथा, तत्रैव,— [अमराम्। "आदाय बकुलगन्धानन्धीकुर्व्वन् पदे पदे भ्रमरान्। अयमेति मन्दमन्दं कावेरीवारिपावन: पवन: ॥" अत्र गन्धानन्धीति संयुक्तयो: कावेरीवारीत्य-संयुक्तयो: पावन: पवन इति बहूनां व्यञ्जनानां सकृदावृत्ति:। छेको विदग्धस्तत्प्रयोज्यत्वादेष छेकानुप्रास: ॥")

छेकोक्ति:, स्त्री, ( छेकानां विदग्धानां उक्ति:।) वक्रोक्ति:। इति जटाधर: ॥ (विशेषस्तु वक्रोक्ति-शब्दे ज्ञेय: ॥ )

छेद, त् क छेदे। इति कविकल्पद्रुम: ॥ ( अदन्त चुरां-परं-सकं-सेट्।) अचिच्छेदत्। इति दुर्गादास: ॥

छेद:, पुं, ( छिद + भावे घञ्।) छेदनम्। इति हेमचन्द्र:। ६। ३६ ॥ ( यथा, कुमारे।२।४१। "तेनामरवधूहस्तै: सदयालूनपल्लवा:। अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमा: ॥" माघ:। अपगति:। यथा, शाकुन्तले २य अङ्के। "मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपु: सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयो: ॥" * ॥ छिद्यते इति। छिद् + कर्म्मणि घञ्।) खण्डम्। इति त्रिकाण्डशेष: ॥ (यथा, कुमारे। १। ४। "बलाहकच्छेदविभक्तरागा-मकालसन्ध्यामिव धातुमत्ताम् ॥")

छेदनं, क्ली, (छिद् + भावे ल्युट्।) अवयव द्विधा करणम्। तत्पर्य्याय:। वर्द्धनम् २। इत्यमर:। ३। २। ७ ॥ कर्त्तनम् ३ कल्पनम् ४ छेद: ५। इति हेमचन्द्र: ॥ ( यथा, मनु:। ११। १४२। "फलदानान्तु वृक्षाणां छेदने जप्यमृक्शतम् ॥" नाश:। अपनोदनम्। यथा, महाभारते। ३। १८५। २४। "मुक्तेव तु महात्मानो गुणयोऽभ्यवदन् हतम्। सनत्कुमारं धर्म्मज्ञं संशयच्छेदनाय वै ॥" ॥) भेद:। इति मेदिनी। ने, ६५ ॥ (छिनत्तीति। छिद् + ल्यु:। छेदके, त्रि। यथा, महाभारते। २। ५४। ८। "प्रच्छन्नो वा प्रकाशो वा योगो योऽरिं प्रबाधते। तद्वै शस्त्रं शस्त्रविदां न शस्त्रं छेदनं स्मृतम् ॥" तथाच तत्रैव। १। ३१। ६।

"ज्वलनार्कप्रभं घोरं छेदनं सोमहारिणाम्। घोररूपं तदा तस्य यन्त्रं देवै: सुनिर्म्मितम् ॥")

छेदनीय:, पुं, ( छेत्तुं योग्य:। छेद + "अर्हे कृत्यतृचश्च।" ३।३।१६९। इति अनीयर्।) कतकवृक्ष:। इति राजनिर्घण्ट: ॥ (कतकशब्दे गुणादयोऽस्य ज्ञातव्या: ॥) छेद्ये, त्रि ॥ (यथा, सुश्रुते। १। २७। "अनुत्थितानि शल्यानि छेदनीयमुखानि च ॥")

छेदि:, त्रि, ( छिनत्तीति। छिद् + "कृपिभि-दिभ्य इति।" उणां ४। ११८। इति इन्।) छेदनकर्त्ता। इत्युणादिकोष: ॥

छेदितं, त्रि, ( छेद त् क छेदे + क्त।) छिन्नम्। इति हेमचन्द्र: ॥ (यथा, काशीखण्डे।२८।६२। "छेदिताखिलमायौघा छद्मघ्नी छलहारिणी ॥")

छेमण्ड:, पुं, ( छम अदने + बाहुलकात् अण्डन् अत एत्वञ्च।) पितृहीन:। इत्युणादिवृत्ति:। १। १२८। छेमड़ा इति भाषा ॥

छेलु:, पुं, सोमराजी। इति शब्दचन्द्रिका ॥

छो, य छेदे। इति कविकल्पद्रुम: ॥ ( दिवां-परं-सकं-अनिट्।) कृन्निच्छेद:। य, छ्यति धान्यं लोक:। इति दुर्गादास: ॥

छोटिका, स्त्री, ( छुटति यज्ञविघ्नकारिणो मायां छिनत्तीति। छुट + ण्वुल्। टापि अत इत्वञ्च।) तर्ज्जन्यङ्गुष्ठाङ्गुलिध्वनि:। यथा, "छोटिकाभि-र्दशदिग्बन्धनं कृत्वा भूतशुद्धिं कुर्य्यात्।" इति तन्त्रसार: ॥

छोटी [ न् ] पुं, ( छुटति मीनजालतया खण्डी-भवतीति। छुट + णिनि:।) धीवर:। इति त्रिकाण्डशेष: ॥

छोरणं, क्ली, ( छुर + भावे ल्युट्।) परित्याग:। इति त्रिकाण्डशेष: ॥ छोड़न इति हिन्दी भाषा ॥

छोलङ्ग:, पुं, ( छुरतीति। छुर + बाहुलकात् अङ्गच्। ततो रस्य लत्वम्।) मातुलुङ्ग:। इति शब्दरत्नावली ॥ टावालेबु इति भाषा ॥

छ्यु, ङ गत्याम्। इति कविकल्पद्रुम: ॥ (भ्वां-आत्मं-सकं-सेट्।) ङ, छ्यवते। इति दुर्गादास: ॥

---

# ज

ज, जकार:। स व्यञ्जनाष्टमवर्ण:। चवर्गतृतीय-वर्णश्च। अस्योच्चारणस्थानं तालु। इति व्याकरणम् ॥ (यदुक्तं सिद्धान्तकौमुद्याम्। "इचु-यशानां तालु।" तथाच शिक्षायाम्। "कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू ॥") अस्योत्पत्तिर्यथा, प्रपञ्चसारे। "वियदीरिताग्निरोष्ठ्यौ यां चवर्गश्च यथा ॥" (वङ्गाक्षरेण) अस्य लेखनप्रकारो यथा, वर्णोद्धारतन्त्रे। "अर्द्धाध:कुञ्चिता रेखा तासु मध्यार्द्धकिस:। वामदेवी कमला विष्णु: हिस्रा माया प्रकी-र्त्तिता ॥"

अस्य स्वरूपं यथा, कामधेनुतन्त्रे। "जकारं परमेशानि। या स्वयं मध्यकुण्डली। शरच्चन्द्रप्रतीकाशं सदा त्रिगुणसंयुतम् ॥ पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा। त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं प्रिये ! ॥" तस्य ध्यानं यथा, वर्णोद्धारतन्त्रे। "ध्यानमस्य: प्रवक्ष्यामि शृणुष्व कमलानने!। नानालङ्कारसंयुक्तां भुजैरष्टादशैर्युताम् ॥ रक्तचन्दनदिग्धाङ्गीं विचित्राम्बरधारिणीम्। त्रिलोचनां जगद्धात्रीं वरदां भक्तवत्सलाम् ॥ एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ॥" तस्य पर्य्याया यथा,— "ज: क्षयी वासर: सूक्ष्मी भोगदा विजया स्थिरा। लवदेवो जयो वेला वालकौ सुमुखी विभु: ॥ लम्बोदरी स्मृति: शाखा सुप्रभा कर्णकाधरा। दीर्घबाहू रविर्जेशो नन्दी तेजा: सुराधिप: ॥ जवनो वेगितो वामो नागनाथ: सदात्मक:। कुम्भापतीश्वरो वेगी चामीरो महविह्वल: ॥" इति नानातन्त्रम् ॥ (धातुपाठेऽनुबन्धविशेष:। यथा, कविकल्पद्रुमे। "जो ज्वलाद्यो णिरद्य्रस्तत्: साधुर्ष्ठिरजक-युत: ॥" छन्द:शास्त्रोक्तमध्यगुरुगणविशेष:। (।ऽ।) यदुक्तं छन्दोमञ्जर्य्याम्। "जो गुरुमध्यगतो रलमध्य: ॥" इति ॥ )

ज:, पुं, ( जयति जायते वा। जि जन् वा + "अन्येष्वपि दृश्यते।" ३। २। १०१। इति ड:।) मृत्युञ्जय:। जनि:। तातभाक्तम्। जनार्दन:। इति मेदिनी। जे, १ ॥ विषम्। भुक्ति:। तेज:। पिशाच:। इति शब्दरत्ना-वली ॥ वेग:। इत्येकाक्षरकोष: ॥

ज:, त्रि, ( जयति विपक्षमिति। जि + ड:।) जेता। वेगित:। इति शब्दरत्नावली ॥

जकुटं, क्ली, (जं जातं सत् कुटति वक्रीभवतीति। कुट् कौटिल्ये + "इगुपधज्ञेति।"३।१।१३५। इति क:।) वार्त्ताकुपुष्पम्। इति मेदिनी ॥ टे, ४३ ॥

जकुट:, पुं, ( जो जात: सन् कुटतीति। कुट् + क:।) मलयपर्व्वत:। कुक्कुर:। इति मेदिनी ॥ टे, ४३ ॥

जक्ष, इ म ङ दाने। गतौ। इति कविकल्पद्रुम: ॥ ( भ्वां-आत्मं-सकं-सेट्।) इ, जङ्क्षते। न मध्य-पाठे मैत्रेयसिद्धे इदनुबन्धो वेदेमूर्द्धन्यमेदार्थ:। म, अजङ्क्षि अजाङ्क्षि जङ्क्षं जङ्क्षं जाङ्क्षं जाङ्क्षं अनुबन्धबलाद्रुपधाया अपि दीर्घ:। तन्मते तु अत्र दीर्घविधिवैयर्थ्यं नाशिष्यते। ङ, जङ्क्षते। इति दुर्गादास: ॥

जक्ष, ल इ र भक्षे। हासे। इति कविकल्पद्रुम: ॥(अदां-परं-भक्षे सकं-हासे-अकर्म-सेट्।) केचित्तु निघण्टुपुराणे यक्षराक्षसोत्पत्तिप्रसङ्गे जक्षलामिति येरुक्तं ते वै यक्षास्तु यक्षणादिति भक्षणार्थेनैव यक्षशब्दव्युत्पादनादितमन:-स्वादिं मन्यन्ते ॥ तत्र अमरटीकायां सर्व-

जकारस्यान्तःस्थयकारस्थाने यो भवति स इत्युक्ता वर्णादिरर्थे निर्णीतः । च, जक्षति । तु च, जक्षिति । इति दुर्गादासः ॥

जक्षणं, क्ली, ( जक्ष+भावे ल्युट् । ) भक्षणम् । इति हेमचन्द्रः । ३ । ८७ ॥

जक्षः, पुं, ( जक्षिति भक्षयति शरीरं नाशयतीत्यर्थः । जक्ष+बाहुलकात् मन् । ) यक्ष्मा । इत्यमरटीका । ( केचित्तु "अर्त्तिस्तुसुहु..." १ । १३९ । इत्यादिसूत्रेण यक्ष पूजायामिति धातोर्मन्प्रत्ययनिष्पन्नात् यक्ष्मःशब्दादेवेति मन्यन्ते ॥ )

जक्ष्मा, [ न् ] पुं, ( जक्षिति भक्षयति शरीरं नाशयतीत्यर्थः । जक्ष+"सर्व्वधातुभ्यो मनिन् ।" उणां । ४ । १४४ । इति मनिन् । ) यक्ष्मरोगः । इत्यमरटीकायां भरतः ॥

जगच्चक्षुः, [स्] पुं, ( जगतां भुवनानां चक्षुरिव प्रकाशकत्वात् । ) सूर्य्यः । इति हेमचन्द्रः । २ । १२ ॥ ( यथा, काशीखण्डे । ४६ । ४४ ।
"इति काशीप्रभावज्ञो जगच्चक्षुस्तमोनुदः ।
कृत्वा द्वादशधात्मानं काशीपुर्य्यां व्यवस्थितः ॥")

जगत्, क्ली, ( गच्छतीति । गम+"द्युतिगमिजुहोतीनां द्वे च ।" ३ । २ । १७८ । इत्यस्य वार्त्तिं इति क्विपि द्वित्वे च "गमः क्वौ ।" ६ । ४ । ४० । इति मलोपे तुक् । ) विश्वम् । तत्पर्य्यायः । जगती २ लोकः ३ विष्टपम् ४ भुवनम् ५ । इत्यमरः । २ । १ । ६ ॥ विष्टपम् ६ । इति तट्टीका ॥ ( यथा, मनुः । १ । ५२ ।
"यदा स देवो जागर्त्ति तदेदं चेष्टते जगत् ।
यदा स्वपिति शान्तात्मा तदा सर्व्वं निमीलति ॥"
गच्छति इतस्ततो यातीति । ) वायौ, पुं । ( गच्छन्त्यस्मिन् जीवा इति । महादेवः । यथा, महाभारते । १३ । १७ । १५१ ।
"विमुक्तो मुक्ततेजाश्च श्रीमान् श्रीवर्द्धनो जगत् ॥")
जङ्गमे त्रि । इति मेदिनी । ते, १०८ ॥

जगत्कर्त्ता, [ऋ] पुं, ( करोतीति । कृ+तृच् । ततो जगतः कर्त्ता कारकः । ) ब्रह्मा । इति हेमचन्द्रः । २ । १२६ ॥

जगत्प्राणः, पुं, ( जगतां विश्वस्थजीवानां प्राणो जीवनम् । ) वायुः । इत्यमरः । १ । १ । ६५ ॥

जगत्साक्षी, [न्] पुं, ( जगतां भुवनानां साक्षी कर्म्मद्रष्टा । ) सूर्य्यः । इति हेमचन्द्रः ।२।१२॥

जगती, स्त्री, (गच्छति कार्य्यत्वात् नष्टा भवतीति । गम+"वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च ।" उणां २ । ८४ । इति अतिप्रत्ययेन निपातनात् साधुः । ततः शतृत्वात् "उगितश्च ।" ४ । १ । ६ । इति ङीप् । ) भुवनम् । ( यथा, रामायणे । २ । ६९ । ११ ।
"अपीऽपि सागरं शुष्कं चन्द्रञ्च पतितं भुवि ।
उपरुद्धाञ्च जगतीं तमसैव समावृताम् ॥")
पृथ्वी । ( यथा, मार्कण्डेये । ८ । २२ ।
"समाख्याता ततो देवी सर्व्वदेवजनेश्वरम् ।
जगत्या पातयामास भित्त्वा शूलेन वक्षसि ॥")
जनः । छन्दोविशेषः । इति मेदिनी । ते,१०९ ॥ (सा च द्वादशाक्षरा वृत्तिः । यथा, छन्दोमञ्जर्य्यां १ स्तबके ।
"त्रिष्टुप् च जगती चैव तथातिजगती मता ॥"
अस्या उदाहरणादीनि छन्दःशब्दे द्रष्टव्यानि ॥)
जम्बूद्वीपम् । इति हैमचन्द्रः ॥

जगदम्बा, स्त्री, ( जगतामम्बा माता । ) दुर्गा । यथाह कश्चित् ।
"अदूरे जगदम्बाया शारदीयो महोत्सवः ॥"
"जगदम्बापदद्वन्द्वमापदां पथ्यसाधनम् ॥"
इति शूलपाणिः ॥
अपि च ब्रह्मवैवर्त्ते प्रकृतिखण्डे ३१ अध्याये ।
"विष्णुमायां भगवतीं दुर्गां दुर्गतिनाशिनीम् ।
प्रकृतिं जगदम्बाञ्च पतिपुत्त्रवतीषु च ॥"

जगदम्बिका, स्त्री, ( जगतां अम्बा जननी । ततः स्वार्थे कन् । टापि अत इत्वम् । ) दुर्गा । यथा,
"सृष्टिस्थितिविनाशानां विधात्री जगदम्बिका ।
अहं सर्व्वान्तरस्था च संसारार्णवतारिणी ॥"
इति भगवतीगीतायां ५ अध्यायः ॥
(यथा च देवीभागवते । १ । ७ । ४६ ।
"कामं कुरुष्व वधमद्य ममैव मात-
र्दुःखं न मे मरणजं जगदम्बिकेऽत्र ॥")

जगदाधारः, पुं, ( जगतामाधारः आश्रयः । ) वायुः । इति शब्दचन्द्रिका ॥ जगदाश्रयः । यथा,
"कालो हि जगदाधारः ।" इति स्मृतिः ।

जगदीशः, पुं, ( जगतामीशो नियन्ता । ) विष्णुः । इति शब्दरत्नावली ॥ ( यथा, पाद्मे उत्तरखण्डे । १११ अध्याये ।
"सर्व्वान्तर्यामी जगदीशश्चाणूरमर्द्दनः प्रभुः ॥"
विधाता । यथा, कुमारे । २ । ९ ।
"जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः ।
जगदादिरनादिस्त्वं जगदीशो निरीश्वरः ॥"
स्वनामख्यातपण्डितविशेषः । स च न्यायशास्त्रटीकाव्याख्यावादिग्रन्थप्रणेता अस्य जन्मस्थानं नवद्वीपः ॥)

जगद्गौरी, स्त्री, ( जगत्सु मध्ये गौरी । ) मनसादेवी । इति शब्दरत्नावली ॥

जगद्धात्री, स्त्री, (जगतां धात्री विधात्री ।) दुर्गाविशेषः । अस्याः पूजायाः कालो विधिश्च यथा, निगमकल्पसारज्ञानसारस्मृति ग्रन्थे दुर्गाकल्पे ।
श्रीशिव उवाच ।
"प्रसीद जगतां मातर्ज्जगन्निस्तारकारिणि ! ।
अतएव महेशानि ! तवाहं शरणागतः ॥
त्वया यत् कथितं पूर्व्वं तत् सर्व्वञ्च श्रुतं मया ।
जगद्धात्री महादुर्गा चतुर्व्वर्गफलप्रदा ॥
तस्याः पूजाविधिर्द्दिनं कालं तत्र प्रकाशितम् ।
तदेव कथयेशानि ! श्रोतुमिच्छामि साम्प्रतम् ॥
श्रीदेव्युवाच ।
कथयामि महेशान ! सावधानोऽवधारय ।
तस्याः पूजाविधिर्द्दिनं समयं भावभेदतः ॥
कार्त्तिके शुक्लपक्षे च या दुर्गानवमी तिथिः ।
सा प्रशस्ता महादेव ! महादुर्गाप्रपूजने ॥
प्रातश्च सात्त्विकी पूजा मध्याह्ने राजसी मता ।
सायाह्ने तामसी पूजा त्रिविधा परिकीर्त्तिता ॥
जपयज्ञादिभिर्द्देव ! इति त्रैकालिकी मता ।
अथान्यत् संप्रवक्ष्यामि शृणुष्व परमेश्वर ! ॥
सप्तम्यादिनवम्यान्तं पूजाकालमितीरितम् ।
त्रिदिने त्रिविधा पूजा दशम्याञ्च विसर्ज्जयेत् ॥
पूजापरेऽपि देवेश ! तथाप्यत्र विसर्ज्जनम् ।
बोधितायाः प्रकारेण तत्र पूजा प्रकीर्त्तिता ॥
श्रीशिव उवाच ।
त्रिसन्ध्याव्यापिनी सा तु यदि शुक्लनवमी तिथिः ।
त्रिकाले त्रिविधा पूजा कथं देया जगन्मयि ! ॥
कथयस्व महेशानि ! इति मे संशयो हृदि ॥
श्रीदेव्युवाच ।
सा प्रातर्व्यापिनी यत्र वासरे नवमी तिथिः ।
त्रिसन्ध्यं पूजयेत्तत्र वासरे जगदम्बिकाम् ॥
मुहूर्त्तव्यापिनी चापि तत्र ग्राह्या महेश्वर ! ।
एककाले त्रिधा पूजा साधको नैव कारयेत् ॥
इति ते कथितं वत्स ! किमन्यत् श्रोतुमिच्छसि ।
कथयिष्यामि तद्भक्त्या तव प्रीत्या त्रिलोचन ! ॥"
श्रीपार्व्वत्युवाच ।
"दशम्यां बलिदानन्तु निषिद्धं जगदीश्वर ! ।
कथं त्रिकालं पूजा वा सम्भवेत् परमेश्वर ! ॥
श्रीशिव उवाच ।
नवमीतिथिमाश्रित्य यत्र पूजाविधिर्भवेत् ।
निषिद्धं बलिदानन्तु दशम्यां तत्र सुन्दरि ! ॥
नवमीदिनमाश्रित्य पूजाविधिरिहोदितः ।
दशम्यां बलिदानन्तु निषिद्धं नात्र पार्व्वति ! ॥
ज्ञानान्तसारे पूर्व्वं पूजाप्रकारं उक्तः ।
"मुहूर्त्तव्यापिनी चापि प्रातश्चेन्नवमी तिथिः ।
तद्दिने पूजनं कार्य्यं त्रिसन्ध्यं परवर्णिनि ! ॥
त्रिकालं पूजयेत्तत्र नैककाले कदाचन ॥"
अथ कात्यायनीतन्त्रे अष्टसप्ततिपटले ।
"कुम्भराशिगते चन्द्रे नवम्यां कार्त्तिकस्य च ।
उपस्थोदितो भानुर्दुर्गामाराध्य यत्नवान् ॥
पुत्त्रारोग्यबलं लेभे लोकसाम्राज्यमेव च ।
तां तिथिं प्राप्य मनुजः शनिभौमदिने यदि ॥
प्रपूजयेन्महादुर्गां धर्म्मकामार्थमोक्षदाम् ॥"
शक्तिसङ्गमतन्त्रे ।
"कार्त्तिकस्य सिते पक्षे नवम्यां जगदीश्वरीम् ।
त्रिकालमेककालं वा वर्षे वर्षे प्रपूजयेत् ॥
निर्म्माय प्रतिमां शक्त्या जगद्धात्र्या विधानतः ।
पूजयित्वा परदिने प्रतिमां तां विसर्ज्जयेत् ॥
एवं कृत्वा चक्रवर्त्ती भवेत् साधकसत्तमः ।
पुत्त्रपौत्त्रधनैश्वर्य्यसंयुतास्य भवेत् पुरी ॥"
तन्त्रान्तरे ।
"कुजवारे शुभाद्यायां नवम्यान्तु जगत्प्रभुः ।
प्रादुर्भूता महेशानी तत्र तां परिपूजयेत् ॥"
तन्त्रान्तरे ।
"त्रिकालं पूजयेद्दुर्गां ह्यथवैकान्तरेण च ।
नानारत्नविधानेन गीतवाद्यपुरःसरम् ॥
कार्त्तिकस्य सिते पक्षे नवम्याञ्च विशेषतः ।
कृत्वैवं साधकश्रेष्ठो लभेद्राज्यमकण्टकम् ॥"

योगिनीतन्त्रे ।

"कार्त्तिकेऽमलपक्षे तु नवम्याञ्च विशेषतः ।

प्रातर्भानु जगद्धात्रीं पूजयेद्दीपमालया ॥"

आगमतत्त्वसारे ।

"कार्त्तिकेऽमलपक्षे तु नवम्यां भौमवासरे ।

आविर्भूता जगद्धात्री युगादौ दैत्यनाशिनी ॥"

उत्तरकामाख्यातन्त्रे ।

"कार्त्तिके शुक्लपक्षे तु त्रेतायां प्रथमेऽहनि ।

त्रिसन्ध्यं पूजयेद्देवीं दुर्गां सम्पत्प्रवृद्धये ॥" * ॥

कुब्जिकातन्त्रे ।

"कार्त्तिके शुक्लपक्षे तु नवम्यां जगदम्बिकाम् ।

दुर्गां प्रपूजयेद्भक्त्या धर्म्मकामार्थसिद्धये ॥" * ॥

दुर्गाकल्पे विद्योत्पत्तिः ।

"कार्त्तिके शुक्लपक्षेऽह्नि भौमवारे जगत्प्रसूः ।

सर्व्वदेवहितार्थाय दुर्वृत्तशमनाय च ॥

आविरासीज्जगच्छान्त्यै युगादौ परमेश्वरी ॥"

व्रतकालविवेकधृतवचनम् ।

"कार्त्तिकेऽमलपक्षस्य त्रेतायां नवमेऽहनि ।

पूजयेत्तां जगद्धात्रीं सिंहपृष्ठे निषेदुषीम् ॥" * ॥

स्मृतिः ।

"युगाद्या वर्षवृद्धिश्च सप्तमी पार्व्वतीप्रिया ।

रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता ॥" * ॥

तत्त्वसारार्णवे ।

"कार्त्तिकेऽमलपक्षे तु युगाद्या नवमी स्मृता ।

पूर्व्वाह्णसमये तत्र पूजाविधिरिहोदितः ॥" * ॥

भविष्यपुराणब्रह्मतन्त्रार्णवयोः ।

"कार्त्तिके शुक्लपक्षे तु युगाद्या नवमी स्मृता ।

पूर्व्वाह्णसमये काष्ठाम्बिका परदिने यदि ॥

तत्र पूजादिकं कुर्य्यात् पित्रादिभिश्च पूजयेत् ॥"

स्मृतिसागरे ।

"कार्त्तिकस्य युगाद्यायामृद्धिकामोऽर्चयेदुमाम् ॥"

इति जगद्धात्रीपूजाकालव्यवस्था ॥ * ॥ * ॥

अथ जगद्धात्रीविद्योत्पत्तिः ।

श्रीपार्व्वत्युवाच ।

"भगवन् ! प्राणनाथेश ! सर्व्वतत्त्वविशारद ! ।

श्रुता कात्यायनीविद्यासमुत्पत्तिस्त्रिलोचन ! ॥

महादुर्गाजगद्धात्रीविद्योत्पत्तिर्भवेद्यतः ।

तत् सर्व्वं ब्रूहि भगवन् ! कृपया परमेश्वर ! ॥

यदि न कथ्यते देव ! विमुञ्चामि तदा तनुम् ॥

श्रीशिव उवाच ।

शृणु पार्व्वति ! वक्ष्यामि रहस्यं परमाद्भुतम् ।

यत् श्रुत्वा लभते देवि ! सौभाग्यं सुखमुत्तमम् ॥

पुरा पुरन्दरमुखाः ईश्वरत्वाभिमानिनः ।

प्राहुः किमीश्वरोऽस्मत्तोऽतिरिक्तः सुरानिति ॥

अथ दुर्गा जगन्माता नित्या चैतन्यरूपिणी ।

एतेषां धर्म्मसेतूनामित्यादीनां नियन्त्रणम् ॥

करिष्यामीति निश्चित्य ज्योतीरूपं दधात्मनम् ।

तेषामाविरभूद्दुर्गा जगद्धात्री जगन्मयी ॥

कोटिसूर्य्यप्रतीकाशा चन्द्रकोटिसमप्रभा ।

ज्वलन्तं पर्व्वतमिव सर्व्वलोकभयङ्करी ॥

तद्दृष्ट्वा सुराः सर्व्वे भयमापुर्व्विचेतसः ।

किमेतत्त्र विनिश्चेतुं प्रत्तास्ते ह्यभवन् सुराः ॥

वायुमाहुः समाहूय किमेतत् परमाद्भुतम् ॥

विजानीहि महावीर ! मातरिश्वा दिवःपते ! ॥

ततो वायुद्रुतं तत्र गतस्तेजोऽन्तिकं ततः ।

तमन्तिकमुपायातं प्राह तेजोमयी ततः ॥

बलवान् कस्त्वमायातो वीर्य्यं किञ्चास्ति वा त्वयि ।

आदातुं शक्नुते सर्व्वं पृथिवीतलसम्भवम् ॥

इति प्रत्युक्तवान् वायुः चाद्यं तत्रैव तिष्ठति ।

आदत्स्वैतत् तृणमिति निदधौ वायवे तृणम् ॥

वायुः सर्व्वप्रयत्नेन नादातुं तत् क्षमोऽभवत् ।

ततो देवाः प्राहुरग्निं भीता उद्विग्नमानसाः ॥

अग्ने ! एतद्विजानीहि किमेतत् कर्म्म चाद्भुतम् ।

इत्युक्तो देवतावृन्दैरग्निस्तेजोऽन्तिकं गतः ॥

अग्नरा जातवेदा वा तेजो वागितुरवाच तम् ।

स प्रोक्तवानग्निरस्मि सर्व्वदाहकशक्तिकः ॥

दहैतत्तृणमत्यल्पमिति तस्मै तृणं ददौ ।

अग्निः सर्व्वप्रयत्नेन दग्धुं नैतत् क्षमोऽभवत् ॥

ततो निवृत्तो वह्निर्भूत्वा सोऽपत्रपान्वितः ।

एकत्रस्थाः सुराः सर्व्वे मन्त्रयामासुरुत्तमम् ॥

इयमेवेश्वरी नूनं कोऽस्मासो नेश्वरा वयम् ।

इति निश्चित्य सुधियस्तुष्टुवुः परमेश्वरीम् ॥

प्रादुर्द्देवगणाः सर्व्वे क्षमीशा नेश्वरा वयम् ।

ईश्वरत्वाभिमानेन यदस्माकं सुदुष्कृतम् ॥

क्षन्तुमर्हसि तत् सर्व्वं कृपया जगदम्बिके ! ।

तव रूपं सुगोप्यं यच्चाख्यातं सर्व्वमङ्गलम् ॥

तद्द्रष्टुं वयमिच्छामो देहि दर्शनमुत्तमम् ।

इत्युक्तानां सुरस्त्रीणामाविरासीच्छिवाम्बरे ॥

तेजस्यन्तर्हिते तस्मिन् चमत्कारकलेवरे ।

मृगेन्द्रोपरि सुस्मेरा सर्व्वालङ्कारभूषिता ॥

चतुर्भुजा महादेवी रक्ताम्बरधरा शुभा ।

बालार्कसदृशीदेहा नागयज्ञोपवीतिनी ॥

त्रिनेत्रा कोटिचन्द्राभा देवर्षिमुनिसेविता ।

दर्शयामास देवानामेवं रूपं जगन्मयी ॥

ततस्तां तुष्टुवुर्देवा जगद्धात्रीं महेश्वरीम् ।

वरं प्रापुः सुरगणा यथेष्टं निजधामनि ॥

तत्रैवान्तर्हिता देवी महादुर्गा जगन्मयी ।

इति ते कथितं भद्रे ! विद्योत्पत्तिं सुदुर्लभाम् ॥"

इति कात्यायनीतन्त्रे ७६ पटलः ॥ * ॥

श्रीशिव उवाच ।

"अथ दुर्गामनुं वक्ष्ये शृणुष्व हरवल्लभे ! ।

यस्य प्रसादमात्रेण मुच्यते भवबन्धनात् ॥

धान्तवर्णं समुद्धृत्य वामकर्णविभूषितम् ।

इन्दुबिन्दुसमायुक्तं बीजं परमदुर्लभम् ॥

चतुर्व्वर्गप्रदं साक्षान्महापातकनाशनम् ।

एकाक्षरीसमा नास्ति विद्या त्रिभुवने प्रिये ! ॥

कूर्च्चाद्यां वा जपेद्विद्यां तदन्ते वह्निसुन्दरी ।

लज्जाद्यां वा जपेद्विद्यां पञ्चार्णं वा जपेत् सुधीः ॥

वधूबीजयुतां वापि स्वाहान्तां वा जपेत् पुनः ।

लज्जाद्यां वा जपेद्विद्यां चतुर्व्वर्गफलाप्तये ॥

वाग्भवाद्यां जपेद्वापि प्रणवाद्यां जपेत् पुनः ।

कामबीजादिकां वापि पञ्चार्णां वा जपेत् पुनः ॥

त्र्यक्षरी त्रिविधा विद्या कथिता तव सुव्रते पुरा ।

विना मन्त्रैर्विना पुष्पैर्विना होमपुरःसरैः ॥

प्राणायामं विना देवि ! जपमात्रेण सिद्धिदा ।

मन्त्रस्यास्य ऋषिर्द्देवि ! नारदः परिकीर्त्तितः ॥

गायत्री छन्द आख्यातं जगद्धात्री च देवता ।

चतुर्व्वर्गप्रदा दुर्गा सर्व्वकर्म्मसु कीर्त्तिता ॥

दीर्घस्वरसमायुक्तबीजेनाङ्गानि पार्व्वति ! ।

विन्यसेदात्मनो देवि हृदयादिषु शङ्करि ! ॥

पूर्व्ववद्व्यापकन्यासं पूर्व्ववत् कर्म्म चाचरेत् ।

कालीवदाचरेद्विद्यां जपेद्विद्यामनुत्तमम् ॥

जगद्धात्र्यर्च्चने देवि ! पुरश्चरणमीरितम् ।

यथास्थाने यथाकाले यथाचारविधानतः ॥

प्रजपेत् परया भक्त्या दुर्गां दुर्गतिनाशिनीम् ॥ * ॥

ध्यानमस्याः प्रवक्ष्यामि शृणुष्व नगनन्दिनि ! ॥

सिंहस्कन्धाधिसंरूढां नानालङ्कारभूषिताम् ।

चतुर्भुजां महादेवीं नागयज्ञोपवीतिनीम् ॥

शङ्खचक्रधनुर्व्वाणलोचनत्रितयान्विताम् ।

रक्तवस्त्रपरीधानां बालार्कसदृशीतनुम् ॥

नारदाद्यैर्मुनिगणैः सेवितां भवसुन्दरीम् ।

त्रिवलीवलयोपेतनाभिनालमृणालिनीम् ॥

रत्नद्वीपे महाद्वीपे सिंहासनसमन्विते ॥

प्रफुल्लकमलारूढां ध्यायेत्तां भववेहिनीम् ।

एवं ध्यात्वा जगद्धात्रीं पूर्व्वोक्तपूजनं चरेत् ॥

यन्त्रमस्याः प्रवक्ष्यामि शृणुष्व हरवल्लभे ! ।

त्रिकोणमितयत्नादौ षट्कोणं विलिखेत्ततः ॥

अष्टपत्रं ततो लिख्य भ्रिरेखावेष्टितं ततः ।

चतुर्भूपुरसंयुक्तं विलिखेद्विधिनामुना ॥

तत्र तां पूजयेद्देवीं कलप्रणतिरूपिणीम् ।

प्रभाद्याः शक्तयः पूज्या गन्धाद्यैर्नवकोणके ॥

प्रभा माया जया सूक्ष्मा विशुद्धा नन्दिनी पुनः ।

सुप्रभा विजया सर्व्वसिद्धिदा नव शक्तयः ॥

श्रीमाद्याः पूजयेत्तास्तु रक्तचन्दनदूर्व्वकैः ।

शङ्खपद्मनिधी देव्या वामदक्षिणयोस्ततः ॥

पूजयेत् परया भक्त्या रक्तचन्दनदूर्व्वकैः ।

अर्घ्यदानं ततः कुर्य्यात् पूजान्ते नगनन्दिनि ! ॥

अङ्गावृतिः पुनः पूज्या पत्रकोणेषु मातरः ।

वज्राद्यायुधसंयुक्ता भूपुरे लोकनायकाः ॥"

इति कात्यायनीतन्त्रे ७७ पटोलः ॥ * ॥

श्रीशिव उवाच ।

"पूजा तिथिविशेषेण चतुर्व्वर्गफलाप्तये ।

कर्त्तव्या या तु दुर्गायास्तां शृणुष्व शुभानने ! ॥

अष्टम्याञ्च चतुर्द्दश्यां नवम्यां वापि यत्नतः ।

यः पूजयेन्महादुर्गां सोऽभीष्टफलमाप्नुयात् ॥

पौर्णमास्याममायां वा रविसंक्रमणे तथा ।

शनिभौमदिने चैव पूजयेत् परमेश्वरीम् ॥

सुखं सौभाग्यमारोग्यमैश्वर्य्यं लभते ध्रुवम् ।

शनिभौमदिने चैव यदि स्यादष्टमी तिथिः ॥

तत्र पूज्या जगद्धात्री पुत्रपौत्रधनप्रदा ।

सोमवारेऽप्यमावास्या मघानक्षत्रसंयुता ॥

उत्तरा सप्तमीयुक्ता आदित्ये च पार्व्वति ! ।

चतुर्थ्यङ्गारवारे च रोहिणीसंयुता यदि ॥

शुक्लाष्टम्यां तथा काली यदि स्यात् परमेश्वरि ! ।

एषु पूजा महादेव्याः कर्त्तव्या सर्व्वसिद्धये ॥

मधुमासे सिताष्टम्यां वैशाखस्तिलर्येऽहनि ।

पौर्णमास्यां तथा ज्येष्ठे अमायाञ्च महेश्वरि ! ॥
मिथुनेऽर्के द्वितीयायां आषाढे द्वादशीदिने ।
भाद्रे भाद्रपदे कृष्णे आश्विने शुक्लपक्षके ॥
सप्तम्यामेव चाष्टम्यां नवम्याञ्च विशेषतः ।
अमायां कार्त्तिके चैव नवम्यां शुक्लपक्षके ॥
षष्ठ्यां मार्गशिरे मासि पौषेऽष्टम्यां शिवेश्वरि ।
माघे च सितपञ्चम्यां फाल्गुन्यां च सुरेश्वरि ! ॥
एषु द्वादशमासेषु तिथिष्वेतासु पार्व्वतीम् ।
पूजयेत् परया भक्त्या यथाविभवविस्तरैः ॥
राजराजेश्वरो भूत्वा वसेत् कल्पायुतं दिवि ।
पुत्रपौत्रधनैर्युक्तोऽभिजायते ऽचिरात् ॥
अन्ते देवीपुरं याति भुक्त्वा भोगान् यथेप्सि-
तान् ॥
श्रीपार्व्वत्युवाच ।
देवदेव ! महादेव ! विश्वनाथ ! महेश्वर ! ।
श्रुता तव मुखाम्भोजाद्दुर्गापूजा महाफला ॥
केन वा पूजिता देवी कस्य वा किञ्च सिध्यति ।
केन प्रकाशिता मासि तत् सर्व्वं कथय प्रभो ! ॥
श्रीशिव उवाच ।
रामरावणयोर्युद्धे दुर्गा रामेण पूजिता ।
अवधीद्रावणं राम इषे मासि प्रपूजनात् ॥
तेन लोकाश्चरिष्यन्ति दुर्गायाः शारदोत्सवम् ।
एवमाराध्य देवेशीमिन्द्रजिद्रावणात्मजः ॥
अभवत् कार्त्तिके यो वै दुर्गामेवं समर्च्चयन् ।
अमायां कार्त्तिके मासि तारकासुरनाशकः ॥
कुम्भराशिगते चन्द्रे नवम्यां कार्त्तिकस्य च ।
उग्रसेनोऽदितो भानुर्दुर्गामाराध्य यत्नवान् ॥
पुत्रादीष्टवरं लेभे लोकख्यातिमेव च ।
तां तिथिं प्राप्य मनुजः शनिभौमदिने यदि ॥
प्रपूजयेन्महादुर्गां धर्म्मकामार्थमोक्षदाम् ।
एवं मार्गशिरे मासि वृषराशिगते विधौ ॥
चतुर्द्दश्यां निशायान्तु चन्द्रः संपूज्य पार्व्वतीम् ।
महापापाद्विमुक्तोऽसौ राजीत्वमवाप च ॥
तेन मार्गशिरे मासि चतुर्द्दश्यां प्रपूजयेत् ।
रत्नत्वमेवमिन्द्रोऽसौ लेभे दुर्गां समर्च्चयन् ॥
ब्रह्मत्वमपि विष्णुत्वं रुद्रत्वञ्च महेश्वरि ! ।
देवत्वं सर्व्वदेवानाममरत्वञ्चिरकालिनाम् ॥
भूतं भव्यं भविष्यं यत् स्थावराणि चराणि च ।
सर्व्वं दुर्गाप्रभावेण स्वस्वभोगमवाप्नुयुः ॥
विना दुर्गां महेशानि ! न किञ्चिदपि वर्त्तते ।
इति ते कथितं देवि ! संक्षेपेण तवाग्रतः ॥
महादुर्गाजगद्धात्रीविद्योत्पत्तिं सुदुर्लभाम् ॥”
इति कात्यायनीतन्त्रे ७८ पटलः ॥
(सरस्वती । यथा, मार्कण्डेये । २३ । ३० ।
“जगद्धात्रीमहं देवीमाविराधयितुः शुभाम् ।
स्तोष्ये प्रणम्य शिरसा ब्रह्मयोनिं सरस्वतीम् ॥”)
जगद्बलः, पुं, ( जगतां बलं यस्मात् ।) वायुः । इति त्रिकाण्डशेषः ॥
जगद्योनिः, पुं, ( जगतां योनिरुत्पत्तिस्थानम् । ) शिवः । इति त्रिकाण्डशेषः ॥ ( यथा, महाभारते । ७ । २०० । १६ ।
“जगद्योनिं जगद्बीजं जयिनं जगतो गतिम् ॥”)
विष्णुः । इति तस्य सहस्रनाम ॥ (यथा, विष्णुपुराणे । १ । १२ । १२ ।
“ते स्तोत्रं जगद्योनिमनादिनिधनं हरिम् ॥”
केचित्तु हरिविशेषणं कल्पयन्ति ॥)
ब्रह्मा । ( यथा, कुमारे । २ । ८ ।
“जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः ॥”)
पृथिव्यां स्त्री । इति शब्दचन्द्रिका ॥
जगद्वहा, स्त्री, ( जगन्ति वहति धारयतीति । वह + अच् । अजादित्वात् टाप् । ) पृथिवी । इति त्रिकाण्डशेषः ॥
जगद्विनाशः, पुं, ( जगतां विनाशो ध्वंसः अखिलकार्य्यनाश इत्यर्थः यस्मिन् । ) युगान्तः । इति हलायुधः ॥ ( प्रलयकाले च अखिलकार्य्यशून्यत्वं यथाह मनुः । १ । ५२—५४ ।
“यदा स्वपिति शान्तात्मा तदा सर्व्वं निमीलति ॥
तस्मिन् स्वपिति तु स्वस्थे कर्म्मात्मानः शरीरिणः ।
स्वकर्म्मभ्यो निवर्त्तन्ते मनश्च ग्लानिमृच्छति ॥
युगपत्तु प्रलीयन्ते यदा तस्मिन् महात्मनि ।
तदायं सर्व्वभूतात्मा सुखं स्वपिति निर्वृतः ॥” )
जगन्नाथः, पुं, (जगतां नाथ ईश्वरः । ) विष्णुः । इति हेमचन्द्रः ॥ (यथा, देवीभागवते ।१।४।३६।
“देवदेव ! जगन्नाथ ! भूतभव्यभवत्प्रभो ! ।
तपश्चरसि कस्मात्त्वं किं ध्यायसि जनार्द्दन ! ॥”)
पुरुषोत्तमक्षेत्रम् । यथा,
मुनय ऊचुः ।
“पुरुषोत्तमाख्यं सुमहत् क्षेत्रं परमपावनम् ।
यत्रास्ते दारवतनुः श्रीशो मानुषलीलया ॥
दर्शनान्मुक्तिदः साक्षात् सर्व्वतीर्थफलप्रदः ।
तन्नो विस्तरतो ब्रूहि तत् क्षेत्रं केन निर्म्मितम् ॥
ज्योतिःप्रकाशो भगवान् साक्षान्नारायणः प्रभुः ।
कथं दारुमयस्तस्मिन्नास्ते परमपूरुषः ॥
जैमिनिरुवाच ।
एतत् क्षेत्रवरस्यास्य वपुर्भूतं महात्मनः ।
स्वयं वपुष्मान् यत्रास्ते स्वनाम्नाख्यापितं हि तत् ॥
यथा चाद्रिश्रितं देवाः सिद्धाः ब्रह्मर्षयस्तथा ।
समर्च्चितुमिच्छायान्ति देवेशं न तथान्यतः ॥
अहो ! तत् परमं क्षेत्रं विस्तृतं दशयोजनैः ।
तीर्थराजस्य सलिलादुत्थितं वालुकाचितम् ॥
नीलाचलेन महता मध्यस्थेन विराजितम् ।
एकं स्वनमिवाध्वाः सुदूरात् परिभावितम् ॥”
ब्रह्माणं प्रति विष्णुवाक्यम् ।
“सागरस्योत्तरे तीरे महानद्यास्तु दक्षिणे ।
स प्रदेशः पृथिव्यां हि सर्व्वतीर्थफलप्रदः ॥
एकाम्रकाननाद्यावद्दक्षिणोदधितीरभूः ।
पदात् पदात् श्रेष्ठतमः क्रमेण परिकीर्त्तितः ॥
सिन्धुतीरे च यो ब्रह्मन् ! राजते नीलपर्व्वतः ।
पृथिव्यां गोपितं स्थानं तव चापि सुदुर्लभम् ॥
सुरासुराणां दुर्ज्ञेयं माययाच्छादितं मम ।
सर्व्वसङ्गपरित्यक्तस्तत्र तिष्ठामि देहभृत् ॥
क्षराक्षरेण नाक्रान्तं क्षेत्रं मे पुरुषोत्तमम् ।
नीलाद्रेरन्तरभुवि कल्पन्यग्रोधमूलतः ॥
वारुण्यां दिशि यत् कुण्डं रौहिणं नाम विश्रुतम् ॥
तत्तीरे निवसन्तो मां पश्यन्ति चर्म्मचक्षुषा ॥
तदम्भसा क्षीणपापा मम सायुज्यमाप्नुयुः ॥
व्रतेषु तीर्थेषु च यज्ञदानयोः
पुण्यं यदुक्तं विमलात्मनां हि ।
अवर्णिवाचाक्षमतो च सर्व्वं
निमेषपातात् लभते चाश्वमेधिकम् ॥
जैमिनिरुवाच ।
उदधावेः समागत्य कुर्व्वन्निन्द्रावलोकनम् ।
नारदोदकसम्पूर्णे तस्मिन् कुण्डे निमज्जितः ॥
विलोक्य माधवं नीलरत्नकान्तिं जगाकिधिम् ।
काकदेहं समुत्सृज्य शुभ्रमार्गं स्तुतः क्षितौ ॥
शङ्खचक्रगदापाणिस्तस्य पार्श्वे व्यवस्थितः ॥”
यमं प्रति लक्ष्मीवाक्यम् ।
“पञ्चक्रोशमिदं क्षेत्रं समुद्रान्तर्व्यवस्थितम् ।
त्रिक्रोशं तीर्थराजस्य तटभूमौ सुनिर्म्मलम् ॥
सुवर्णवालुकाकीर्णं नीलपर्व्वतशोभितम् ।
योऽसौ विश्वेश्वरो देवः साक्षान्नारायणात्मकः ॥
संयम्य विषयग्रामं समुद्रतटमाश्रितः ।
उपासितुं जगन्नाथं चतुःषष्ट्युत्तमः प्रभुः ॥
यमेश्वर इति ख्यातो यमसंयमनाशनः ।
यं दृष्ट्वा पूजयित्वा तु कोटिलिङ्गफलं लभेत् ॥
सीमा प्रतीची क्षेत्रस्य शङ्काकारस्य नर्त्तिनि ।
शङ्खाग्रे नीलकण्ठः स्यादेतत् क्षेत्रं सुदुर्लभम् ॥
परमं पावनं क्षेत्रं नारायणस्य वै ।
शङ्खस्योत्तरभागस्तु समुद्रोदकसंप्लुतः ॥
यत्सन्धकात् समुद्रोऽत्र तीर्थराजसमागतः ।
यत्रायं भगवान्मुक्तिप्रदो हरिपर्य्यगतः ॥
तदिदं मरणात् क्षेत्रं सिन्धुनामाद्रिमुक्तिदम् ।
चिच्छेद ब्रह्मणः पूर्व्वं रुद्रः शीर्षान्तु पञ्चमम् ॥
तच्छिरो दुःखजं यस्मात् ब्रह्माण्डं परिबभ्रमे ।
तत्रागतो यदा ब्रह्मकपालं परिमुक्तवान् ॥
कपालमोचनं तीर्थं द्वितीयावर्त्तसंस्थितम् ।
तस्य दक्षिणपार्श्वे तु मरणं भवमोचनम् ॥
तृतीयावर्त्तसीमायां शक्तिं मे विमलाह्वयाम् ।
जानीहि धर्म्मराज ! त्वं भुक्तिमुक्तिफलप्रदाम् ॥
नाभिदेशे स्थितं क्षेत्रं यथं कुण्डं वटो विभुः ।
कपालमोचनं यावच्छ्रीशम्भो प्रतिष्ठिता ॥
मध्यं शङ्खस्य जानीयात् सुगुप्तं चक्रपाणिना ।
तां दृष्ट्वा प्रथमेदृक्षु भोगान् सोऽश्नाति प्राप्य-
तान् ॥
सिन्धुराजस्य सलिलात् यावन्मूलं वटस्य वै ।
कीटपक्षिमनुष्याणां मरणान्मुक्तिदो मतः ॥
अन्तर्व्वेदी त्रियं पुण्या वाञ्छते त्रिदशैरपि ।
अत्र स्थितान् हि पश्यन्ति सर्व्वे चक्राङ्कधारिणः ॥
कामाख्या क्षेत्रपालश्च विमला चाम्बरा स्थिता ।
साक्षाद्ब्रह्मस्वरूपोऽसौ वृत्तिंशो दक्षिणे विभोः ॥
अन्तर्व्वेद्या रक्षणार्थं शक्तयोऽष्टौ प्रकाशिताः ।
उग्रेण तपसा पूर्व्वमहं सर्व्वेश भाविता ॥
पत्न्यर्थं सा मया दत्ता गौरी तत्त्वाय भाविनी ।
सर्व्वलीन्द्रमेवतिर्थपुरी मे विनिर्म्मिता ॥
तदा दत्ता मया भद्रे ! वचनं मे प्रियं कुरु ।
अन्तर्व्वेदी रक्ष मम परितस्त्वं कल्पितेभिः ॥

साच तिष्ठति मत्प्रीत्या अष्टधा दिक्षु संस्थिता।
मङ्गला वटमूले तु पश्चिमे विमला तथा ।
शङ्खस्य पूर्व्वभागे तु संस्थिता सर्व्वमङ्गला ॥
अर्द्धाशनी तथा लम्बा कुवेरदिशि संस्थिता ।
कालरात्रिर्दक्षिणस्यां पूर्व्वस्याञ्च मरीचिका ॥
कालरात्र्यास्तथा पश्चात् चण्डरूपा व्यवस्थिता।
एतासामष्टधा भेदं दृष्ट्वा यमोऽपि शङ्करः।
आत्मानमष्टधा भित्वा उपास्ते परमेश्वरम् ॥
कपालमोचनं नाम शिवपालं यमेश्वरम् ।
मार्कण्डेयं तथेशानं विल्वेशं नीलकण्ठकम् ॥
वटमूले वटेशञ्च लिङ्गान्यष्टौ समैधितुः ।
यानि दृष्ट्वा तथा स्तुत्वा पूजयित्वा विमुच्यते ॥”
तत्र जगन्नाथस्याविर्भावकारणम् ।

जैमिनिरुवाच ।

“इन्द्रद्युम्नस्य नृपतेः क्षेत्रे श्रीपुरुषोत्तमे ।
जगदीशप्रसादाय पितामहनिदेशतः ॥
एकोनं क्रमशः संख्यामवाप पृथिवीपतिः ॥
सहस्रं हयमेधस्य यथावद्विधिचोदितम् ।
कृत्वा सप्तदिनात् पूर्व्वं या रात्रिरभवद्द्विजाः! ॥
तस्यास्तुरीयप्रहरे ध्यायतो विष्णुमव्ययम् ।
ध्याने तस्मिन् ददर्शासौ महाभाग्यवशान्नृपः ॥
प्रत्यक्षमिव स श्वेतद्वीपं स्फाटिकनिर्म्मितम् ।
तन्मध्ये ददृशे देवं शङ्खचक्रगदाधरम् ॥
नीलजीमूतसङ्काशं वनमालाविभूषितम् ।
दक्षपार्श्वे स्थितं तस्य अनन्तं धरणीधरम् ॥
हलाङ्कुशमुषलाब्जस्फुरद्बाहुचतुष्टयम् ।
दक्षपार्श्वे स्थितां विष्णोर्लक्ष्मीं तां शुभलक्षणाम् ॥
वराभयाब्जहस्तां वै कुङ्कुमाभां सुलोचनाम् ।
ददर्श पद्मासनगां लावण्याम्बुधिपुत्रिकाम् ॥
पितामहञ्च ददृशे पुरतोऽस्य कृताञ्जलिम् ।
वामपार्श्वस्थितं चक्रं सर्व्वज्ञानमयं विभोः ॥
ततः प्रवृत्ते स्नाता नृपतेर्वाजिमेधिके ।
शब्दैः कोलाहलैर्वागभिर्वेदक्रमसमुज्ज्वलैः ॥
दक्षिणे तटभूदेशे विश्वेश्वरसमीपतः ।
नियुक्ताः सेवका राज्ञा ससम्भ्रममुपस्थिताः ॥
न्यवेदयन्तो नृपतिं कृताञ्जलिपुटा द्विजाः ।
देव ! दृष्टो महावृक्षस्तटभूमौ महोदधेः ॥
प्रविष्टाग्रसमुद्राम्भःकल्लोलप्रचलन्मूलकः ।
माञ्जिष्ठवर्णः सर्व्वत्र शङ्खचक्राङ्कितः प्रवन् ॥
न दृष्टपूर्व्वो दृष्टोऽयमसुवत्सूर्य्यनिभांशुना ।
नियुक्तानां वचः श्रुत्वा राजा नारदमब्रवीत् ॥
तत् किं निमित्तं यद्दृष्टं तदर्थं वदन्ति ते ।
नारदः प्रहसन् वाक्यमुवाच नृपसत्तमम् ॥
उपस्थितन्तु ते भाग्यं स्वप्ने यद्दृष्टवान् पुरा ।
श्वेतद्वीपे विश्वमूर्त्तिर्दृष्टो यो विष्णुरव्ययः ॥
तदङ्गस्खलितं लोम तरुत्वमुपपद्यते ।
तद्धाम्न्यवयवः सर्व्वलोकानां नयनातिथिः ॥
भविष्यति महाराज ! सर्व्वकल्मषनाशनः ।
समाप्यावभृथस्नानं तदाम्भे धरितां मतेः ॥
उत्सवं सुमहत् कृत्वा कृतकौतुकमङ्गलम् ।
महावेद्यां स्थापयाथ यद्येषं तद्रूपिणम् ॥
निवार्य्यैकां सदा युक्तौ तौ च नारदभूभुजौ ।
सुसन्नद्धौ ततो यातौ यत्रास्ते भगवान् द्रुमः ॥
पुनः पुनः प्रणामेन हर्षाश्रुनयनो नृपः ।
द्विजैरानाययामास तरुं कल्लोलकीलितम् ॥
सुगन्धालेपनं दिव्यं महावेद्यां विनिन्यतुः ।
वचसा नारदस्यैनं पूजयामास पार्थिवः ॥
पूजावसाने पप्रच्छ नारदं मुनिसत्तमम् ।
कीदृशीं प्रतिमां विष्णोर्घटयिष्यति कः पुनः ॥
विचारयन्तौ तावित्थं यावन्नारदपार्थिवौ ।
अशरीरा ततो वाणी शुश्राव चान्तरीक्षतः ॥
अपौरुषेयो भगवान् सद्विचारपथे स्थितः ।
सुगुप्तायां महावेद्यां स्वयं सोऽवतरिष्यति ॥
प्रच्छाद्यतां दिनान्येव यावत् पञ्चदशानि वै ।
उपस्थितोऽयं यो वृद्धः शस्त्रपाणिस्तु वर्द्धकी ॥
एनमन्तः प्रवेश्यैव द्वारं बध्नन्तु यत्नतः ।
बहिर्वाद्यानि कुर्व्वन्तु यावत् घटना भवेत् ॥
श्रुतस्तद्घटनाशब्दो बाधिर्य्यान्धत्वदायकः ।
नरके वसतिञ्चैव कुर्य्यात् सन्ताननाशनम् ॥
नान्तः प्रवेशनं कुर्य्यान्न पश्येच्च कदाचन ।
नियुक्तान्यः प्रपश्येच्चेन्नाशो राष्ट्रस्य चैव हि ॥
दृष्ट्वापि महाभीतिरन्धता च युगे युगे ।
तच्छ्रुत्वा नारदाद्यास्ते यथोक्तं विष्णुना स्वयम् ॥
चिकीर्षन्ति तथा कर्त्तुं तत्रायातस्तु वर्द्धकी ।
प्रोवाच नृपतिं सोऽथ स्वप्ने दृष्टास्तु यास्त्वया ॥
ता एवाहं घटिष्यामि दारव्या दिव्यरूपिणा ।
इत्युक्तान्तर्दधे वेद्यां वृद्धवर्द्धकिरूपधृक् ॥
वचनार्थं मनुष्याणां साक्षान्नारायणो विभुः ।
ततः स पृथिवीपालस्तथा कृत्वान्तरीक्षगा ॥
यदुवाच गिरां देवी तत्तत् परिचचार च ।
निर्व्वाह स्वयं देवः क्रमात् पञ्चदशे दिने ॥
चतुर्म्मूर्त्तिः स भगवान् यथा पूर्व्वं मयोदितः ।
दिव्यसिंहासनगतो बलभद्रसुदर्शनैः ॥
शङ्खचक्रगदापद्मलसद्बाहुर्जनार्द्दनः ।
हलं मुषलचक्राब्जं धारयन् पन्नगाकृतिः ॥
फणीन्द्रफणासप्तमुकुटोज्ज्वलकुण्डलः ।
सुभद्रा चारुवदना वराब्जाभयधारिणी ॥
लक्ष्मीः प्रादुर्भवेयं सर्व्वचैतन्यरूपिणी ।
सुदर्शनन्तु यच्चक्रं सदा विष्णोः करे स्थितम् ॥
शाखाग्रस्तम्भमध्यस्थं तद्रूपन्तु तुरीयकम् ॥ * ॥
निर्वृत्ते भगवद्रूपे चतुर्द्धा दिव्यरूपिणी ॥
लोकानामुपकाराय पुनराहान्तरीक्षगा ।
पटैराच्छाद्य सुदृढं नृपते ! प्रतिमास्त्विमाः ॥
स्वं स्वं वर्णं प्रापयन्तु वर्णकैश्चित्रकर्म्मणा ।
अन्तर्हितस्वरूपेण दृष्टाः पापाय चेतवः ॥
गोपनीयाः प्रयत्नेन षड्भिर्यावत्सवत्सरैः ।
शिल्पिभिः कर्म्मकुशलैर्द्रुमाच्छादयायतः ॥
वर्षे वर्षे च संस्कार्य्या पूर्व्वसंस्कारमोचनात् ।
स्नाते वल्कललेपन्तु न तु दिव्यचिरन्तनः ॥
प्रमादाद्यदि तं लेपमपनीयेत कश्चन ।
दुर्भिक्षं मरकं राष्ट्रे सन्ततिश्चास्य क्षीयते ॥
नैश्चित्यश्चाक्ष्या राजन् ! कदाचिदपवारकाः ।
मनुष्यैश्च च राजेन्द्र ! दृष्टाः क्षुभ्यन्ति चेतनाः ॥
तस्मात् सुचिन्ता महता वस्त्रैः परिवेष्टिताः ।
नीलाद्रौ कल्पवृक्षस्य वायव्यां ग्रहस्थलतः ॥
प्रदेशे सुमहत्स्थाने प्रासादं सुदृढायतम् ।
उत्तरे नरसिंहस्य सहस्रकरमुच्छ्रितम् ॥
कारयित्वा प्रतिष्ठाप्य तन्मेनं विनिवेश्य च ।
पुरा स्थितः पर्व्वतेऽस्मिन् योऽर्च्चयति माधवम् ॥
नाम्ना विश्वावसुर्नाम शवरो वैष्णवोत्तमः ।
तस्य सन्ततिरेवास्य लेपनस्नानकर्म्मणि ॥
नियुज्यतां महाराज ! भविष्यत्सूत्सवेषु च ।
ततः स नृपतिः श्रीमान् शिल्पशास्त्रविशारदान् ॥
सत्कारैर्दानमानैश्च योजयामास सादरम् ।
दिने दिने सुघटितः प्रासादो ववृधे द्विजाः ॥
परितः पूर्य्यमाणस्तु शुक्लपक्षे यथा शशी ॥

नारद उवाच ।

प्रवर्षं वसु राजेन्द्र ! स्थित्वा चास्मिन् चिरं भुवि ।
आराधय जगन्नाथमुपचारैर्महोत्सवैः ।
पितामहं प्रद्रक्षामो ब्रह्मा चेदन्तिकं विभोः ॥
उपदेक्ष्यति सोऽप्यस्य यात्राख्यास्या महोत्सवाः ।
उभौ तौ दिव्ययानेन जग्मतुर्मुनिभूभुजौ ॥
प्रदक्षिणीकृत्य हरिं व्योममण्डलमध्यगम् ।
दृष्ट्वा पितामहं दूरात् स्रष्टारं जगतां नृपः ॥
अमन्यत द्विजश्रेष्ठाः साक्षाद्धाममयं हरिम् ।
शनैः शनैर्ययौ भूपः प्रणनाम कृताञ्जलिः ॥
स्तुवन् प्रणिपतन् भूमौ साश्रुसञ्जलितं ब्रुवन् ।
आगमन्नपि हि तत् कार्य्यं मार्गयन्नृपसत्तमम् ॥
उवाच परमप्रीत इन्द्रद्युम्नं पितामहः ।
किमर्थमागतोऽस्यत्र तद् ब्रूहि हृदयस्थितम् ॥

इन्द्रद्युम्न उवाच ।

आविर्बभूव भगवान् भूतभव्यभवत्प्रभुः ।
गत्वा देवं जगन्नाथं स्थापयिष्यसि च प्रभो ! ॥

ब्रह्मोवाच ।

त्वमग्रतोऽवरां गत्वा यावत् सम्भारन्त्विमत् ।
करिष्यसि महाभाग ! तावदेव व्रजाम्यहम् ॥
इन्द्रद्युम्नोऽपि हृष्टात्मा दृष्ट्वा ब्राह्मीं श्रियं द्विजाः ।
आजगाम भुवं विप्रा विधिना चानुमोदितः ॥
आगत्य च जगन्नाथं चिरादुत्कण्ठमानसः ।
दृष्टवत् प्रणनामासौ घनरोमाञ्चकञ्चुकः ॥
ततः क्रमात् समदृशे विमानाग्रं प्रजापतेः ।
स्वर्णांशुभूतैः स्वन्दनमार्गं समन्ततः ॥
प्रणिपत्य जगन्नाथं त्रिः परीत्य पितामहः ।
आनन्दाश्रुससम्भ्रमः सरोमाञ्चवपुः स्वयम् ॥
समुत्तस्थौ ततो ब्रह्मा कृतस्वस्त्ययनः स्वयम् ।
ऋषिभिर्नारदाद्यैश्च विप्रद्विजाग्रैस्तथा ॥
प्रासादद्वारि रचिते रत्नस्तम्भेऽथ मण्डपे ।
वासयित्वाभिषेकाय सम्भृतादर्शमङ्गले ॥
सुवासितैः रत्नकुम्भैस्तीर्थवार्य्युपसंभृतैः ।
युक्ताभ्यां श्रीपुरुषयोरभिषेकं पितामहः ॥
चकार भगवान् लोकसंग्रहार्थं दिवौकसाः ! ।
ततोऽभ्यर्च्य कुलान् देवान् गन्धमाल्योपशोभितान् ॥
नीराजयित्वा विधिवत् स स्वयं लोकभावनः ।
रत्नसिंहासने रम्ये स्थापयामास मन्त्रतः ॥
स्थापयित्वा जगन्नाथं स्तुत्वा तस्य पुरस्सरम् ।

मादृशोऽपि च। जगन्नाथोऽयमस्मिमावस्थायां कुष्ठ-प्रपौत्रादिसुखमवलोक्य अतिदुर्लभमेतादृशं संसारसुखमनुभूय शकनरपतेः १७२६ वत्सरे (१२१४बङ्गाब्दे) आश्विनशुक्लपञ्चम्यां तृतीयायां गङ्गातीरे प्राणान् तत्याज। स्वतः प्राणान्त-पर्य्यन्तमेवाखिलेन्द्रियशक्तिः न जाता। गङ्गा-तीरं गतेन शुक्लकुलात्मजा मृत्युप्राक्काले कृतः श्लोको यथा,—

"केचिद्वदन्ति ब्रह्म निराकारं नराकारञ्च केचन।
वयन्तु दीर्घयोगेन नीराकारमुपास्महे॥" इति॥)

जगद्गुः, पुं, (जगता विश्वस्थजीवजातेन नम्यते इति। जगत्+नम्+बाहुलकात् डुः। यद्वा, गु+क्विप् दृशौ। गु शब्दं स्तुतिरित्यर्थः जगति विश्वसंसारे गुः स्तुतिर्यस्य। सर्व्वजीवस्तुतत्वा-देवास्य तथात्वम्।) अग्निः। जगनुः। इति विश्वः शब्दरत्नावली च॥ जगद्गुरपि पाठः॥

जगरः, पुं, (जागर्त्ति संग्रामेऽनेनेति। जागृ+अप्। पृषोदरादित्वात् साधुः।) कवचः। इति हेमचन्द्रः। ३। ४३०॥

जगलः, पुं, (पुनःपुनरतिशयेन वा गलतीति। गल स्रवणे+यङ्लुगन्तात् अच्। संज्ञापूर्व्वक-त्वात् "दीर्घोऽकितः।" ७।४।८३। इति न दीर्घः। यद्वा, जन्+डः। जः जातः सन् गलति निर्गच्छ-तीति। गल+अच्।) सुराकल्कम्। मेदा इति भाषा॥ तत्पर्य्यायः। मेदकः २। इत्य-मरः। २।१०।४२॥ (यथा, शार्ङ्गधरे मध्य-खण्डे दशमेऽध्याये।

"तदधो जगलो ज्ञेयो मेदको जगलाद्धनः॥")
मदनवृक्षः। पिष्टमद्यम्। (तद्गुणा यथा,—

"शूलप्रवाहिकाटोपकफवातार्शसां हितः।
जगलो ग्राहिरूक्षोष्णः शोफघ्नो भक्तपाचनः॥"
इति चरके सूत्रस्थाने सप्तविंशेऽध्याये॥

"ग्राहुष्णो जगलः पक्ता रूक्षस्तृट्कफशोफकृत्।
शूलः प्रवाहिकाटोपदुर्नामानिलशोफकृत्॥"
इति सुश्रुते सूत्रस्थाने ४५ अध्याये॥)

धूर्त्ते, त्रि। इति मेदिनी। ले, ६१॥ कवचः। डलयोरैक्यात्॥ गोमये, क्ली। इति रत्नमाला॥ (यथा, वैद्यकरत्नमालायाम्।

"गोमयं जगलं गोविट् गोहन्नं तच्च गोमलम्॥")

जग्धं, त्रि, (अद्यते स्म इति। अद् भक्षणे+क्तः। "अदो जग्धिर्ल्यप्ति किति।" २।४।३६। इति जग्धादेशः। इकार उच्चारणार्थः।) भुक्तम्। इत्यमरः। ३।२।१११॥

("जिघ्रं वनं कुटजमश्मभवञ्च जग्धम्॥"
इति वैद्यकचक्रपाणिसंग्रहेऽतीसाराधिकारे॥)

जग्धिः, स्त्री, (अद् भक्षणे+क्तिन्। "अदो जग्धि-र्ल्यप्ति किति।" २।४।३६। इति जग्धा-देशः।) सहभोजनम्। इत्यमरः। २।९।५५॥ भक्षणम्। इति हेमचन्द्रः॥ (यथा, मनौ। ३।११५।

"अदत्वा तु य एतेभ्यः पूर्व्वं भुङ्क्तेऽविचक्षणः।
स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः॥")

जग्मिः, पुं, (गच्छति सततो यातीति। गम+"आदृगमहनजनः किकिनौ लिट् च।" ३।२।१७१। इत्यस्य "भाषायां धाञ्कृसृगमिजनि-नमिभ्यः।" इति वार्त्तिकोक्त्या किप्रत्ययः।) वायुः। इति केचित्॥

जघनं, क्ली, (हन्यते इति। हन्+"हन्तेः शरीरा-वयवे द्वे च।" उणां। ५।३२। इति अच् द्वित्वञ्च। "अभ्यासाच्च।" ७।३।५५। इति कुत्वम्।) स्त्रीकट्याः पुरोभागः। (यथा, माघे। ५।२९।

"नाभिह्रदैः परिगृहीतरयाणि यत्र
स्त्रीणां बृहज्जघनसेतुनिवारितानि॥")

कटिः। इति मेदिनी। ने, ६७॥ (यथा, देवी-भागवते। १।९।८१।

"भगवान् विपुलं चक्रे जघनं विस्मितौ तदा।
शीर्षे सन्दधतौ तत्र जघने परमाद्भुते॥")

जघनकूपकौ, पुं, (जघनकूपे इव कायतः इति। कै+कः।) कुकुन्दरौ। इति हलायुधः॥ द्विवचनान्तोऽयं शब्दः॥

जघनेफला, स्त्री, (जघने इव मध्यभागे फलमस्याः।) काकोडुम्बरिका। इत्यमरः। २।४।६१॥

जघन्यः, त्रि, (कुटिलं हन्यते निन्द्यते इति। हन+यङन्तात् अघ्न्यो यत्। अनित्यमागमशासन-मिति नुगतोऽनुनासिकान्तस्येति न नुक्। यद्वा, जघनमिव। "शाखादिभ्यो यत्।" ५।३।१०३। इति यत्।) चरमः। (यथा, वैद्यकचक्र-पाणिसंग्रहे क्षेत्राधिकारे।

"उत्तमस्य पलं मात्रा त्रिभिरक्षैश्च मध्यमे।
जघन्यस्य पलार्द्धेन स्नेहक्वाथौषधेषु च॥")

गर्हितः। (यथा, महाभारते। २।३५।१३।

"तत्र द्यूतमभवन्नो जघन्यं
तस्मिन् जिताः प्रव्रजिताश्च सर्व्वे॥"॥

जघने कटिदेशे भवम्। दिगादित्वात् यत्।) मेहने, क्ली। इति मेदिनी। ये, ८३॥ पुं, शूद्रः। इति शब्दरत्नावली॥ (हीनजातिमात्रम्। यथा, मनौ। ८।३६६।

"उत्तमां सेवमानस्तु जघन्यो वधमर्हति॥"
"हीनजातिरत्तमजातीयां कन्यामिच्छन्ती-मनिच्छन्तीं वा गच्छन् जात्यपेक्षयाऽङ्गच्छेदन-मारणात्मकं वधमर्हति॥" इति तट्टीकायां कुल्लूकभट्टः॥॥ पृष्ठभागः। यथा, रामा-यणे। २।१०४।२९।

"ततो जघन्यं सहितैः स्वमन्त्रिभिः
पुरप्रधानैश्च तथैव सैनिकैः।
जनेन धर्म्मप्रवणेन धर्म्मवा-
नुपोपविष्टो भरतस्तदाग्रजम्॥"
"जघन्यं जघनभागं पृष्ठभागमाश्रितः सन्।"
इति तट्टीकायां रामानुजः॥॥ राजाङ्गचर-विशेषः। यथा, बृहत्संहितायाम्। ६९।३१, ३२—३४।

"पञ्चापरे वामनको जघन्यः
कुब्जोऽपरो मण्डलकोऽथ सामी।
पूर्व्वोक्तभूपानुचरा भवन्ति
सङ्कीर्णसंज्ञाः शृणु लक्षणैषाम्॥"
"माजवसेवी तु जघन्यनामा
खण्डेन्दुतुल्यश्रवणः सुसन्धिः।
शुक्रेण सारः पिशुनः कविश्च
रूक्षच्छविः स्थूलकराङ्गुलीकः॥
क्रूरो धनी स्थूलमतिः प्रतीत-
ताम्रच्छविः स्यात् परिहासशीलः।
उरोऽङ्घ्रिहस्तैर्बलवान् शिवस्य
पच्चार्धभाग्भवेज्जघन्यनामा॥")

जघन्यजः, पुं स्त्री, (जघन्ये चरमे जायते इति। जन्+"सप्तम्यां जनेर्डः।" ३।२।९७। इति डः।) शूद्रः। कनिष्ठे, त्रि॥ इति मेदिनी॥ जे, ३२॥ (यथा, महाभारते। १।६५।१६।

"एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते।
जघन्यजस्तु सर्व्वेषामादित्यानां गुणाधिकः॥")

जघ्निः, पुं, (हन्यते इति। हन+"आदृगम-हनेति।" ३।२।१७१। इति किन् द्वित्वञ्च।) हननयोग्यास्त्रम्। इति संक्षिप्तसारः॥ (यथा, ऋग्वेदे। ९।६१।२०।

"जघ्निर्वृत्रममित्रियं सस्निर्वाजं दिवे दिवे॥")

जघ्नुः, त्रि, (हन्तीति। हन वधे+"कुर्भ्रश्च।" उणां।१।२३। चकारात् हन्तेरपि कुर्द्वित्वञ्च।) हन्ता। हननकर्त्ता। इत्युणादिकोषः॥

जङ्गमः, त्रि, (पुनः पुनर्गच्छतीति। गम्+यङ्+अच्।) अस्थावरः। गतिशक्तिविशिष्टः। तत्-पर्य्यायः। चरिष्णुः २ चरः ३ जगत् ४ इङ्गः ५ चराचरः ६। इत्यमरः। ३।१।७४॥ (यथा, रघौ। २।४४।

"मान्यः स मे स्थावरजङ्गमानां
सर्गस्थितिप्रत्यवहारहेतुः॥"
"ओषधयस्तावदुद्भिदः स्थावरा जङ्गमाश्च।"
"जङ्गमास्त्वपि चतुर्व्विधा जरायुजाण्डजस्वेद-जोद्भिज्जाः। तत्र पशु-मनुष्य-व्यालादयो जरा-युजाः। खग-सर्प-सरीसृप-प्रभृतयोऽण्डजाः। कृमिकीटपिपीलिकाप्रभृतयः स्वेदजाः। इन्द्र-गोपमण्डूकप्रभृतय उद्भिज्जाः॥" इति सुश्रुते सूत्रस्थाने प्रथमेऽध्याये॥)

जङ्गमकुटी, स्त्री, (जङ्गमा गतिशक्तिविशिष्टा कुटी गृहमिव।) छत्रम्। इति त्रिकाण्डशेषः॥

जङ्गलं, त्रि, (पुनः पुनरतिशयेन वा गलतीति। गल+यङ्+अच्। पृषोदरादित्वात् साधुः।) निर्जलदेशः। इति शब्दरत्नावली॥ निर्जन-स्थानम्। पिशिते, क्ली। इति मेदिनी। ले, ६३॥

जङ्गालः, पुं, (जङ्गं कुटिलगतिं अलति प्राप्नो-तीति। अल+"कर्म्मण्यण्।" ३।२।१ इत्यण्।) सेतुविशेषः। जाङ्गाल इति भाषा॥ तत्-पर्य्यायः। आलिः २ सङ्क्रमः ३ सेतुः ४ संवरः ५। इति जटाधरः॥

जङ्गुलं, क्ली, विषम्। इति त्रिकाण्डशेषः॥

जङ्घा, स्त्री, (जङ्घन्यते कुटिलं गच्छतीति। हन वधे गतौ च यङ्लुगन्तात्+"अच्योऽपीति।"

रोहिणीतारकायुक्ता रजनी घनघोरिता ।
धूमयोनौ तडिद्युक्ते वारि वर्षति सर्व्वदा ॥
तस्यां जातो जगन्नाथः कंसारिर्व्वसुदेवजः ।
वैराटे नन्दपत्नी च यशोदाजीजनत् सुताम् ॥
पुत्त्रं पद्मकरं पद्मनाभं पद्मदलेक्षणम् ।
दृष्ट्वा चतुर्भुजं शार्ङ्गं शङ्खचक्रगदाधरम् ॥
तदा क्रन्दितुमारेभे दृष्ट्वा चानकदुन्दुभिः ।
तथैव चाश्रुपूर्णैव देवकी मातृगोचरा ॥
पुत्त्रं दत्त्वा यशोदायै कन्यां तस्याः समानय ।
कंसासुरभयात्त्वं हि उवाच देवकी तदा ॥
वैराटं गच्छ विप्रेन्द्र ! सुतं प्रस्थापितुं प्रभो ! ।
पुत्त्रं दत्त्वा यशोदायै सुतां तस्याः समानय ॥
तां दृष्ट्वा कंसराजोऽपि समायां न हनिष्यति ।
तस्या वचः समाकर्ण्य वसुदेवोऽतिदुःखितः ॥
अङ्के कुमारमादाय वैराटाभिमुखं ययौ ।
यमुना जलसंपूर्णा तत्पथे मध्यवर्त्तिनी ॥
अतिस्रोता महावीर्य्या सतीव्रोर्म्मिभयाकुला ।
तां दृष्ट्वा तत्तटे स्थित्वा यमुनामवलोकयन् ॥
वसुदेवोऽतिदुःखार्त्तो विलोलचेतसोऽभवत् ।
किं करोमि क्व गच्छामि विधिनाद्यापि वञ्चितः ॥
कथमद्य गमिष्यामि वैराटे नन्दमन्दिरम् ।
हरिणा तत्र सानन्दं मायया वञ्चितः पिता ॥
क्षणमात्रं तटे स्थित्वा यमुनामप्यलोकयत् ।
तेन दृष्टा पुनः सापि क्षीणा जानुवहाभवत् ॥
ततः सोऽपि पुरो दृष्ट्वा धावन्तं खलु जम्बुकम् ।
क्रोडे कृत्वा सुतं स्वैरं गन्तुं पारं प्रचक्रमे ॥
तं दृष्ट्वा हृष्टचित्तन्तु भगवान् यमुनाजले ।
मायां कृत्वा जगन्नाथो ह्यङ्कात् स पतितः पितुः ॥
तं सुतं पतितं दृष्ट्वा सूर्य्यजाजीवने द्विजः ।
तदा क्रन्दितुमारेभे भाले घात्वा करं दृढम् ॥
विधिना वैरिणा ह्यत्र दुःखितोऽहं प्रवञ्चितः ।
त्राहि मां जगतां नाथ ! पुत्त्रं देहि सुरोत्तम ! ॥
जनकं क्रन्दितं दृष्ट्वा कंसारिः कृपया विभुः ।
जलक्रीडां समाचर्य्य पितुरङ्केऽवसत् पुनः ॥
यथा तेन द्विजश्रेष्ठो गतवान्नन्दमन्दिरम् ।
सुतं दत्त्वा यशोदायै सुतां तस्याः समानयत् ॥
सुतामङ्के तथा सोऽपि गृहीत्वानकदुन्दुभिः ।
निजागारं पुनः प्राप्य प्रददौ तादृशीं सुताम् ॥
प्रतिगृह्य पदे लोहमासीत् पूर्व्ववदाहतः ।
देवकी च प्रसूतेति वार्त्ता प्राप्ता सुरारिणा ॥
आनेतुं प्रहितो दूतः सुतं दुहितरञ्च वा ।
आगत्य कंसदूतोऽसौ सुतां नेतुं प्रचक्रमे ॥
बलादङ्कात् समाकृष्य देवकीवसुदेवयोः ।
कंसदूतो गृहीत्वा तां कंसायादर्शयत् पुनः ॥
दृष्ट्वा तां कंसराजोऽपि सभयोऽभूद्दुरासदः ।
शुद्धकाञ्चनवर्णाभां पूर्णेन्दुसदृशाननाम् ॥
दृष्ट्वा कंसो विहसन्तीं विद्युत्स्फुरितलोचनाम् ।
आदिदेशासुरश्रेष्ठो वध नीत्वा शिलोपरि ॥
आज्ञां लब्ध्वासुरास्ते तु निष्पेष्टुं तां प्रवर्त्तिताः ।
विहायरूपधरा गौरी जगाम शङ्करान्तिकम् ॥
अन्तरीक्षे चाग्रं स्थित्वा कंसं प्रोवाच शाङ्करी ।
त्वां हन्तुं गोकुले जातः पूर्व्वशत्रुर्न संशयः ॥
तथातिष्ठज्जगन्नाथः कंसारिः सुरक्षकृत् ।
क्रीडित्वा बालभावेन कंसध्वंसे मनो दधौ ॥
प्राप्तिमार्गेण तं कंसं जघान जगदीश्वरः ।
एतत्ते कथितं राजन् ! कृष्णजन्माष्टमीव्रतम् ॥
य इदं कुरुते राजन् ! या च नारी हरेर्व्रतम् ।
प्राप्नोत्यैश्वर्य्यमतुलमिह लोके यथेप्सितम् ॥
अन्तकाले हरेः स्थानं दुर्लभञ्च गमिष्यति ।
एकेनैवोपवासेन कृतेन कुरुनन्दन ! ॥
सप्तजन्मकृतात् पापान्मुच्यते नात्र संशयः ।
वत्सरद्वादशे चैव यत् पुण्यं समुपार्ज्जितम् ॥
विफलं तद्भवेत् सर्व्वं पुरा व्यासेन भाषितम् ।
न स्वर्ग्यं सुखं तेषां नराणां न च योषिताम् ॥
जयन्ती न कृता यैस्तु जागरादिसमन्विता ।
ज्ञानचेते तु विज्ञेया जयन्तीविमुखा नराः ॥
योषितश्च न सन्देहः सत्योक्तं तव सुव्रते ! ॥"

इति भविष्यपुराणे वशिष्ठदिलीपसंवादे श्रीकृष्णजन्माष्टमीव्रतकथा समाप्ता ॥

जन्मी [ न् ] पुं, ( जन्म अस्यास्तीति । जन्मन् + "व्रीह्यादिभ्यश्च ।" ५ । २ । ११६ । इति इनिः । ) प्राणी । इत्यमरः । १ । ४ । ३० ॥ ( यथा, भारविः । ११ । ३० ।
" जन्मिनोऽस्य स्थितिं विद्वान् लक्ष्मीमिव चलाचलाम् ।
भवान्मास्म वधीत् न्याय्यं न्यायाधारा हि साधवः ॥" )

जन्मेजयः, पुं, ( जनान् प्रमून् एजयति कम्पयतीति । एज + णिच् + "एजेः खश् ।" ३ । २ । २८ । इति खश् ततो मुमागमात् जनमेजय इति सिद्धे पृषोदरादित्वादलोपे साधुः । ) जनमेजयराजः । इति श्रीभागवतम् ॥ ( एतन्निरुक्तिर्यथा देवीभागवतस्य । २ । ११ । ४६ श्लोकटीकायाम् ।
"जन्मनैवातिमुहूर्त्तेन प्रजनेजितवान् यतः ।
एजृङ् कम्पने धातोर्हि जन्मेजय इति स्मृतः ॥")

जन्यं, क्ली, ( जन्यते इति । जनि + "तकिशसिचतियतिजनिभ्यो यद्वाच्यः ।" इति वार्त्तिकोक्त्या यत् । ) हट्टः । परीवादः । संग्रामः । इति मेदिनी । ये, २५ ॥ ( यथा, रघौ । ४ । ७७ ।
"तत्र जन्यं रघोर्घोरं पार्व्वतीयैर्गणैरभूत् ॥")

जन्यः, पुं, ( जायते जनयति वा । जन + "भव्यगेयेति ।" ३ । ४ । ६८ । इति कर्त्तरि यत् । ) जनकः । इति मेदिनी । ये, २६ ॥ ( महादेवः । यथा, महाभारते । १३ । १७ । ५६ ।
"उग्रतेजा महातेजा जन्यो विजयकालवित् ॥"
देहः । यथा, भागवते । १ । ८ । ३१ ।
"निवृत्तसर्व्वेन्द्रियवृत्तिविभ्रम-
स्तुष्टाव जन्यं विसृजन् जनार्द्दनम् ॥"
जनस्य जल्पः । जन + "मतजनहलादिति ।" ४ । ४ । ९७ । इति यत् । जनजल्पः । इति सिद्धान्तकौमुदी ॥ )

जन्यः, त्रि, ( जन्यते इति । जन् + णिच् + कर्म्मणि यत् । ) उत्पाद्यः । यथा,—
"जनकस्य स्वभावो हि जन्ये तिष्ठति निश्चितम् ।
यथा श्रीकृष्णपादाब्जं कालीयमूर्द्धमस्तके ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥
("जन्यानां जनकः कालो जगतामाश्रयो मतः ॥"
इति च भाषापरिच्छेदे ४५ ॥ )
जनयिता । (जनीं वधूं वहति प्रापयति वा । संज्ञायामिति साधुः ।) नवोढाज्ञातिः । नवोढाभृत्यः । वरस्य स्निग्धः । स तु जामातृवयस्यः । इति मेदिनी । ये, २६ ॥ (जनाय हितः । यत् ।) जनहितः । इति व्याकरणम् ॥

जन्या, स्त्री, (जायतेऽस्याम् । जन् + यगत् यत् वा । मातृतुल्यत्वादेवास्यास्तथात्वम् ।) मातृवयस्या । इति मेदिनी । ये, २६ ॥ (यथा, रघौ । ६ । ३० ।
"अथाङ्गराजादवतार्य्य चक्षु-
र्याहीति जन्यामवदत् कुमारी ॥")
प्रीतिः । इति हेमचन्द्रः ॥

जन्युः, पुं, ( जायते इति । जन + "यजिमनिशुन्धिदसिजनिभ्यो युच् ।" उणां ३ । २० । इति युच् ।) प्राणी । अग्निः । धाता । इति मेदिनी । ये, २६ ॥ (उत्पत्तिः । जन्म । यथा, हरिवंशे । १२३ । ४९ ।
"अम्बताया द्वितीयोऽयं जन्युर्हि मम सर्व्वथा ॥")

जप, मृदुच्चारे वाचि । इति कविकल्पद्रुमः ॥ ( भ्वा-परं-सकं-सेट् । ) जिह्वौष्ठादिव्यापाररहितं शब्दार्थयोश्चिन्तनं मृदुच्चारः । जपति मन्त्रं साधकः । इति दुर्गादासः ॥

जपः, पुं, ( जप्यते इति । जप + "व्यधजपोरनुपसर्गे ।" ३ । ३ । ६१ । इति भावे अप् । ) विधानेन मन्त्रोच्चारणम् । तद्विधिर्यथा,—
"नोच्चैर्ज्जपञ्च संकुर्य्यात् रहः कुर्य्यादसन्निधः ।
समाहितमनास्तूष्णीं मनसा वापि चिन्तयेत् ॥
विधियज्ञात् जपयज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥
विना दर्भैस्तु यत् स्नानं यच्च दानं विनोदकम् ।
असंख्येयन्तु यज्जप्तं सर्व्वं तदफलं स्मृतम् ॥
मुक्ताफलैर्विद्रुमैर्वा रुद्राक्षैः स्फाटिकेन वा ।
गणना सर्व्वथा कार्य्या सम्यगङ्गुलिपर्व्वभिः ॥
हिरण्यरत्नमणिभिर्जप्यं शतगुणं भवेत् ।
सहस्रगुणमिन्द्राक्षैः पद्माक्षैरयुतं भवेत् ॥
नियुतं वापि रुद्राक्षैर्भद्राक्षैस्तु न संशयः ।
पुत्त्रजीवकजप्यस्य परिसंख्या न विद्यते ॥
दशभिर्जन्मजनितं शतेन च पुरा कृतम् ।
त्रियुगं तु सहस्रेण गायत्र्या हन्ति दुष्कृतम् ॥
दर्भहस्तस्तथासीनो दर्भपूतकपाणिना ।
प्राङ्मुखो वर्त्तयेत् मालां सहस्रं शतमेव वा ॥"
इत्यादि वह्निपुराणे नित्याह्निकस्नानविधिनामाध्यायः ॥ तत्रानुष्ठानं यथा,—
"मनः संहृत्य विषयान्मन्त्रार्थगतमानसः ।
न द्रुतं न विलम्बञ्च जपेन्मौक्तिकपङ्क्तिवत् ॥
जपः स्यादक्षरावृत्तिर्मानसोपांशुवाचिकैः ।
धिया यदक्षरश्रेणीं वर्णस्वरपदात्मिकाम् ॥
उच्चरेदर्थमुद्दिश्य मानसः स जपः स्मृतः ।
जिह्वौष्ठौ चालयेत् किञ्चिद्देवतागतमानसः ॥

किञ्चिच्छ्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः ।
मन्त्रमुच्चारयेद्वाचा वाचिकः स जपः स्मृतः ॥
उच्चैर्जपाद्विशिष्टः स्यादुपांशुर्दशभिर्गुणैः ।
जिह्वाजपः शतगुणः साहस्रो मानसः स्मृतः ।
जिह्वाजपः स विज्ञेयः केवलं जिह्वया बुधैः ॥"
तत्र वर्ज्यं यथा,—
"विण्मूत्रोत्सर्गशङ्कादियुक्तः कर्म्म करोति च ।
जपार्च्चनादिकं सर्व्वमपवित्रं भवेत् प्रिये ! ॥
मलिनाम्बरकेशादिमुखदौर्गन्ध्यसंयुतः ।
यो जपेत्तं दहत्याशु देवता गुप्तिसंस्थिता ॥
आलस्यं जृम्भणं निद्रां क्षुतं निष्ठीवनं भयम् ।
नीचाङ्गस्पर्शनं कोपं जपकाले विवर्ज्जयेत् ॥"
अथ करमालाजपनियमो यथा,—
"तर्ज्जनी मध्यमानामा कनिष्ठा चेति ताः क्रमात् ।
तिस्रोऽङ्गुल्यस्त्रिपर्व्वाणो मध्यमा चैकपर्व्विका ॥
पर्व्वद्वयं मध्यमाया मेरुत्वेनोपकल्पयेत् ।
अनामामध्यमारभ्य कनिष्ठादित एव च ॥
तर्ज्जनीमूलपर्य्यन्तं दशपर्व्वसु संजपेत् ।
अनामामूलमारभ्य कनिष्ठादित एव च ।
तर्ज्जनीमध्यपर्य्यन्तमष्टपर्व्वसु संजपेत् ॥"
एतद्वचनन्तु अष्टोत्तरशतादिविषयम् ।
शक्तिविषये पुनः ।
"अनामिकात्रयं पर्व्व कनिष्ठादित्रिपर्व्विका ।
मध्यमायाश्च त्रितयं तर्ज्जनीमूलपर्व्वणि ॥
तर्ज्जन्यग्रे तथा मध्ये यो जपेत् स तु पापकृत् ।
अनामामूलमारभ्य प्रादक्षिण्यक्रमेण च ॥
मध्यादिमूलपर्य्यन्तमष्टपर्व्वसु संजपेत् ॥"
श्रीविद्याविषये पुनः ।
"अनामामध्यमायाश्च मूलाग्रञ्च द्वयं द्वयम् ।
कनिष्ठायाश्च तर्ज्जन्यास्त्रयं पर्व्व सुरेश्वरि ! ॥
अनामामध्यमायाश्च मेरुः स्यात् त्रितयं शुभम् ।
प्रदक्षिणक्रमाद्देवि ! जपेत्त्रिपुरसुन्दरीम् ॥
कनिष्ठामूलमारभ्य प्रादक्षिण्यक्रमेण च ।
तर्ज्जनीमूलपर्य्यन्तमष्टपर्व्वसु संजपेत् ॥"
इदमपि अष्टोत्तरशतादिविषयम् ॥ * ॥
"अङ्गुलीर्न वियुञ्जीत किञ्चिदाकुञ्चिते तले ।
अङ्गुलीनां वियोगाच्च छिद्रे च स्रवते जपः ॥
अङ्गुल्यग्रे च यज्जप्तं यज्जप्तं मेरुलङ्घने ।
पर्व्वसन्धिषु यज्जप्तं तत् सर्व्वं निष्फलं भवेत् ॥
गणनाविधिमुल्लङ्घ्य यो जपेत्तज्जपं यतः ।
गृह्णन्ति राक्षसास्तेन गणयेत् सर्व्वथा बुधः ॥
हृदये हस्तमारोप्य तिर्य्यक् कृत्वा कराङ्गुलीः ।
आच्छाद्य वाससा हस्तौ दक्षिणेन सदा जपेत् ॥"
जपसंख्यायां निषिद्धद्रव्यं यथा,—
"नाक्षतैर्हस्तपर्व्वैर्वा न धान्यैर्न च पुष्पकैः ।
न चन्दनैर्मृत्तिकया जपसंख्याञ्च कारयेत् ॥"* ॥
तत्र विहितद्रव्यं यथा,—
"लाक्षाकुशीदसिन्दूरं गोमयञ्च करीषकम् ।
एभिर्निर्म्माय वटिकां जपसंख्यान्तु कारयेत् ॥"
अथ वर्णमालाजपनियमो यथा,—
"सबिन्दुं वर्णमुच्चार्य्य पश्चान्मन्त्रं जपेद्बुधः ।
अकारादिक्षकारान्तं बिन्दुयुक्तं विभाव्य च ॥
वर्णमाला समाख्याता अनुलोमविलोमतः ।
पञ्चाशल्लिपिभिर्म्माला विहिता सर्व्वकर्म्मसु ॥
अकारादिक्षकारान्ता वर्णमाला प्रकीर्त्तिता ॥
क्षार्णं मेरुमुखं तत्र कल्पयेन्मुनिसत्तम ! ।
अनया सर्व्वमन्त्राणां जपः सर्व्वसमृद्धिदः ॥"* ॥
तस्य फलं यथा,—
"जपनिष्ठो द्विजश्रेष्ठोऽखिलयज्ञफलं लभेत् ।
सर्व्वेषामेव यज्ञानां जायतेऽसौ महाफलः ॥
जपेन देवता नित्यं स्तूयमाना प्रसीदति ।
प्रसन्ना विपुलान् कामान् दद्यान्मुक्तिञ्च
शाश्वतीम् ॥
यक्षरक्षःपिशाचाश्च ग्रहाः सर्पाश्च भीषणाः ।
जापिनं नोपसर्पन्ति भयभीताः समन्ततः ॥
यावन्तः कर्म्मयज्ञाः स्युः प्रदिष्टानि तपांसि च ।
सर्व्वे ते जपयज्ञस्य कलां नार्हन्ति षोड़शीम् ॥
माहात्म्यं वाचिकस्यैतत् जपयज्ञस्य कीर्त्तितम् ।
तस्माच्छतगुणोपांशुः साहस्रो मानसः स्मृतः ॥"
इति तन्त्रसारः ॥

जपनं, क्ली, (जप व्यक्तोच्चारे + भावे ल्युट् ।) जपः । इत्यमरटीका ॥ ( यथा, महाभारते ।१२। १९६ । ७ ।
"संन्यास एव वेदान्ते वर्त्तते जपनं प्रति ॥")

जपपरायणः, त्रि, ( जप एव परमयनं आश्रयो यस्य ।) जपासक्तः । जपशीलः । यथा,—
"शिवरात्रिव्रतं देव ! पूजाजपपरायणः ।
करोमि विधिवद्दत्तं गृहाणार्घ्यं महेश्वर ! ॥"
इति तिथ्यादितत्त्वम् ॥

जपा, स्त्री, ( जपन्ति तान्त्रिका अनयेति । जप + अच् ततष्टाप् । ) जवापुष्पवृक्षः । इति हेमचन्द्रः । ४ । २१३ ॥ तस्य पर्य्यायगुणाः ।
"ओड्रपुष्पं जपा चाथ त्रिसन्ध्या सारुणा सिता ।
जपा संग्राहिणी केश्या त्रिसन्ध्या कफवातजित् ॥"
इति भावप्रकाशः ॥
(विशिष्टव्याख्या जवाशब्दे ज्ञातव्या ॥)

जभ, जभने । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-अकं-सेट् । ) जभनं मैथुनम् । जभति युवा । इति दुर्गादासः ॥

जभ, इ जभने । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-अकं-सेट् । ) जभनं मैथुनम् । इ, जम्भ्यते । इति दुर्गादासः ॥

जभ, इ क नाशे । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् ।) नशीति अन्तर्भूतण्यर्थत्वान्नाशीकरणे । इ क, जम्भयति पापं गङ्गा । इति दुर्गादासः ॥

जभ, इ ङ जृम्भे । गात्रविनामे इति यावत् । इति कविकल्पद्रुमः ॥ ( भ्वां-आत्मं-अकं-सेट् ।) इ, जम्भ्यते । ङ, जम्भते । प्रत्यूषकाले भुजगाङ्गनानां मुखेषु कामः प्रतिजृम्भतीव । इति गणकृतानित्यत्वात् । इति दुर्गादासः ॥

जभ, ङ जृम्भे । इति कविकल्पद्रुमः ॥ ( भ्वां-आत्मं-अकं-सेट् ।) जृम्भो गात्रविनाममिति गोविन्दभट्टः । ङ, जभते लोकः । कुक् जभोऽपीत्यत्रैव लुक् आत्मनेपदप्रकरणे ज्ञानविधानसामर्थ्यात् । इति दुर्गादासः ॥

जम, उ भक्षे । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-सकं-सेट् । उदित्वात् क्त्वावेट् । ) उ, जमित्वा जान्त्वा । इति दुर्गादासः ॥

जम्, अ, पत्नी । इति जम्पतीशब्दटीकायां भरतधृतनामप्रपञ्चः ॥

जमजौ, त्रि, ( यमौ एकत्र सहचरौ जनौ जायेते इति । जन + ड । पृषोदरादित्वात् यस्य जः ।) यमजौ । इति द्विरूपकोषः ॥

जमदग्निः, पुं, ( जमन् भुक्तभक्षणशीलः प्रज्वलित इत्यर्थः । तथाविधोऽग्निरिव । यद्वा, यमदग्निः । पृषोदरादित्वात् यस्य जः ।) यमदग्निमुनिः । इति द्विरूपकोषः ॥ स तु भृगुवंशोद्भव ऋचीकमुनिपुत्रः परशुरामपिता च । इति श्रीभागवतम् ॥ (अस्य जन्मविवरणादिकं महाभारते वनपर्व्वणि ।११५-११६ अध्याययोर्द्रष्टव्यम् ॥ असौ च सावर्णिके मन्वन्तरे ऋषिविशेषः । यथा, मार्कण्डेये ।७६।९-१०।
"अत्रिश्चैव वशिष्ठश्च काश्यपश्च महानृषिः ।
गौतमश्च भरद्वाजो विश्वामित्रोऽथ कौशिकः ॥
तथैव पुत्रो भगवानृचीकस्य महात्मनः ।
जमदग्निस्तु सप्तैते मुनयोऽत्र तथान्तरे ॥")

जमनं, क्ली, (जम भक्षे + भावे ल्युट् ।) जेमनम् । भोजनम् । इत्यमरटीकायां भरतः ॥

जम्पती, पुं, ( जाया च पतिश्च । राजदन्तादिगणे पाठात् जायाशब्दस्य जम्भावो निपात्यते ।) जायापती । इत्यमरः । २ । ६ । ३८ ॥ द्विवचनान्तोऽयं शब्दः ॥

जम्बालः, पुं, ( जमु अदने + बाहुलकाद्वालन् । यद्वा, जम्ब + भावे घञ् । जम्बं आलातीति । ला + कः । ) पङ्कः । इत्यमरः । १ । १० । ९ ॥ ( यथा, श्रीकण्ठचरिते । २ । १० ।
"अपद्यजम्बालगवेषणाय
तलोद्यमानां खलसैरिभाणाम् ।
कवीन्द्रवाङ्निर्झरनिर्झरिण्यां
संजायते वर्धमनोरथत्वम् ॥")
शैवालः । इति मेदिनी । ले, ६१ ॥ केतकवृक्षः । इति शब्दरत्नावली ॥

जम्बालिनी, स्त्री, (जम्बालः शैवालोऽस्त्यस्या इति । जम्बाल + इनिः ।) नदी । इति हेमचन्द्रः ।४।१४६॥

जम्बिरः, पुं, ( जम्बीर + निपातनात् ह्रस्वः । ) जम्बीरः । इति शब्दरत्नावली ॥

जम्बीरः, पुं, ( जम्यते भक्ष्यते इति । जमु भक्षे + "गम्भीरादयश्च ।" इति निपातनात् ईरन् प्रत्ययेन साधुः । ) फलवृक्षविशेषः । जामीर इति नेबु इति च भाषा । तत्पर्य्यायः । दन्तशठः २ जम्भः ३ जम्भीरः ४ जम्भलः ५ । इत्यमरः । २ । ४ । २४ ॥ जम्भी ६ रोचनकः ७ शोधी ८ जाड्यारिः ९ दन्तहर्षणः १० गम्भीरः ११ जम्बिरः १२ दन्तकर्षणः १३ । इति शब्दरत्नावली ॥ देवलः १४ वक्त्रशोधी १५ दन्तहर्षः १६ । इति जटाधरः ॥ तस्य गुणाः ।

"जम्बीरमुष्णं गुर्वम्लं वातश्लेष्मविबन्धनुत्।
शूलं कासकफोत्क्लेशच्छर्द्दितृष्णामदोषजित्॥
आस्यवैरस्यहृत्पीडावह्निमान्द्यकृमीन् हरेत्।
स्वल्पजम्बीरिका तद्वत् तृष्णाच्छर्द्दिनिवारिणी॥"
इति भावप्रकाशः ॥

तस्य फलस्य गुणाः। अत्यम्लमधुररसत्वम्। वातनाशित्वम्। पथ्यत्वम्। पाचनत्वम्। रोचनत्वम्। पित्तबलाग्निवृद्धिकारित्वञ्च। इति राजनिर्घण्टः ॥ अम्लत्वम्। गुरुत्वम्। सुगन्धित्वम्। उष्णत्वम्। वह्निकफवातविबन्धनाशित्वञ्च। इति राजवल्लभः ॥ पक्वस्य तस्य गुणाः। मधुरत्वम्। कफपित्तास्रदोषनाशित्वम्। वर्णवीर्य्यरुचिपुष्टिप्रकारित्वञ्च। मरुबकः। पर्णासः। सितार्जकः। इति राजनिर्घण्टः ॥ (सुगन्धतुलसी। यथा, वैद्यकरत्नमालायाम्। "मरुपर्णस्तु जम्बीरः प्रस्थपुष्पः फणिज्झकः ॥")

जम्बुः, स्त्री, ( जम्यते इति। जमु अदने + "जम्बु- कम्बू च।" उणां १। ९५। इति कु प्रत्ययेन निपातनात् साधुः। बाहुलकात् वृक्षः।) जम्बूः। इत्यमरटीकायां भरतः ॥ (यथा,— "जम्बुर्ग्राही मधुरकफहा रोचनी वातकारी।" इति हारीते प्रथमस्थाने दशमेऽध्याये ॥)

जम्बु, क्ली, स्त्री, जम्बूफलम्। तत्पर्य्यायः। जम्बूः २ जाम्बवम् ३। इत्यमरः। २। ४। १९ ॥

जम्बुकः, पुं, ( जमतीति। जमु अदने + "मृगय्वादयश्च।" उणां १। ३७। इति कु प्रत्ययेन निपातनात् साधुः। ततः स्वार्थे कन्।) शृगालः। ( यथा, महाभारते। १। १४१। ४६।
"एवं तेषु प्रयातेषु जम्बुको हृष्टमानसः।
खादति स्म तदा मांसमेकः सन्मन्त्रनिश्चयात् ॥")
वरुणः। ( जम्बु इव कायतीति। कै + कः।) वृक्षविशेषः। गोलापजाम इति भाषा ॥ नीचे च। इति शब्दरत्नावली ॥ श्योनाकभेदः। इति राजनिर्घण्टः ॥ (सुवर्णकेतकी। यथा,—
"केतकः सूचिकापुष्पो जम्बुकः क्रकचच्छदः।
सुवर्णकेतकी त्वन्या लघुपुष्पा सुगन्धिनी ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

जम्बुद्वीपः, पुं, ( जम्ब्वा उपलक्षितो द्वीपः।) पृथिव्याः सप्तद्वीपान्तर्गतद्वीपविशेषः। अयं द्वीपः पद्मकोषमध्यवर्त्तिकोष इव लक्षयोजनविस्तीर्णः पद्मपत्र इव समवर्त्तुलः लक्षयोजनविस्तृतलवणसमुद्रेण वेष्टितः। यस्मिन् प्रत्येकं नवसहस्रयोजनायामानि नव वर्षाणि तेषां वर्षाणामष्टौ सीमापर्व्वताः सन्ति। *। एषां वर्षाणां मध्ये इलावृतवर्षं मध्यवर्त्ति यस्य मध्यदेशे सुमेरुपर्व्वतः लक्षयोजनोत्सेधः। इलावृतवर्षस्योत्तरे नीलपर्व्वतः द्विसहस्रयोजनविस्तीर्णः अयुतयोजनोत्सेधः पूर्व्वपश्चिमयोः क्षारसमुद्रावधि दीर्घः। *। तदुत्तरे रम्यकवर्षं तदुत्तरे श्वेतपर्व्वतः द्विसहस्रयोजनविस्तीर्णः अयुतयोजनोत्सेधः पूर्व्वपश्चिमयोः क्षारसमुद्रावधि दीर्घः दैर्घ्ये नीलपर्व्वतात् किञ्चिदधिकदशांशेन न्यूनः। *। तदुत्तरे हिरण्मयवर्षं तदुत्तरे शृङ्गवान् पर्व्वतः तस्य विस्तारादयः श्वेतपर्व्वतवत् दैर्घ्ये श्वेतपर्व्वतात् किञ्चिदधिकदशांशेन न्यूनः। *। तदुत्तरे कुरुवर्षं तदुत्तरे क्षारसमुद्रः। इलावृतवर्षस्य दक्षिणे निषधपर्व्वतः द्विसहस्रयोजनविस्तीर्णः अयुतयोजनोत्सेधः पूर्व्वपश्चिमयोः क्षारसमुद्रावधि दीर्घः। *। तद्दक्षिणे हरिवर्षं तद्दक्षिणे हेमकूटपर्व्वतः अस्य विस्तारादयो निषधवत् दैर्घ्ये निषधात् किञ्चिदधिकदशांशेन न्यूनः। तद्दक्षिणे हिमालयपर्व्वतः अस्य विस्तारादयः पूर्व्ववत् दैर्घ्ये हेमकूटपर्व्वतात् किञ्चिदधिकदशांशेन न्यूनः। *। तद्दक्षिणे भारतवर्षं तद्दक्षिणे क्षारसमुद्रः। इलावृतस्य पश्चिमे माल्यवान् पर्व्वतः द्विसहस्रयोजनविस्तीर्णः अयुतयोजनोत्सेधः उत्तरदक्षिणयोर्नीलनिषधपर्व्वतावधि दीर्घः। *। तत्पश्चिमे केतुमालवर्षं तत्पश्चिमे लवणसमुद्रः। इलावृतस्य पूर्व्वे गन्धमादनपर्व्वतः अस्य विस्तारादयो माल्यवद्वत्। तत्पूर्व्वे भद्राश्ववर्षं तत्पूर्व्वे लवणसमुद्रः। *। मेरोः पूर्व्वादिचतुर्द्दिक्षु मन्दरमेरुमन्दरसुपार्श्वकुमुदनामानः पर्व्वतास्तिष्ठन्ति। तेषु चूतजम्बूकदम्बन्यग्रोधाश्चत्वारो वृक्षाः सन्ति। ते सर्व्वे दैर्घ्ये एकादशशतयोजनपरिमिताः विस्तारे शतयोजनपरिमिताः। तेषां शाखाविस्तारः एकादशशतयोजनपर्य्यन्तम्। तेषु पर्व्वतेषु चत्वारः पयोमध्विक्षुरसमृष्टजलाः। एवं नन्दनचैत्ररथवैभ्राजकसर्व्वतोभद्रसंज्ञकानि चत्वारि देवोद्यानानि च सन्ति। *। मन्दरोपरिस्थितैकादशशतयोजनोच्चचूतमस्तकात् पर्व्वतशृङ्गवत् स्थूलानि फलान्यमृतकल्पानि पतन्ति। तेषां विशीर्णमानानामतिमधुरसुगन्धिबहुलारुणरसोदेनारुणोदा नाम नदी मन्दरगिरिशिखरान्निपतन्ती पूर्व्वेणेलावृतमुपप्लावयति। *। एवं जम्बूफलानामत्युच्चनिपातविशीर्णानामनस्थिप्रायाणामिभकायनिभानां रसेन जम्बूर्नाम नदी मेरुमन्दरशिखरादवनितले निपतन्ती दक्षिणेनेलावृतं वहति। तस्या उभयोस्तीरयोर्मृत्तिका जम्बूरसेनानुविध्यमाना वाय्वर्कसंयोगविपाकेन सदामरलोकाभरणं जाम्बूनदं नाम स्वर्णं भवति। *। सुपार्श्वपर्व्वतस्थो यो महाकदम्बस्तस्य पञ्चकोटरेभ्यो विनिःसृताः पञ्चव्यामस्थूलाः पञ्च मधुधाराः सुपार्श्वशिखरात् पतन्त्यः पश्चिमेनेलावृतमनुमोदयन्ति। *। कुमुदपर्व्वतोपरिस्थितो यो वटवृक्षस्तस्य स्कन्धेभ्यो निर्गताः पयोदधिमधुघृतगुडान्नाद्यम्बरशय्यासनाभरणादियुक्ताः कामदुघा नदाः कुमुदाग्रात् पतन्त उत्तरेणेलावृतमुपयोजयन्ति। *। तान् नदान् सेवमानानां प्रजानां वलीपलितक्लमस्वेददौर्गन्ध्यजरामयमृत्युशीतोष्णवैवर्ण्योपसर्गादयस्तापविशेषा न कदाचित् भवन्ति यावज्जीवं निरतिशयसुखमेव। कुरङ्गकुररकुसुम्भवैकङ्कत्रिकूटशिखरशिशिरपतङ्गरुचकनिषधशितिवासकपिलशङ्खवैदूर्य्यजारुधिहंसनाभनागकालञ्जरनारदादयः पर्व्वता मेरोर्मूलदेशे परित उपक्लृप्ताः। मेरोः पूर्व्वदिशि उत्तरस्यामष्टादशयोजनदीर्घौ जठरदेवकूटपर्व्वतौ तिष्ठतः। तौ द्विसहस्रयोजनविस्तारौ एवं द्विसहस्रयोजनोच्चौ। मेरोः पश्चिमायान्दिशि पवनपारियात्रौ पर्व्वतौ उत्तरस्यामष्टादशयोजनदीर्घौ द्विसहस्रयोजनविस्तारौ द्विसहस्रयोजनोच्चौ। एवं दक्षिणस्यान्दिशि कैलासकरवीरपर्व्वतौ पूर्व्वस्यामष्टादशयोजनदीर्घौ द्विसहस्रयोजनविस्तारौ द्विसहस्रयोजनोच्चौ। तथैवोत्तरस्यां त्रिशृङ्गमकरपर्व्वतौ पूर्व्वस्यामष्टादशयोजनदीर्घौ द्विसहस्रयोजनविस्तारौ द्विसहस्रयोजनोच्चौ। एवं वर्षे वर्षे नदाः पर्व्वताश्च बहवः सन्ति ॥ * ॥ तथापि भारतमेव वर्षं कर्म्मक्षेत्रं अन्यान्यष्टौ वर्षाणि स्वर्गिणां पुण्यशेषोपभोगस्थानानि भूस्वर्गनामाख्यातानि। एषु वर्षेषु पुरुषाणां आयुरयुतवर्षाणि ते देवकल्पा अयुतनागबलविशिष्टाः वज्रदृढशरीराः सर्व्वदा मोदयुक्ताः सन्ति। येषु देवपतयः सगणाः सलीलाः नानास्थानेषु स्वैरं विहरन्ति। नवसु वर्षेषु भगवान्नारायणस्तत्पुरुषाणामनुग्रहाय स्वमूर्त्तिभेदेनाद्यापि सन्निहितो भवति ॥ * ॥ इलावृते तु वर्षे भगवान् शिव एक एव पुरुषः भवानी प्रधानार्ब्बुदसहस्रैः स्त्रीगणैः परिवृतः नारायणस्य सङ्कर्षणसंज्ञां मूर्त्तिं ध्यानेन सन्निधाप्य स्तुवन्नास्ते ॥ * ॥ भद्राश्वे वर्षे तद्वर्षपतिर्भद्रश्रवा नाम धर्म्मसुतः तत्कुलपतयः पुरुषा भगवतो हयग्रीवाभिधानां मूर्त्तिं परमसमाधिना सन्निधाप्य स्तुवन्ति ॥ * ॥ हरिवर्षे भगवान्नरहरिरूपेणास्ते तत्र प्रह्लादो दैत्यदानवकुलतीर्थस्वरूपः तद्वर्षपुरुषैः सहानन्यभक्तियोगेनोपास्ते ॥ * ॥ केतुमाले भगवान् कामदेवस्वरूपेण लक्ष्म्याः प्रियचिकीर्षया आस्ते तत्र भगवतो मायामयं रूपं परमसमाधियोगेन रमा देवी संवत्सरस्य रात्रिषु प्रजापतेर्दुहितृभिरुपेता अहःसु तद्भर्त्तृभिरुपेता उपास्ते ॥ * ॥ हिरण्मये वर्षे भगवान् कूर्म्मतनुं बिभ्राणो निवसति तत्रत्यवसतिं पितृगणाधिपतिरर्य्यमा तद्वर्षपुरुषैः सह उपास्ते ॥ * ॥ उत्तरकुरुवर्षे भगवान् वराहरूपी आस्ते तं भूमिस्तद्वर्षपुरुषैः सहास्खलितभक्तियोगेनोपास्ते ॥ * ॥ किम्पुरुषे वर्षे भगवान् दाशरथी रामरूपेणास्ते तं तच्चरणसन्निकर्षाभिरतः परमभागवतो हनुमान् अविरतभक्तिस्तद्वर्षपुरुषैरुपास्ते ॥ * ॥ भारते वर्षे भगवान्नरनारायणाख्य आकल्पान्तमनुग्रहायानुकम्पया अव्यक्तगतिस्तपश्चरति। तन्मूर्त्तिं नारदः वर्णाश्रमयुक्ताभिर्भारतवर्षीयप्रजाभिः सह भगवदनुभावोपवर्णनं पञ्चरात्रं सावर्णेरुपदेक्ष्यमाणः, परमभक्तिभावेन सेवते। *। भारतेऽप्यस्मिन् वर्षे सरिच्छैला बहवः सन्ति। यथा, मलयः मङ्गलप्रस्थः मैनाकः त्रिकूटः

ऋषभः कूटकः कोलः सह्यः देवगिरिः ऋष्यमूकः श्रीशैलः महेन्द्रः वारिधारः विन्ध्यः शुक्तिमान् ऋक्षगिरिः पारियात्रः द्रोणः चित्रकूटः गोवर्द्धनः रैवतकः ककुभः नीलः कोकः गोमुखः इन्द्रकीलः कामगिरिरिति चान्ये च शतसहस्रशः शैलाः । * । तेषां नितम्बप्रभवा नद्यो ह्यसंख्याताः । यथा, चन्द्रवशा ताम्रपर्णी अवटोदा कृतमाला वैहायसी कावेरी वेणा पयस्विनी शर्करावर्त्ता तुङ्गभद्रा कृष्णवेण्या भीमरथी गोदावरी निर्विन्ध्या पयोष्णी तापी रेवा सुरसा नर्मदा चर्मण्वती महानदी वेदस्मृतिः ऋषिकुल्या त्रिसामा कौशिकी वाग्मती कौशिकी मन्दाकिनी यमुना सरस्वती दृषद्वती गोमती सरयूः ओघवती सुषोमा शतद्रुः चन्द्रभागा मरुद्वृधा वितस्ता असिक्नी विश्वा इति महानद्यः । अन्याः शोणश्च नदौ । * । अस्मिन् वर्षे जम्बुद्वीपस्य पुरुषैः शुक्लालोहितकृष्णवर्णेन स्वारब्धेन कर्म्मणा दिव्यमानुषनारकगतयो भवन्ति ॥ * ॥ जम्बुद्वीपस्य अष्टौ उपद्वीपाः सन्ति सगरात्मजैरश्वान्वेषणे इमां महीं परितो निखनद्भिरुपकल्पिताः । तद्यथा, स्वर्णप्रस्थः चन्द्रशुक्लः आवर्त्तनः रमणकः मन्दहरिणः पाञ्चजन्यः सिंहलः लङ्का इति । इति श्रीभागवते । ५ । १९ अध्याये । तथा च मार्कण्डेये ५४ अध्याये मात्स्ये ११२ अध्याये च द्रष्टव्यम् ॥ * ॥ ज्योतिःशास्त्रमते लवणसमुद्रस्योत्तरे जम्बुद्वीपः । स तु भूम्यर्द्धभागः । तस्य दक्षिणे द्वितीयार्द्धभागे द्वीपषट्कस्य सप्तसमुद्रस्य च निवेशः । इति सिद्धान्तशिरोमणिः ॥

जम्बुलः, पुं, (जम्बुं जम्बुफलं लातीति । ला + कः ।) जम्बूवृक्षः । केतकवृक्षः । इति विश्वः ॥ (यथा, सुश्रुते । १ । १६ ।

"अवमन्थः सकच्छूको ग्रन्थिको जम्बुलस्तथा ॥")

जम्बुवनजं, क्ली, (जम्बुवनमिव जायते इति । जन् + डः ।) श्वेतजवापुष्पम् । यथा,—

"पारिभद्रं पाटला च बकुलं गिरिशालिनी ।
तिलकं जम्बुवनजं पीतकं तगरन्त्वपि ॥
एतानि हि प्रशस्तानि कुसुमान्यच्युतार्च्चने ॥"

इति वामनपुराणम् ॥

जम्बूः, स्त्री, (जम्यते भक्ष्यते इति । जमु अदने + "अन्दूदृम्भूजम्बू—" उणा० १ । ९५ । इति कूः ।) नागदमनी । इति राजनिर्घण्टः ॥ वृक्षविशेषः । जाम इति भाषा । तत्पर्य्यायः । सुरभिपत्रा २ नीलफला ३ श्यामला ४ महास्कन्धा ५ राजार्हा ६ राजफला ७ शुकप्रिया ८ मेदमोदिनी ९ । तत्फलगुणाः । कषायत्वम् । मधुरत्वम् । श्रमपित्तदाहकण्ठार्त्तिशोषकृमिदोषश्वासातिसारकफकासविनाशित्वम् । विष्टम्भित्वम् । रोचनत्वम् । पाचनत्वञ्च । इति राजनिर्घण्टः ॥ गुरुत्वम् । स्वादुत्वम् । शीतलत्वम् । अभिसंदूषकत्वम् । रूक्षत्वम् । वातकारित्वम् । इति राजवल्लभः ॥ सा हस्वक्षुद्रभेदेन द्विविधा । तत्र हस्वायाः पर्य्यायः । महाजम्बूः १ महाफला २ राजजम्बूः ३ हस्वफला ४ । इति रत्नमाला ॥ फलेन्द्रः ५ नन्दः ६ महाफला ७ सुरभिपत्रा ८ । एतत्फलगुणाः । विष्टम्भित्वम् । गुरुत्वम् । रोचनत्वम् । इति भावप्रकाशः ॥ क्षुद्रायाः पर्य्यायः । सूक्ष्मफला १ दीर्घपत्रा २ भ्रमरा ३ । वनजम्बूपर्य्यायः । भूमिजम्बूः १ काकजम्बूः २ नादेयी ३ शीतपल्लवा ४ । इति रत्नमाला ॥ सूक्ष्मपत्रा ५ जलजम्बुका ६ । तत्फलगुणाः । ग्राहित्वम् । रूक्षत्वम् । कफपित्तास्रदाहनाशित्वञ्च । इति भावप्रकाशः ॥ तत्फलस्य पर्य्यायः । जम्बु २ जाम्बवम् ३ । इत्यमरः । २ । ४ । १९ ॥ (स्वनामख्याता नदी । यथा, मात्स्ये । १२० । ६७ ।

"मेरोः पार्श्वात् प्रभवति हृदश्चन्द्रप्रभो महान् ।
जम्बूश्चैव नदी पुण्या यस्यां जाम्बूनदं स्मृतम् ॥")

जम्बुकः, पुं, स्त्री, (जम्बुकः पृषोदरादित्वात् दीर्घः ।) शृगालः । इति शब्दरत्नावली ॥ जम्बुकशब्दार्थोऽप्यत्र ॥

जम्बूका, स्त्री, (जम्बूरिव कायतीति । कै + कः । अजादित्वात् टाप् ।) काकलीद्राक्षा । इति राजनिर्घण्टः ॥

जम्बूलः, पुं, (जम्बूं जम्बूफलं लातीति । ला + कः ।) जम्बूवृक्षः । केतकवृक्षः । इति मेदिनी । ले, ९४ ॥ (यथा, हरिवंशे । ९६ । १६ ।

"जम्बू जम्बूलवृक्षाढ्यं कन्दकन्दलभूषितम् ॥"
वरपक्षीयस्त्रीणां परिहासवचनम् । इति नीलकण्ठः ॥ )

जम्बूलमालिका, स्त्री, (जम्बूलस्य वरपक्षीयरमणीपरिहासवचनस्य मालिका परम्परा ।) कन्यावरयोर्मुखचन्द्रिका । इत्युद्वाहतत्त्वम् ॥ (यथा, हरिवंशे । १८३ । २२ ।

"आशीर्भिर्व्वर्द्धयित्वा च देवर्षिः शक्रमब्रवीत् ।
अनिरुद्धस्य वीर्य्याढ्यो विवाहः क्रियतां विभो ! ।
जम्बूलमालिकां द्रष्टुं श्रद्धा हि मम जायते ॥")
"जम्बूलं वरपक्षीयस्त्रीणां परिहासवचनं तेषां मालिका श्रेणी ।" इति तट्टीकायां नीलकण्ठः ॥

जम्भः, पुं, (जम्भते जृम्भते इति । जभि गात्रविनामे + पचाद्यच् । "रधिजभोरचि ।" ७ । १ । ६१ । इति नुम् ।) दैत्यभेदः । (इन्द्र एनं निहतवान् ॥ अपरो दैत्यविशेषः । विष्णुरेनं जघान । यथा, महाभारते । ३ । १०२ । २४—२५ ।

"असुरश्च महेष्वासो जम्भ इत्यभिविश्रुतः ।
यज्ञक्षोभकरः क्रूरस्त्वयैव विनिपातितः ॥
एवमादीनि कर्म्माणि येषां संख्या न विद्यते ।
अस्माकं भयभीतानां त्वं गतिर्म्मधुसूदन ! ॥"
प्रह्लादपुत्राणामेकतमः । यथा, हरिवंशे । २१८ । ३५ ।
"प्रह्लादस्य त्रयः पुत्रा विख्याताश्च महाबलाः ।
विरोचनश्च जम्भश्च कुजम्भश्चेति विश्रुताः ॥"
राक्षसविशेषः । स तु रावणस्याऽनुचरः । यथा, महाभारते । ३ । २८४ । रामरावणयुद्धे । २ ।

"पर्व्वणः पूतनो जम्भः खरः क्रोधवशो हरिः ॥"
जम्भ्यते भक्ष्यतेऽनेनेति । जभ + करणे घञ् ।) दन्तः । यथा, ऋग्वेदे । ८ । ९१ । २ ।
"इमं जम्भसुतं पिब ।" "जम्भसुतं दन्तैरभिषुतम् ।" इति तद्भाष्यम् ॥ * ॥ जम्भ्यते भक्ष्यतेऽसौ इति कर्म्मणि घञ् ।) जम्बीरः । (यथा,—
"स्याज्जम्बीरो दन्तशठो जम्भजम्भीरजम्भलाः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ * ॥
जभ + भावे घञ् ।) भक्षणम् । इति मेदिनी । भे, ४ ॥ (यथा, महाभारते । ५ । ६४ । २० ।
"इति ते कथयन्ति स्म श्राकुना जम्भसाधकाः ॥")
अंशः । तूणः । इति हेमचन्द्रः ॥

जम्भकः, पुं, (जम्भ एव । स्वार्थे कन् ।) जम्बीरः । इति शब्दचन्द्रिका ॥ (स्वनामख्यातो नृपविशेषः । यथा, महाभारते । २ । ३१ । ७ ।

"ततश्चर्म्मण्वतीकूले जम्भकस्यात्मजं नृपम् ।
ददर्श वासुदेवेन शेषितं पूर्व्ववैरिणा ॥" * ॥)
जम्भतीति जभइजभने + ण्वुल् । नाशके, त्रि ॥ )

जम्भका, स्त्री, (जम्भा एव । स्वार्थे कन् ।) जृम्भा । इति राजनिर्घण्टः ॥

जम्भगः, पुं, (जम्भाय भक्षणाय गच्छति भ्रमतीति । गम + डः । अतिशयभक्षणशीलत्वात् तथात्वम् ।) राक्षसविशेषः । यथा,—

"देवा यक्षास्तथा नागा गन्धर्व्वाप्सरसोऽसुराः ।
क्रूराः सर्पाः सुपर्णाश्च तरवो जम्भगाः खगाः ॥
विद्याधरा जलाधारास्तथैवाकाशगामिनः ।
निराहाराश्च ये जीवाः पापेऽधर्म्मे रताश्च ये ॥
तेषामाप्यायनायैतद्दीयते सलिलं मया ॥"

इत्याह्निकाचारतत्त्वधृतपद्मपुराणवचनम् ॥

जम्भद्विट्, [ष्] पुं, (जम्भं तदाख्यया प्रसिद्धमसुरं द्वेष्टीति । द्विष् + क्विप् । जम्भस्य द्विट् इति वा ।) इन्द्रः । इति हेमचन्द्रः ॥ (विष्णुः । इति महाभारतम् ॥ )

जम्भभेदी, [न्] पुं, (जम्भं भेत्तुं शीलमस्य । भिद् + "सुप्यजातौ णिनिस्ताच्छील्ये ।" ३ । २ । ७८ । इति णिनिः ।) इन्द्रः । इत्यमरः । १ । १ । ४६ ॥

जम्भरः, पुं, (जम्भं भक्षणरुचिं राति ददातीति । जम्भ + रा + कः ।) जम्बीरः । इति शब्दचन्द्रिका ॥

जम्भलः, पुं, (जम्भर । रस्य लत्वम् ।) जम्बीरः । (यथा, भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।
"स्याज्जम्बीरो दन्तशठो जम्भजम्भीरजम्भलाः ॥)"
बुद्धदेवविशेषः । इति मेदिनी । ले, ९७ ॥

जम्भला, स्त्री, (जम्भं भक्षणं लाति आददातीति । ला + कः ।) राक्षसीविशेषः । यथा,—

"समुद्रस्योत्तरे तीरे जम्भला नाम राक्षसी ।
तस्याः स्मरणमात्रेण विशल्या गर्भिणी भवेत् ॥"

इति ज्योतिस्तत्त्वे राजमार्त्तण्डः ॥

जम्भा, स्त्री, (जम्भ्यते इति । जभि जृम्भायाम् + भावे अः ततः स्त्रियां टाप् ।) जृम्भा । इति राजनिर्घण्टः ॥

जम्भारिः, पुं, (जम्भनामासुरस्य अरिः शत्रुः ।) इन्द्रः । यथा, "जम्भारिदन्तीव ।" इत्युत्तरनैषधम् ॥ वह्निः । वज्रम् । इति विश्वः ॥ (विष्णुः । इति महाभारतम् ॥)

जम्भी, [न्] पुं, (जम्भयति क्षुधामान्द्यादिकं नाशयतीति । जभि क नाशे + णिनिः ।) जम्बीरः । इति शब्दचन्द्रिका ॥

जम्भीरः, पुं, (जम्भते अभिरुच्यर्थे भक्ष्यते इति । जभ + "गम्भीरादयश्च ।" इति ईरन् । ततो "रधिजभोरचि ।" ७ । १ । ६१ । इति नुम् ।) जम्बीरः । इत्यमरः । २ । ४ । ७९ ॥ मरुवकः । इति तट्टीकायां भरतः ॥ *

जयः, पुं, (जि अभिभवे + "एरच् ।" ३ । ३ । ५६ । इत्यच् ।) शत्रुपराजयस्वीकारणम् । जित् इति भाषा । तत्पर्य्यायः । विजयः २ जयनम् ३ । इत्यमरः । २ । ८ । १० ॥ (यथा, मनुः । ७ । ४४ ।
"इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम् ।
जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः ॥")
अभिमन्युः । (जयतीति । जि + पचाद्यच् ।) जयन्तः । युधिष्ठिरः । इति मेदिनी । ये, २५ ॥ (एतन्नाम तु विराटगृहे छद्मप्रवासकाले जातम् । यथा, महाभारते । ४ । ५ । ३४ ।
"जयो जयन्तो विजयो जयत्सेनो जयद्बलः ।
इति गुह्यानि नामानि चक्रे तेषां युधिष्ठिरः ॥")
विजयनन्दनराजः । स तु इक्ष्वाकुवंशोद्भवः । इति हेमचन्द्रः । ३ । ३५८ ॥ श्रीनारायणपार्षदः । यथा,— *
"एतौ तौ पार्षदौ मह्यं जयो विजय एव च ।
कदर्थीकृत्य मां यद्वो बह्वक्रातामतिक्रमम् ॥"
इति श्रीभागवते । ३ । १६ । २ ॥
(सर्व्वाणि भूतानि जयतीति । जीयते संसारमनेन वा । विष्णुः । यथा, महाभारते । १३ । १४९ । ६७ ।
"नयो जयः सत्यसन्धो दाशार्हः सात्वतां पतिः ॥"
नागविशेषः । यथा, महाभारते । ५ । १०३ । १६ ।
"विरजा धारणश्चैव सुबाहुर्मुखरो जयः ॥"
दानवविशेषः । यथा, हरिवंशे । २३४ । ८३ ।
"जयो निकुम्भः कुपथश्च दानवो
हरश्मश्रुरेते दश दानवाधिपम् ॥"
दशममन्वन्तरीय-ऋषिविशेषः । यथा, भागवते । ८ । १३ । २१—२२ ।
"दशमो ब्रह्मसावर्णिरुपश्लोकसुतो मनुः ॥"
"हविष्मान् सुकृतः सत्यो जयो मूर्त्तिस्तदा
द्विजाः ॥"
ध्रुववंशीयस्य वत्सरनृपस्य पुत्रविशेषः । यथा, तत्रैव ४ । १३ । १२ ।
"सुवीथीवत्सरस्येष्टा भार्य्यासूत षडात्मजान् ।
पुष्पार्णं तिग्मकेतुञ्च इषमूर्ज्जं वसुं जयम् ॥"
विश्वामित्रपुत्रविशेषः । (यथा, तत्रैव । ९ । १६ । ३६ ।
"एष वः कुशिका वीरो देवरातस्तमन्वित ।
अन्ये चाष्टकहारीतजयक्रतुमदादयः ॥"
उर्व्वशीगर्भजातः पुरूरवसः पुत्रविशेषः । यथा, तत्रैव । ९ । १५ । १ ।
"ऐलस्य चोर्व्वशीगर्भात् षडासन्नात्मजा नृप ! ।
आयुः श्रुतायुः सत्यायू रयोऽथ विजयो जयः ॥"
राजर्षिविशेषः । यथा, महाभारते । १ । ८ । १४ ।
"तस्मा राजन्यः पुण्यास्तथा ब्रह्मर्षयोऽमलाः ।
धर्म्मं देवलं तात ! प्रहृष्टाः पर्य्युपासते ॥"
इत्युपक्रम्याह ।
"अङ्गो वितथ वैयश्च दुष्मन्तः सृञ्जयो जयः ॥"
धृतराष्ट्रपुत्राणामन्यतमः । यथा, तत्रैव । १ । ६७ । ११७ ।
"जयः सत्यव्रतश्चैव पुरुमित्रश्च भारत ! ॥"
सञ्जयस्य राज्ञः पुत्रः । यथा, हरिवंशे । ७९ । २ ।
"सञ्जयस्य जयः पुत्रो विजयस्तस्य चात्मजः ॥"
सञ्जयस्य राज्ञः पुत्रः । यथा, भागवते । ९ । १७ । १६ ।
[जयः ॥"
"कुशात् प्रतिः षात्रवृद्धात् सञ्जयस्तत् सुतो
दीर्घतमैर्मन्योः पुत्रविशेषः । यथा, तत्रैव । ९ । २१ । १ ।
"वितथस्य सुतान्मन्योर्वृहत्क्षत्रो जयस्ततः ॥"
युयुधानपुत्रः । यथा, तत्रैव । ९ । २४ । १४ ।
"युयुधानः सात्यकिर्वै जयस्तस्य कुणिस्ततः ॥"
भारतादिशास्त्रविशेषः । यथा, भविष्यपुराणे ।
"अष्टादशपुराणानि रामस्य चरितं तथा ।
विष्णुधर्म्मादिशास्त्राणि शिवधर्म्माश्च भारत ! ॥
कार्ष्णञ्च पञ्चमो वेदो यन्महाभारतं स्मृतम् ।
सौराश्च धर्म्मा राजेन्द्र ! मानवोक्ता महीपते ! ॥
जयेति नाम एतेषां प्रवदन्ति मनीषिणः ॥"
दक्षिणद्वारगृहम् । इति शब्दार्थचिन्तामणिः ॥ वत्सरविशेषः । तत्फलं यथा,—
"क्षत्त्रियाश्च तथा वैश्याः शूद्राश्च नटनर्त्तकाः ।
पीड़िताश्च वरारोहे ! जये सर्व्वे न संशयः ॥")

जयकोलाहलः, पुं, (जयस्य कोलाहलो यत्र ।) पाशकभेदः । इति शब्दरत्नावली ॥ (जयस्य कोलाहलः ।) जयध्वनिश्च ॥

जयढक्का, स्त्री, (जयघोषिका ढक्का । विजयकाले एव वादनादस्य तथात्वम् ।) वाद्यविशेषः । इति लोकप्रसिद्धा । जयढाक इति भाषा ॥

जयदत्तः, पुं, (जयेन विजयेन दत्त इव । जयशीलत्वादेवास्य तथात्वम् ।) इन्द्रपुत्रः । इति हेमचन्द्रः । २ । ८९ ॥

जयनं, क्ली, (जीयतेऽनेनेति । जि + करणे ल्युट् ।) तुरङ्गादिसन्नाहः । (यथा, माघे । १७ । २३ ।
"सजयनं द्विरदानां वक्षसि
स्तुरङ्गियो जयनयुजश्च वाजिनः ।
त्वरायुजः क्षयमपि कुर्व्वतो नृपाः
पुनः पुनस्तदधिकतामतत्वरन् ॥"* ॥
भावे ल्युट् ।) जयः । इति मेदिनी । ने, ६७ ॥

जयनी, स्त्री, (जयन + स्त्रियां ङीप् ।) इन्द्रकन्या । इति शब्दरत्नावली ॥

जयन्तः, पुं, (जयतीति । जि + "तॄभूवहिवसीति ।" उणां ३ । १२८ । इति झच् ।) इन्द्रपुत्रः । तत्पर्य्यायः । पाकशासनिः २ । इत्यमरः । १ । १ । ४९ ॥ ऐन्द्रिः ३ । इति मेदिनी । ते, ११० ॥ (यथा, रघौ । ३ । २३ ।
"उमावृषाङ्कौ शरजन्मना यथा
यथा जयन्तेन शचीपुरन्दरौ ।
तथा नृपः सा च सुतेन मागधी
ननन्दतुस्तत्सदृशेन तत्समौ ॥"
विष्णुः । यथा, महाभारते । १३ । १४९ । ९८ ।
"अर्को वाजसनः शृङ्गी जयन्तः सर्व्वविज्जयी ॥"
"अतिशयेनारीन् जयति जयहेतुरिति वा जयन्तः ।" इति तद्भाष्यम् ॥) शिवः । (यथा, मात्स्ये । ५ । ३० ।
"सावित्रश्च जयन्तश्च पिनाकी चापराजितः ।
एते रुद्राः समाख्याता एकादशगणेश्वराः ॥")
चन्द्रः । इति त्रिकाण्डशेषः ॥ भीमः । इति मेदिनी । ते, ११० ॥ (एतन्नाम तु अस्य विराटगृहवासकाले जातम् । यथा, महाभारते । ४ । ५ । ३३ ।
"जयो जयन्तो विजयो जयत्सेनो जयद्बलः ।
इति गुह्यानि नामानि चक्रे तेषां युधिष्ठिरः ॥"
मरुत्वतीगर्भजातो धर्म्मपुत्रविशेषः । अयं हि उपेन्द्र इत्याख्यया प्रसिद्धः । यथा, भागवते । ६ । ६ । ८ ।
"मरुत्वांश्च जयन्तश्च मरुत्वत्या बभूवतुः ।
जयन्तो वासुदेवांश उपेन्द्र इति यं विदुः ॥"
राज्ञो दशरथस्य मन्त्रिविशेषः । यथा, रामायणे । १ । ७ । २—३ ।
"अष्टौ बभूवुर्वीरस्य तस्यामात्या यशस्विनः ।
शुचयश्चानुरक्ताश्च राजकृत्येषु नित्यशः ॥
धृष्टिर्जयन्तो विजयः सुराष्ट्रो राष्ट्रवर्द्धनः ।
अकोपो धर्म्मपालश्च सुमन्त्रश्चाष्टमोऽर्थवित् ॥"
पर्व्वतविशेषः । यथा, हरिवंशे । १७० । १८ ।
"ततश्च पर्व्वताः सप्त कैलासं समुपस्थिताः ।
जयन्तो वैजयन्तश्च नीलो रजतपर्व्वतः ।
महामेरुः सकैलास इन्द्रकूटश्च नामतः ॥"
ज्योतिषोक्तयात्राविजययोगविशेषः । यथा,—
"यत्र श्रावणगश्चन्द्रो लग्नादेकादशे स्थितः ।
जयन्तो नाम योगोऽयं शत्रुपक्षविनाशकृत् ॥")
षोडशध्रुवकान्तर्गतध्रुवविशेषः । तस्य लक्षणं यथा,—
"आदितालो जयन्तः स्यात् शृङ्गाररससंयुतः ।
षट्संख्याक्षरपद आयुर्वृद्धिकरः परः ॥"
इति सङ्गीतदामोदरः ॥

जयन्तिका, स्त्री, (जयन्तीव कायतीति । कै + कः । ततो ह्रस्वो नियातनात् ।) हरिद्रा । इति राजनिर्घण्टः ॥ (दुर्गायाः सखीविशेषः । यथा, काशीखण्डे । ४७ । ४६ ।
"यथा जया च विजया यथा चैव जयन्तिका ॥")

जयन्ती, स्त्री, (जयतीति । जि + "तॄभूवहीति ।" उणां ३ । १२८ । इति झच् । ततो गौरा-

दित्वात् ङीष् ।) गौरी । (यथा, कालिकापुराणे ।
"जयन्ती मङ्गला काली भद्रकाली कपालिनी ।
दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा नमो-
ऽस्तु ते ॥")
इन्द्रपुत्री । पताका । इति मेदिनी । ते, १०८ ॥
वृक्षविशेषः । तत्पर्य्यायः । जया २ तर्कारी ३ नादेयी ४ वैजयन्तिका ५ । इत्यमरः ।२।४।६५॥ बला ६ मोटा ७ हरिता ८ विजया ९ कृष्णमूला १० विजयान्ता ११ अपराजिता १२ । ( यथा, तिथितत्त्वे ।
"कदली दाडिमी धान्यं हरिद्रा मानकं कचु ।
बिल्वोऽशोको जयन्ती च विज्ञेया नवपत्रिकाः ॥")
अस्याः गुणाः । मद्यगन्धयुक्तत्वम् । तिक्तत्वम् । कटुत्वम् । उष्णत्वम् । क्रमिभूतनाशित्वम् । वक्त्रविशोधकत्वञ्च । तत्र कृष्णा रसायनी । इति राजनिर्घण्टः ॥ एतच्छाकस्य गुणाः । ज्वरदोषनाशित्वम् । चक्षुर्हितत्वम् । मधुरत्वम् । हिमत्वञ्च । इति राजवल्लभः ॥
("श्वेतजयन्ती मूलं पिष्टं पीतञ्च तण्डुलजलेन ।
श्वित्रं निहन्ति नियतं रविवारे वैद्यनाथाज्ञा ॥"
इति वैद्यकचक्रपाणिसंग्रहे कुष्ठाधिकारे ॥)
योगविशेषः । यथा, तिथ्यादितत्त्वे स्कान्दम् ।
"अयं पुण्यञ्च कुरुते जयन्तीमिति तां विदुः ।
रोहिणीसहिता कृष्णा मासि च श्रावणेऽष्टमी ॥
अर्द्धरात्रादधश्चोर्द्ध्वं कलयापि यदा भवेत् ।
जयन्ती नाम सा प्रोक्ता सर्व्वपापप्रणाशिनी ॥"
(द्वादशीविशेषः । यथा, ब्रह्मवैवर्त्ते ।
"उन्मीलनी वञ्जुली च त्रिस्पृशा पक्षवर्द्धिनी ।
जया च विजया चैव जयन्ती पापनाशिनी ।
द्वादश्यष्टौ महापुण्याः सर्व्वपापहरा द्विज ! ॥"
वटिकौषधविशेषः । तद्यथा,—
"विषं माद्रागन्धा च यवानीनीलपत्रकम् ।
मरिचं पिप्पलीनिम्बमजाजीया तुल्यकम् ।
वटिका पूर्व्ववत्कार्य्या जयन्तीयोगवाहिका ॥"
इति जयन्ती वटी ।
इति वैद्यकरसेन्द्रसारसंग्रहे ज्वराधिकारे ॥)

जयपत्रं, क्ली, ( जयसूचकं पत्रम् । ) अश्वमेधीयघोटकभाले बद्धा लिपिः । तद्यथा,—
"त्रैलोक्यविजयी रामो रावणान्तकरः प्रभुः ।
स दीक्षितो वाजिमेधे तस्यायं प्रोक्षितः पशुः ॥
पालितो लक्ष्मणेनैव सुलक्षणविलक्षितः ।
संपूज्य च परित्याज्यः सर्व्वैरिति च संस्कृताम् ॥"
इति वाल्मीकिरामायणम् ॥*॥
विवादविषयकजयबोधकलिपिः । जिकड़ि इति हड्‌राली भाषा । यथा, व्यवहारतत्त्वे ।
"यदृत्तं व्यवहारात् पूर्व्वमुत्तरादिकम् ।
क्रियावधारणोपेतं जयपत्रेऽखिलं लिखेत् ॥
पूर्व्वोत्तरक्रियायुक्तं निर्णयान्तं यदा नृपः ।
प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते ॥"

जयपालः, पुं, ( जयं पालयतीति । पालि + "कर्म्मण्यण् ।" ३।२।१ । इत्यण् ।) विधिः । विष्णुः । भूपालः । इति शब्दरत्नावली ॥ वृक्षविशेषः । जमालगोटा इति भाषा । तत्पर्य्यायः । सारकः २ रेचकः ३ तिन्तिड़ीफलम् ४ दन्तीबीजम् ५ मलद्रावि ६ बीजरेचनम् ७ कुम्भीबीजम् ८ कुम्भिनीबीजम् ९ घण्टाबीजम् १० वह्निनीबीजम् ११ निकुम्भाख्यबीजम् १२ घोषणीबीजम् १३ चक्रदन्तीबीजम् १४ । अस्य गुणाः । कटुत्वम् । उष्णत्वम् । विरेचनत्वम् । दीपनत्वम् । क्रमिकफामजठरामयनाशित्वञ्च । इति राजनिर्घण्टः ॥

जयपुत्रकः, पुं, ( जयेन विजयेन पुत्र इव कायतीति । कै + कः । पुत्रतुल्यप्रीतिप्रदत्वात् तथात्वम् । ) पाशकभेदः । इति शब्दरत्नावली ॥

जयमङ्गलः, पुं, ( जय एव मङ्गलं यस्य । जयेन मङ्गलं यस्मादिति वा । ) राजवाह्यहस्ती । इति शब्दरत्नावली ॥ ध्रुवकविशेषः । यथा,—
"चतुर्विंशतिवर्णाङ्घ्रिः कथितो जयमङ्गलः ।
शृङ्गारवीरयोरेव तालो चाचपुटे च सः ॥"
इति सङ्गीतदामोदरः ॥ *
ज्वरघ्नौषधविशेषः । यथा,—
"हिङ्गुलसम्भवं सूतं गन्धकं टङ्कणं तथा ।
ताम्रं वङ्गं माक्षिकञ्च सैन्धवं मरिचं तथा ॥
समं सर्व्वं समाहृत्य द्विगुणं स्वर्णभस्मकम् ।
तदर्द्धं कान्तलौहञ्च रूप्यभस्मापि तत् समम् ॥
तत्समं पारदसमम् ।
एतत् सर्व्वं विचूर्ण्याथ भावयेत् कनकद्रवैः ।
शेफालीदलजैश्चापि दशमूलरसेन च ॥
किरातातिक्तकक्वाथैस्त्रिवारं भावयेत् सुधीः ।
भावयित्वा तु तत् कार्य्या गुञ्जाद्वयमिता वटी ॥
अनुपानं प्रयोक्तव्यं जीरकं मधुसंयुतम् ।
जीर्णज्वरं महाघोरं चिरकालसमुद्भवम् ॥
ज्वरमष्टविधं हन्ति साध्यासाध्यमथापि वा ।
पृथग्दोषांश्च विविधान् समस्तान् विषमज्वरान् ॥
मेदोगतं मांसगतमस्थिमज्जगतं तथा ।
अन्तर्गतं महाघोरं बहिःस्थञ्च विशेषतः ॥
नानावर्णोद्भवञ्चैव ज्वरं शुक्रगतं तथा ।
निखिलं ज्वरनामानं हन्ति श्रीशिवशासनात् ॥
जयमङ्गलनामायं रसः श्रीशिवनिर्म्मितः ।
बलपुष्टिकरश्चैव सर्व्वरोगनिबर्हणः ॥"
इति श्रीजयमङ्गलो रसः ।
इति भैषज्यरत्नावली ॥

जयवाहिनी, स्त्री, ( जयस्य जयन्तस्य वाहिनी यद्वा स्वयंवरसभायां संग्रामे वा जयं वहतीति । वह + णिनिः । ततो ङीप् । ) शची । इन्द्राणी । इति हेमचन्द्रः । २।८९ ॥

जया, स्त्री, ( जीयतेऽनया । जि + "एरच् ।" इति करणे अच् ततष्टाप् । ) दुर्गा । ( यथा, महाभारते । ६ । २२ । २२ ।
"कात्यायनि महाभागे करालि विजये जये ! ॥")
अस्या व्युत्पत्तिर्यथा,—
"जयः कल्याणवचनो ह्याकारो दातृवाचकः ।
जयं ददाति या नित्यं सा जया परिकीर्त्तिता ॥
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥
जयन्तीवृक्षः । यथा, वैद्यकरत्नमालायाम् ।
"वैजयन्ती च तर्कारी जयन्ती विजया जया ॥"
तिथिविशेषः । सा तु तृतीयाष्टमीत्रयोदश्यः । ( यथा, ज्योतिषे ।
"नन्दा भद्रा जया रिक्ता पूर्णा प्रतिपदः क्रमात् ॥"
द्वादशीविशेषः । यथा, ब्रह्मवैवर्त्ते ।
"जया च विजया चैव जयन्ती पापनाशिनी ।
द्वादश्योऽष्टौ महापुण्याः सर्व्वपापहरा द्विज ॥")
हरीतकी । दुर्व्वावली । इति मेदिनी । ये, २४ ॥
(यथा, काशीखण्डे । ४७ । ४६ ।
"यथा जया च विजया यथा चैव जयन्तिका ॥"
देवी भगवती तु वराहपर्व्वते पीठस्थाने जयारूपेण विराजते । यथा, देवीभागवते ।७।३०।६२ ।
"वराहपर्व्वते तु जया कमला कमलालये ॥")
विजया । (यथा, रसप्रदीपे अजीर्णचिकित्सायाम् ।
"[illegible] जयचूर्णमिदं शुभम् ।
सर्व्वतुल्या जया भृष्टा तदर्द्धा त्रिगुणा वटा ॥")
शाकारवः । नीलदूर्व्वा । अग्निमन्थवृक्षः । इति राजनिर्घण्टः ॥ ( यथा, भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।
"अग्निमन्थो जयः स स्यात् श्रीपर्णी गणिकारिका ।
जया जयन्ती तर्कारी नादेयी वैजयन्तिका ॥")
पताकाविशेषः । इति युक्तिकल्पतरुः ॥
(ज्वरघ्नौषधविशेषः । यथा,—
"विषं त्रिकटुकं मुस्तं हरिद्रा निम्बपत्रकम् ।
विडङ्गमष्टमं चूर्णं छागमूत्रैः समं समम् ।
चणकाभा वटी कार्य्या स्याज्जया योगवाहिका ॥
जयन्ती वा जया वाथ जीरैः पित्तज्वरापहा ।
गुडामलकयूषेण प्रदद्यात् देयं घृतं विना ॥
जयन्ती वा जया वाथ विषमज्वरकृन्तनैः ।
सर्व्वज्वरं मधुयोगैर्वा नूनं शीतकम् ॥
चन्दनस्य कषायेण रक्तपित्तज्वरापहा ।
जयन्ती वा जया वाथ माक्षिकेण च कासजित् ॥
जयन्ती वा जया वाथ गोमूत्रेण युता पिबेत् ।
हन्त्याशु कामलां कुष्ठं सुखेन च तदुद्गतम् ॥
त्रिनिष्कं केतकीमूलं पिष्ट्वा तोयेन पाचयेत् ।
जयन्ती वा जया वाथ मेहं हन्ति सुराक्षयम् ॥
जयन्ती वा जया वाथ मधुना सर्व्वमेहनुत् ।
जयन्ती वा जया वाथ गुडैः कोष्णजलैः पिबेत् ॥
त्रिदोषोत्थं हरेद्गुल्मं रसो वा नन्दभैरवः ।
जयन्ती वा जया वाथ शुण्ठ्या सर्व्वभगन्दरम् ।
जयन्ती वा जया वाथ तक्रेण ग्रहणीप्रणुत् ।
जयन्ती वा जया वाथ भृङ्गीद्रावैर्निशान्धनुत् ॥
जयन्ती वा जया वाथ घृष्टा स्तन्येन चाञ्जनम् ।
आवर्त्तं सर्व्वदोषोत्थं मांसवृद्धिञ्च नाशयेत् ॥"
इति जयाजयन्ती वटी ॥
इति वैद्यकरसेन्द्रसारसंग्रहे ज्वराधिकारे ॥*॥)

जयावहा, स्त्री, ( जयमावहतीति । आ + वह + अच् ।) भद्रदन्तीवृक्षः । इति राजनिर्घण्टः ॥

जयाश्रया, स्त्री, ( जयमाश्रयतीति । आ + श्रि + अच् । ) नरकीलम् । इति राजनिर्घण्टः ॥

जयाक्षा, स्त्री, (जयस्य आशा आख्या आशा यस्याः।) भद्रदन्तीवृक्षः। इति राजनिर्घण्टः॥

जयी, [न्] त्रि, (जेतुं शीलमस्य। जि+"जिदृक्षिविश्रीति।" ३।२।१५७। इति इनिः।) जययुक्तः। विजयी। यथा,—

"जगति जयिनो यस्य विशिखाः।"

इति महिम्नः स्तोत्रम्॥

(यथा, रघौ। ४। ३४।

"पौरस्त्यानेवमाक्रामंस्तांस्तान् जनपदान् जयी। प्राप तालीवनश्याममुपकण्ठं महोदधेः॥")

जय्यः, त्रि, जेतुं शक्यः। ("शकि लिङ् च।" ३।३।१७२। इति शक्तौ यत्। गुणः। "क्षय्यजय्यौ शक्यार्थे।" ६।१।८१। इति यान्तादेशः।) जयकरणयोग्यः। इत्यमरः। ३।१।७४॥ (यथा, शतपथब्राह्मणे। १४। ४।१।२४।

"सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्म्मणा॥")

जरठः, त्रि, (जीर्य्यत्यनेनेति। जॄ वयोहानौ + उणां १।१०२। कृञो बाहुलकात् जॄशमोरप्यठः इत्युज्ज्वलदत्तोक्तेरठः।) कर्कशः। पाण्डुः। कठिनः। इति मेदिनी। ठे, १३॥ (यथा, माघे। ४। २९।

"अयमतिजरठाः प्रकामगुर्व्वी-
रलघुविलम्बिपयोधरोपरुद्धाः॥")

जीर्णः। इति हेमचन्द्रः॥ (वृद्धः। यथा, भागवते। ६। १। २५।

"स बद्धहृदयस्तस्मिन्नर्भके कलभाषिणि।
निरीक्षमाणस्तल्लीलां मुमुदे जरठो भृशम्॥"

परिणतः। यथा, माघे। ११। १४।

"हिमरुचिररुणिम्ना राजते रज्यमानै-
र्जरठकमलकन्दच्छेदगौरैर्मयूखैः॥")

जरायां पुं। इति विश्वः॥

जरडी, स्त्री, (जॄ+बाहुलकात् अड। ततो गौरादित्वात् ङीष्।) तृणविशेषः। तत्पर्य्यायः। गर्म्मोटिका २ सुनाला ३ जया-श्वा ४। अस्या गुणाः। मधुरत्वम्। शीतत्वम्। सारकत्वम्। दाहरक्तदोषनाशित्वम्। रुच्यत्वम्। पशूनां दुग्धदातृत्वञ्च। इति राजनिर्घण्टः॥

जरणं, क्ली, (जरयतीति। जॄष्+णिच्+ल्युः।) हिङ्गु। कृष्णजीरकः। जीर्णे, त्रि। इति शब्दरत्नावली॥ (श्वेतजीरकः। पर्य्याया यथा,—

"अजाजी जरणं दीर्घं मागधी जीरकं सितम्॥"

इति वैद्यकरत्नमालायाम्॥)

जरणः, पुं, (जरयतीति। जॄष्+णिच्+ल्युः।) जीरकः। (यथा,—

"जीरको जरणो जाजी कणा स्याद्दीर्घजीरकः॥"

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥)

कृष्णजीरकः। सौवर्च्चलमलवणम्। इति शब्दरत्नावली॥ कासमर्द्दः। इति राजनिर्घण्टः॥

जरणा, स्त्री, (जरण+टाप्।) कृष्णजीरकः। इति राजनिर्घण्टः॥ (यथा, ऋग्वेदे।१०।३७।६।

"भद्रं जीवन्तो जरणामशीमहि॥")

जरद्द्रुमः, पुं, (जरन् जीर्णः द्रुमः।) अश्म-कर्णवृक्षः। इति राजनिर्घण्टः॥

जरण्डः, त्रि, (जीर्य्यतीति। जॄ+अण्डन्।) जीर्णः। इति संक्षिप्तसारे उणादिवृत्तिः॥

जरत्, त्रि, (जॄ+अतृन्) वृद्धः। इत्यमरः।२।६।४२॥ पुरातनम्। इति हेमचन्द्रः॥

जरत्कारुः, पुं, मुनिविशेषः। तत्पर्य्यायः। यायावरः २। इति त्रिकाण्डशेषः॥ (एतन्निरुक्ति-र्यथा, महाभारते। १। ४०। ३—४।

"जरेति क्षयमाहुर्वै दारुणं कारुसंज्ञितम्।
शरीरं कारु तस्यासीत्तत् स धीमाञ्छनैः शनैः॥
क्षपयामास तीव्रेण तपसेत्यत उच्यते।
जरत्कारुरिति ब्रह्मन्! वासुकेर्भगिनी तथा॥"

एतद्विवरणं यथा, देवीभागवते।२।१२।८-९।

"जरत्कारुर्मुनिः शान्तो न चकार गृहाश्रमम्।
तेन दृष्टा वने गर्त्ते लम्बमानाः स्वपूर्व्वजाः॥
ततस्तमाहुः कुरु पुत्रदारान्
यथा च नः स्यात् परमा हि तृप्तिः।
स्वर्गं प्रजामः खलु दुःखमुक्ता
वयं सदाचारयुते सुते वै॥
स तानुवाचाथ कृते समाना-
मयाचितां चातिवशानुगाञ्च।
तदा गृहारम्भमहं करोमि
ब्रवीमि तथ्यं मम पूर्व्वजा वै॥
इत्युक्ता तान् जरत्कारुर्गतस्तीर्थान् प्रति द्विजः॥"

अथ नागाभिशप्तो वासुकिः ब्रह्मोपदेशात् स्वभगिनीं जरत्कारुमेनमर्पयामास। तद्यथा, तत्रैव। २। १२। ३५—४५।

"वासुकिस्तु तदाकर्ण्य वचनं ब्रह्मणः प्रियम्।
वनं गत्वा सुतां तस्मै ददौ विनयपूर्व्वकम्॥
समनाम्नीं तां मुनिर्ज्ञात्वा जरत्कारुरुवाच तम्।
अप्रियं मे यदा कुर्य्यात्तदा तां सन्त्यजाम्यहम्॥
वाग्बन्धं तादृशं कृत्वा मुनिर्जग्राह तां स्वयम्।
दत्त्वा च वासुकिः कामं भवनं स्वं जगाम ह॥
कृत्वा पर्णकुटीं शुभ्रां जरत्कारुर्महावने।
तया सह सुखं प्राप रममाणः परन्तप!॥
एकदा भोजनं कृत्वा सुप्तोऽसौ मुनिसत्तमः।
भगिनी वासुकेस्तत्र संस्थिता वरवर्णिनी॥
न सम्बोधयितव्योऽहं त्वया कान्ते! कथञ्चन।
इत्युक्त्वा तु गतो निद्रां मुनिस्तां सुदतीं तदा॥
रविरस्तगिरिं प्राप्तः सन्ध्याकाल उपस्थिते।
किं करोमि न मे शान्तिस्त्यक्ष्यत्यबोधितः पुनः॥
धर्म्मलोपभयाद्भीता जरत्कारुरचिन्तयत्।
कोपितः प्रबोधयाम्येनं सन्ध्याकालो वृथा भवेत्॥
धर्म्मनाशाद्वरं त्यागस्तथापि मरणं ध्रुवम्।
धर्म्महानिर्नराणां हि नरकाय भवेत् पुनः॥
इति सञ्चिन्त्य सा बाला तं मुनिं प्रत्यबोधयत्।
सन्ध्याकालोऽपि सञ्जात उत्तिष्ठोत्तिष्ठ सुव्रत!॥
उत्थितोऽसौ मुनिः कोपात्तामुवाच प्रणाश्यहम्।
स्वस्ति भाग्यं याहि निद्राविच्छेदकारिणी॥
वेपमानाऽब्रवीद्बाला निर्भुक्ता मुनिना तदा।
आशा दत्त्वा यदर्थं तत् कथं त्याज्यमितश्रम!॥
मुनिः प्राह जरत्कारुं तदस्तीति निराकुलः॥"

अस्य पुत्रः आस्तीकनामा मुनिप्रवरः। योऽसौ जनमेजयं गत्वा सर्पसत्रात् निवारयामास। जरत्कारुमुनेर्विशेषविवरणन्तु महाभारते आदिपर्व्वणि ४४—४८ अध्यायेषु द्रष्टव्यम्॥)

जरत्कारुः, स्त्री, मनसादेवी। इति त्रिकाण्डशेषः॥ (यथा, देवीभागवते। २। १२। ४७।

"मुनिः प्राह जरत्कारुं तदस्तीति निराकुलः॥")

जरत्कारुप्रिया, स्त्री, (जरत्कारोः स्वनाम-ख्यातस्य मुनेः प्रिया।) मनसादेवी। इति शब्दरत्नावली॥

जरती, स्त्री, (जरत्+"उगितश्च।"४।१।६। इति ङीप्।) वृद्धा। इति राजनिर्घण्टः॥

जरद्गवः, पुं, (जरंश्चासौ गौश्चेति। "गोरतद्धित-लुकि।"५।४।९२। इति टच्।) जीर्ण-वृषः। तत्पर्य्यायः। वृद्धोक्षः २। इत्यमरः। २।९।६१॥ (यथा, पञ्चतन्त्रे। ४। ८४।

"अस्त्यत्र यौवनं या श्रीः किं तथापि सुभोग्यया।
जरद्गवः समश्नाति दैवादुपगतं तृणम्॥"

जरन् क्षीयमाणो गौर्वृषरूपो धर्म्मः। धर्म्मरूप-जीर्णवृषः। यथा, महाभारते। १३।९३।६८।

"नैतस्येह यथास्माकं शुनःसख्यं जरद्गवः।
व्यालसः क्षुत्परो म्लानः क्लेशेन पीवाकृतो नह॥")

गृध्रपक्षिविशेषः। यथा,—

"अज्ञातकुलशीलस्य वासो देयो न कस्यचित्।
मार्ज्जारस्य हि दोषेण हतो गृध्रो जरद्गवः॥"

इति हितोपदेशे मित्रलाभपरिच्छेदः॥

जरन्, पुं, (जरतीति। जॄ+शतृ।) वृद्धः। इति राजनिर्घण्टः॥

("बालमात्रे जरत् पित्तं शूलमाशु व्यपोहति॥"

इति माधवकृतरुग्विनिश्चये शूलाधिकारे॥)

जरन्तः, पुं, (जीर्य्यतीति। जॄ+"जॄविशिभ्यां झच्।"उणां।३।१२६। इति झच्।) महिषः। वृद्धः। इति त्रिकाण्डशेषः॥

जरसानः, पुं, (जीर्य्यति जराग्रस्तो भवतीति। जॄ वयोहानौ+"ऋञ्जिवृधिमन्दिसहिभ्यः कित्।" इति असानच्। गुणः।) मनुष्यः। इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

जरा, स्त्री, (जीर्य्यत्यनया। जॄ+"षिद्भिदादि-भ्योऽङ्।" ३।३।१०४। इत्यङ्। "ऋदृशोऽङि गुणः।" ७।४।१६। इति गुणः।) वयःकृतशरीरशैथिल्यावस्थाभेदः। वार्द्धक्यम्।

"जीर्य्यत्यनया जरा जॄ ष वयोहानौ षित्वात् ङः ऋदृशोऽङीति गुणः।" इत्यमरटीकायां भरतः॥

तत्पर्य्यायः। विस्रसा २। इत्यमरः।२।६।४१॥ सा तु कालकन्या। यथा,—

"कालकन्या जरा साक्षात् लोकस्तां नाभिनन्दति।
स्वसारं जगृहे मृत्युः क्षयाय यवनेश्वरः॥"

इति श्रीभागवतम्।

एषां भेदप्रभेदेन चतुःषष्टिरुजः स्मृताः ।
मृत्युकन्यासुताश्चैव जरा तस्याश्च कन्यका ।
जरा च भ्रातृभिः सार्द्धं शश्वद्भ्रमति भूतलम् ॥
एते चोपायवेत्तारं न गच्छन्ति च संयतम् ।
पलायन्ते च तं दृष्ट्वा वैनतेयमिवोरगाः ॥
चक्षुर्जलञ्च व्यायामः पादाधस्तैलसेवनम् ।
कर्णयोर्मूर्द्ध्नि तैलञ्च जराव्याधिविनाशकम् ॥
वसन्ते भ्रमणं वह्निसेवां स्वल्पां करोति यः ।
बालाञ्च सेवते काले जरा तं नोपगच्छति ॥
स्नातशीतोदकस्नायी सेवते चन्दनद्रवम् ।
नोपयाति जरा तञ्च निदाघेऽनिलसेविनम् ॥
प्रावृष्युष्णोदकस्नायी घनतोयं न सेवते ।
समये च समाहारी जरा तं नोपगच्छति ॥
शरद्रौद्रं न गृह्णाति भ्रमणञ्च वर्ज्जयेत् ।
स्नातस्नायी समाहारी जरा तं नोपतिष्ठति ॥
स्नातस्नायी च हेमन्ते काले वह्निं निषेवते ।
भुङ्क्ते नवान्नमुष्णञ्च जरा तं नोपगच्छति ॥
शिशिरेऽशुकवह्निञ्च नवोष्णान्नञ्च सेवते ।
य उष्णोदकस्नायी जरा तं नोपगच्छति ॥
सद्योमांसं नवान्नञ्च बाला स्त्री क्षीरभोजनम् ।
घृतञ्च सेवते यो हि जरा तं नोपगच्छति ॥
भुङ्क्ते सदन्नं क्षुत्काले तृष्णायां पीयते जलम् ।
नित्यं भुङ्क्ते च ताम्बूलं जरा तं नोपगच्छति ॥
दधि हैयङ्गवीनञ्च नवनीतं तथा गुडम् ।
नित्यं भुङ्क्ते संयमी यो जरा तं नैव गच्छति ॥
शुष्कमांसं स्त्रियं वृद्धां बालार्कं तरुणं दधि ।
संसेवन्ते जरा याति प्रहृष्टा भ्रातृभिः सह ॥
रात्रौ ये दधि सेवन्ते पुंश्चलीञ्च रजस्वलाम् ।
तानुपैति जरा हृष्टा भ्रातृभिः सह सुन्दरि ! ॥
रजस्वला च कुलटा चावीरा जारदूतिका ।
शूद्रयाजकपत्नी या ऋतुहीना च या सति ! ॥
यो हि तासामन्नभोजी ब्रह्महत्यां लभेत् सः ।
तेन पापेन सार्द्धं सा जरा तमुपगच्छति ॥
पापानां व्याधिभिः सार्द्धं मित्रता सन्ततं ध्रुवम् ।
पापं व्याधिजराबीजं विघ्नबीजञ्च निश्चितम् ॥
पापेन जायते व्याधिः पापेन जायते जरा ।
पापेन जायते दैन्यं दुःखं शोको भयङ्करः ॥
तस्मात् पापं महावैरं दोषबीजममङ्गलम् ।
भारते सन्ततं सन्तो नाचरन्ति भयातुराः ॥
स्वधर्म्माचारयुक्तञ्च दीक्षितं हरिसेवकम् ।
गुरुदेवातिथीनाञ्च भक्तं सक्तं तपःसु च ॥
व्रतोपवासयुक्तञ्च सदा तीर्थनिषेवकम् ।
रोगा द्रवन्ति तं दृष्ट्वा वैनतेयमिवोरगाः ॥
एतान् जरा न सेवेत व्याधिसंघश्च दुर्ज्जयः ।
सर्व्वं शोभनमसमये काले सर्व्वं भविष्यति ॥"
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे । १ । १६ । ३३—५५ ॥
जराया औषधं यथा, गारुडे १८६ अध्याये ।
"पलाशचूर्णं समधु गव्याज्यामलकान्वितम् ।
सविडङ्गं पीतमाषं नरं कुर्य्याज्जरामितम् ॥
मासैकेन महादेव ! जरामरणवर्ज्जितः ।
पलाशबीजं सहतं तिलमध्वन्वितं समम् ।
समाक्षं भक्षितं रुद्र ! जरां नयति संक्षयम् ॥"
अपिच ।
"अश्वीकृतं भृङ्गराजस्य चूर्णं
तिलार्द्धकं चामलकार्द्धकञ्च ।
सशर्करं भक्षयते गुडैर्व्वा
न तस्य रोगो न जरा न मृत्युः ॥
अन्धः पश्येद्गमनरहितो मत्तमातङ्गगामी
मूको वाग्मी श्रवणरहितो दूरशब्दानुसारी ।
नीरुग्भग्नो भवति पलितो नीलनीलालकेशो
जीर्णा दन्ताः पुनरपि नवाः क्षीरगौरा भवन्ति ॥"
इति भैषज्यरत्नावल्यां भृङ्गराजादिचूर्णम् ॥
("क्लैब्यं जरासम्भवं हि प्रवक्ष्याम्यथ तत् शृणु ॥
जघन्यमध्यप्रवरं वयस्त्रिविधमुच्यते ।
अथ प्रवयसां शुक्रं प्रायशः क्षीयते नृणाम् ॥
रसादीनां संक्षयाच्च तथैवावृष्यसेवनात् ।
बलवीर्य्येन्द्रियाणाञ्च क्रमेणैव परिक्षयात् ॥
परिक्षयादायुषश्चाप्यनाहारात् श्रमात् क्लमात् ।
जरासम्भवं क्लैब्यं इत्येतैर्हेतुभिर्नृणाम् ॥
जायते तेन सोऽत्यर्थं क्षीणधातुः सुदुर्ब्बलः ।
विवर्णो विह्वलो दीनः क्षिप्रं व्याधिमथाश्नुते ॥
एतज्जरा सम्भवं हि ॥"
"जरासम्भवजे क्लैब्ये क्षयजे चैव कारयेत् ।
स्नेहस्वेदोपपन्नस्य सस्नेहं शोधनं हितम् ॥
क्षीरसर्पिर्वृष्ययोगा वस्तयश्चैव यापनाः ।
रसायनप्रयोगाश्च तयोर्भेषजमुच्यते ॥"
इति चरके चिकित्सास्थाने त्रिंशोऽध्याये ॥*॥
"या च भार्य्या विरूपाक्षी कश्मला कलहप्रिया ।
वचनोत्तरवक्त्री च सा जरा न जरा जरा ॥"
इति चाणक्यम् ॥*॥)
चौरिकाख्यः । इति शब्दचन्द्रिका ॥ राक्षसीविशेषः । यथा, श्रीभागवते ।
"अन्यस्यामपि भार्य्यायां शकले द्वे बृहद्रथात् ।
ते मात्रा बहिरुत्सृष्टे जरया चाभिसन्धिते ॥"

जरातुरः, त्रि, ( जरया आतुरः । ) जीर्णः । जरारोगग्रस्तः । इति शब्दमाला ॥ ( यथा, नैषधे । १ । १३५ ।
"मदेकपुत्त्रा जननी जरातुरा
नवप्रसूतिर्व्वरटा तपस्विनी ।
गतिस्तयोरेष जनस्तमर्दय-
न्नहो विधे ! त्वां करुणा रुणद्धि न ॥")

जरापुत्त्रः, पुं, ( जरया राक्षस्या पुत्त्रः । ) जरासन्धः । इति शब्दरत्नावली ॥

जराभीरुः, पुं, ( जरातो भीरुः । ) कामदेवः । इति हेमचन्द्रः । २।१४१ ॥ जराभयशीले, त्रि ॥

जरायणिः, पुं, (जराया राक्षस्या अपत्यम् । जरा + बाहुलकात् फिः । तत्प्राणजीवत्वात् तथात्वम् ।) जरासन्धः । इति शब्दरत्नावली ॥

जरायुः, पुं, (जरामेतीति । जरा + इण् + "किञ्जरयोः श्रिणः ।" उणां १ । ४ । इति ञुण् । ) येन वेष्टितो गर्भः कुक्षौ तिष्ठति सः । गर्भवेष्टनचर्म्म । आँवोल इति भाषा । तत्पर्य्यायः । गर्भाशयः २ उल्वम् ३ कललः ४ । इत्यमरः । २ । ६ । ३८ ॥
"या तु चर्म्माकृतिः सूक्ष्मा जरायुः सा निगद्यते ॥"
इति महाभागवते भगवतीगीता ॥
अग्निजारवृक्षः । इति राजनिर्घण्टः ॥

जरायुजः, त्रि, ( जरायौ जायते इति । जन + डः । ) गर्भाशयजातः । स तु मनुष्यादिः । इत्यमरः । ३ । १ । ५० ॥
"या तु चर्म्माकृतिः सूक्ष्मा जरायुः सा निगद्यते ।
शुक्रशोणितयोर्मिश्रसाक्षिन् संजायते यतः ।
तत्र गर्भो भवेद्यस्मात्तेन प्रोक्तो जरायुजः ॥"
इति महाभागवते भगवतीगीता ॥

जरासन्धः, पुं, ( जरया तदाख्यया प्रसिद्धया राक्षस्या कृता सन्धा देहसंयोजनमस्य । ) चन्द्रवंशीयराजविशेषः । स तु बृहद्रथराजपुत्त्रः । कंसश्वशुरः द्वन्द्वयुद्धे भीमस्तं हतवान् । अस्य नामकरणं यथा,—
"अन्यस्यामपि भार्य्यायां शकले द्वे बृहद्रथात् ।
ते मात्रा बहिरुत्सृष्टे जरया चाभिसन्धिते ॥
जीव जीवेति क्रीडन्त्या जरासन्धोऽभवत् सुतः ॥"
इति श्रीभागवतम् ॥
तत्पर्य्यायः । बार्हद्रथिः २ । इति त्रिकाण्डशेषः ॥
(अस्य जन्मविवरणं महाभारते सभापर्व्वणि १७ अध्याये तथा मृत्युविवरणं तत्रैव २४ अध्याये द्रष्टव्यम् ॥ अयं हि विप्रचित्तिनामकदानवस्यावतारः । यथा, महाभारते । १।६७।४ ।
"विप्रचित्तिरिति ख्यातो य आसीद्दानवर्षभः ।
जरासन्ध इति ख्यातः स आसीत् मनुजर्षभः ॥"
धृतराष्ट्रपुत्त्राणामन्यतमः । यथा, महाभारते । १ । ११७ । ८ ।
"दृढसन्धो जरासन्धः सत्यसन्धः सदःसुवाक् ॥")

जरासन्धजित्, पुं, ( जयतीति । जि + क्विप् । ततो जरासन्धस्य जित् जेता । ) भीमः । इति त्रिकाण्डशेषः ॥

जरी, [न्] त्रि, ( जराऽस्यास्तीति । जरा + इनिः । ) वृद्धः । इति हेमचन्द्रः । ३ । ४ ॥

जरूथं, क्ली, ( जीर्य्यतीति । जॄ + "जॄवृञ्भ्यामूथन् ।" उणां । २ । ६ । इति ऊथन् । ) मांसम् । इति त्रिकाण्डशेषः ॥

जर्च्च, श उक्तौ । भर्त्से । इति कविकल्पद्रुमः ॥ ( तुदां-परं-सकं-सेट् ।) श, जर्च्चती जर्च्चन्ती । गुणस्थानरहितानां तुदादिपाठसामर्थ्यात् शत्रन्तानां आदीपोरिति नुमो विभाषा वेदमूकारय-भेदश्च । भर्त्सनम् । इति दुर्गादासः ॥

जर्झ, श उक्तौ । भर्त्से । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट् ।) श, जर्झती जर्झन्ती । भर्त्सनम् । इति दुर्गादासः ॥

जर्ज, श वाचि । भर्त्से । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट् ।) श, जर्जती जर्जन्ती । भर्त्सनम् । इति दुर्गादासः ॥

जर्ज्जरः, पुं, ( जर्ज्जति शत्रुरनेनापरान् निन्दतीति । जर्ज्ज + बाहुलकात् अरः ।) शैलजः । (जर्ज्जति शत्रून् तर्ज्जयतीति ।) शक्रध्वजः । (जर्ज्जते निन्द्यते इति । कर्म्मणि बहुवचनादरः ।)

डुण्डुः, पुं, (डुमिति शब्दं कृत्वा चलति गच्छतीति। डी + डुः।) डुण्डुभसर्पः। इति त्रिकाण्डशेषः॥

डुण्डुभः, पुं, (डुण्डुः सन् भातीति। डुण्डु इत्यनुकरणशब्देन भाति वा। भा + कः।) सर्पविशेषः। ढोंड़ा इति भाषा। तत्पर्यायः। राजिलः २ इत्यमरः।१।८।५॥ डुण्डुभः ३। इति भरतः॥ अलगर्द्दः ४ डुण्डुः ५। इति त्रिकाण्डशेषः॥ (यथा, देवीभागवते।२।११।२८।
"एकदा स वने घोरं डुण्डुभं जरठाभिधम्।
अपश्यद्दक्षतुण्डस्य कन्तुं तं समुपाद्रवत्॥")

डुण्डुलः, पुं, (डुण्डुरिति शब्दं लातीति। ला + कः।) क्षुद्रपेचकः। तत्पर्यायः। क्षुद्रोलूकः २ धाङ्क्षेयः ३ पिङ्गलः ४ दिवान्धकी ५ इड-मायी ६ विघ्नाणायः ७ मधुकुरः ८। इति राजनिर्घण्टः॥

डुलिः, स्त्री, (दुलि + पृषोदरादित्वात् साधुः।) दुलिः। कमठी। इत्यमरटीकायां रायमुकुटः॥

डुलिका, स्त्री, (डुलिरिव कायतीति। कै + कः। ततष्टाप्।) खञ्जनाकारपक्षिविशेषः। इति जटाधरः॥

डुली, स्त्री, (डुलिः + ङीष् वा।) चिल्लीशाकः। इति राजनिर्घण्टः॥

डोडी, स्त्री, क्षुपविशेषः। तत्पर्यायः। जीवन्ती २ शाकश्रेष्ठा ३ सुखालुका ४ मधुमती ५ दीर्घपत्रा ६ कृष्णपत्रा ७ जीवनी ८। अस्या गुणाः। कटुत्वम्। तिक्तत्वम्। उष्णत्वम्। दीपनत्वम्। कफवातकृमिमयरक्तपित्तार्तिदाहनाशित्वम्। रुच्यत्वञ्च। इति राजनिर्घण्टः॥

डोमः, पुं, स्वनामख्यातान्त्यजजातिः। यथा,—
"चाण्डालश्चैव डोमश्च व्याधकश्च तथा रतिः।
रजकश्चैव भल्लीरो भूयुक्तश्च तथाश्मभी॥
तथा शुण्डी लिङ्गधारी यमा यति ब्रह्मचारिणि!।
स्पृष्ट्वा प्रमादतः स्नात्वा गायत्र्यष्टशतं जपेत्॥"
इति मत्स्यसूक्तमहातन्त्रे ३९ पटलः॥

डोरं, क्ली, हस्तादिबन्धनसूत्रम्। यथा,—
"डोऽनन्त इत्युदीर्याथ कृत्वा तत्करपल्लवम्।
हस्तादादाय तड्डोरं निबध्नात् पावकोपरि॥"
इति भविष्यपुराणे अनन्तव्रतकथा॥

डोरकं, क्ली, (डोर + स्वार्थे कन्।) डोरम्। यथा,
"चतुर्द्दशग्रन्थियुक्तं कुङ्कुमाक्तं सुडोरकम्।
स्त्रियश्च पुरुषश्चैव बध्नीयात् वामदक्षिणे॥"
इति भविष्यपुराणे अनन्तव्रतकथा॥

डोरकी, स्त्री, (डोरमिव जयति इति। जी + क्विप्।) इक्कली। इति राजनिर्घण्टः॥

---

## ढ

ढ, ढकारः। स व्यञ्जनचतुर्द्दशवर्णः। टवर्गचतुर्थवर्णश्च। (अर्द्धमात्राकालेनोच्चारणीयः।) अस्योच्चारणस्थानं मूर्द्धा। इति व्याकरणम्॥ (पाणिनीयशिक्षायाम् अस्योच्चारणे जिह्वामध्यभागेन मूर्द्धः स्पर्शः आभ्यन्तरप्रयत्नः। संवारनादघोषा महाप्राणश्च बाह्यप्रयत्नाः। मातृकान्यासेऽस्य दक्षपादाङ्गुल्यग्रे न्यासक्रिया। वर्णोपदेशाभिधायाम्।) तस्य लेखनप्रकारो यथा,—
"कुण्डलीसमतो रेखा वामदक्षिणतो गता।
ततः सा कुञ्चनीरूपा विष्णुब्रह्मस्वरूपिणी॥
महाशक्तिमयी मात्रा ज्ञानमत्र प्रवर्त्तते।
रक्तोत्पलनिभां रम्यां रक्तपङ्कजलोचनाम्॥
अष्टादशभुजां भीमां महामोक्षप्रदायिनीम्।
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्॥"
इति वर्णोद्धारतन्त्रम्॥ * ॥

अस्य स्वरूपं यथा, कामधेनुतन्त्रे।
"ढकारं परमाराध्यं या स्वयं कुण्डली परा।
पञ्चदेवात्मकं वर्णं पञ्चप्राणमयं सदा॥
सदा त्रिगुणसंयुक्तं आत्मादितत्त्वसंयुतम्।
रक्तविद्युल्लताकारं ढकारं प्रणमाम्यहम्॥"

तस्य २६ षड्विंशतिनामानि यथा,—
"ढो ढक्का निर्गुणः पूर्णो यक्षेशो धनदेश्वरः।
अर्द्धनारीश्वरः क्षोणी धनेश्वरी त्रिशिखी नवः॥
दक्षपादाङ्गुलेर्मूलं सिद्धिदा विनायकः।
प्रज्ञाधा त्रिनेत्रा वह्निनिर्गुणो निधनो ध्वनिः॥
विघ्नेशः पालिनी लक्ष्मधारिणी क्रोडपुच्छकः।
एलापुरं नयात्मा च विप्राख्या श्रीमनोरतिः॥"
इति नानातन्त्रशास्त्रम्॥

ढः, पुं, (ढौकते उच्चैःशब्देन आह्वयति अवधेश्रियमिति। ढौक गत्यावरणयोः + डः।) ढक्का। (यथा, तन्त्रे।
"ढो ढक्का निर्गुणः पूर्णो यक्षेशो धनदेश्वरः॥")
श्वा। श्वलाङ्गूलम्। इति मेदिनी। ढे, १॥ निर्गुणः। ध्वनिः। इत्येकाक्षरकोषः॥

ढक्कः, पुं, देशविशेषः। इति भूरिप्रयोगः॥ ढाका इति भाषा॥

ढक्का, स्त्री, (ढक् इति गभीरशब्देन कायतीति। कै + कः टाप् च।) वाद्यविशेषः। ढाक इति भाषा। तत्पर्यायः। यशःपटहः २। इत्यमरः।१।७।६॥ विजयमर्द्दलः ३। इति शब्दरत्नावली॥ (यथा, आर्य्यासप्तशत्याम्।२४७।
"ढक्कामाहत्य मदं विलम्बते करिण इव निरं
पुरुषाः॥")

ढक्कारी, स्त्री, (ढक्कां जयढक्कावत् गभीरसिंहनादं गच्छति समराङ्गणे इति। ऋ + अण् ङीप् च।) तारिणी। यथा,—
"ढक्कारवा च ढक्कारी ढक्कारवरवा ढका॥"
इति कुलसद्भावे तारासहस्रनामस्तोत्रम्॥

ढट्टी, स्त्री, वाद्यविशेषः। यथा, रुद्रयामले अन्नपूर्णासहस्रनाम कथने।
"ढट्टीवाद्यस्वरूपा च ढकारादिस्वरूपिणी॥"

ढालं, क्ली, (ढौकते आच्छादयति शरीरं अनेन। ढौक + अच्। पृषोदरात् आत्वे लत्वे च साधुः।) फलकम्। ढालिपत्रजयकरीति अन्नदाकल्पीयसहस्रनामविवरणात्॥

ढाली [न्] त्रि, (ढालमस्त्यस्येति। इनिः।) ढालविशिष्टः। चर्म्मी। यथा,—
"ढालिपत्रजयकरी ढकारवर्णरूपिणी॥"
इति रुद्रयामले अन्नपूर्णासहस्रनामस्तोत्रम्॥

ढामरा, स्त्री, हंसी। इति धनञ्जयः॥

ढुण्ढ, अन्वेषणे। इति कविकल्पद्रुमः॥ (भ्वा-परं-सकं-सेट्।) ढकारान्तो दन्त्यनोपधः। ढवीरान्मूर्द्धन्यः। तेन धात्वादौ नत्वेऽपि ढुण्ढन इत्यादि। ढुण्ढति धनं लोकः। इति दुर्गादासः॥

ढुण्ढिः, पुं, (ढुण्ढ्यतेऽसौ भक्तैरिति। ढुण्ढ अन्वेषणे + इन्।) गणेशः। तन्नामकरणं यथा,—
काशीं प्रति शिववाक्यम्।
"अन्वेषणे ढुण्ढिरयं प्रथितोऽस्ति धातुः
सर्वार्थढुण्ढिततया तव ढुण्ढिनामा।
काशीप्रवेशमपि को लभतेऽत्र देही
तोषं विना तव विनायक! ढुण्ढिराज!॥"

तन्माहात्म्यं यथा,—
"ढुण्ढे! प्रणम्य पुरतस्तव पादपद्मं
यो मां नमस्यति पुमानिह काशिवासी।
तत्कर्णमूलमधिगम्य पुरादिशामि
तत्किञ्चिदत्र न पुनर्भवताऽस्ति येन॥"
"यः प्रत्यहं नमति ढुण्ढिविनायक! त्वां
काश्यां प्रगे प्रतिहताखिलविघ्नसङ्घः।
नो तस्य जातु जगतीतलवर्त्ति वस्तु
दुष्प्राप्यमत्र परत्र च किञ्च नापि॥"
"प्रथमं ढुण्ढिराजोऽसि मम दक्षिणतो मनाक्।
आढुण्ढ्य सर्वभक्तेभ्यः सर्वार्थान् संप्रयच्छसि॥"

तस्य यात्राविधानं यथा,—
"माघशुक्लचतुर्थ्यान्तु नक्तव्रतपरायणाः।
ये त्वां ढुण्ढेऽर्च्चयिष्यन्ति तेऽर्च्याः सुरसुरद्विषाम्॥
विधाय वार्षिकीं यात्रां चतुर्थीं प्राप्य तापसीम्।
शुक्लां शुक्लतिलैर्लड्डून् प्राश्नीयात्तिलड्डुकान् व्रती॥
काश्यां यात्रा प्रयत्नेन क्षेमसिद्धिमभीप्सुभिः।
तस्यां चतुर्थ्यां त्वत्प्रीत्यै ढुण्ढे! सर्व्वोपचारतः॥
तां यात्रां नाथ यः कुर्य्यान्निवेद्य तिललड्डुकान्।
उपसर्गसहस्रैस्तु स हन्यते! ममाज्ञया॥
होमं तिलाज्यद्रव्येण यः करिष्यति भक्तितः।
तस्यां चतुर्थ्यां मन्त्रस्तस्य मन्त्रः फलिष्यति॥"
इति काशीखण्डे। ५० अध्याये॥

ढोलः, पुं, (ढः ढक्का तदाकारं लातीति। ला + कः। पृषोदरात् ओत्वे साधुः। ढुल उत्क्षेपे अच्। पृषोदरात् साधु र्वा।) स्वनामख्यातवाद्यम्। यथा,—
"ढक्काढोलप्रिया नित्या ढोलवाद्यप्रमोदिनी।
ढोलरूपा ढोलधरा ढोलशब्दस्वरूपिणी॥"
इति रुद्रयामले अन्नपूर्णासहस्रनामस्तोत्रम्॥

ढौक, ऋ ङ गत्याम्। इति कविकल्पद्रुमः॥ (भ्वा-आत्मं-सकं-सेट्।) चतुर्द्दशस्वरी। ऋ, अडुढौकत्। ङ, ढौकते। इति दुर्गादासः॥ ("आदृतौ" वदनं ढौकते। इति कालिदासः॥)

---

## ण

ण, णकारः । स पञ्चदशव्यञ्जनवर्णः । टवर्ग-पञ्चमवर्णश्च ॥ (अस्योच्चारणस्थानं मूर्द्धा ।) अस्योच्चारणस्थानं मूर्द्धा । इति व्याकरणम् ॥ ( शिक्षाव्याख्यातृमते तु अस्योच्चारणे जिह्वामध्येन मूर्द्धः स्पर्शः नासिकायाश्च प्रयत्नाभ्यन्तरप्रयत्नः । संवारनादघोषाः अल्पप्राणश्च बाह्यप्रयत्नाः । मातृकान्यासेऽस्य दक्षपादाङ्गुल्यग्रे न्यासक्रिया ॥ षड्विंशवर्णमालायाम् । ) तस्य लेखनप्रकारो यथा,—

"कुण्डलीत्रयमता रेखा मध्यतस्तत उद्गता ।
वामादधोगता सैव पुनरूर्द्ध्वं गता प्रिये ! ॥
ब्रह्मेशविष्णुरूपा सा चतुर्वर्गफलप्रदा ॥
ध्यानमस्य णकारस्य प्रवक्ष्यामि च तत् शृणु ।
त्रिभुजां वरदां रम्यां भक्ताभीष्टप्रदायिनीम् ॥
रक्तवर्णजोपमां नित्यां धर्मकामार्थमोक्षदाम् ।
एवं ध्यात्वा णकाररूपां तन्मन्त्रं दशधा जपेत् ॥"

इति वर्णोद्धारतन्त्रम् ॥ * ॥

अस्य स्वरूपं यथा,—

"णकारं परमेशानि ! या स्वयं परकुण्डली ।
पीतविद्युल्लताकारं पञ्चदेवमयं सदा ॥
पञ्चप्राणमयं देवि ! सदा त्रिगुणसंयुतम् ।
आत्मादितत्त्वसंयुक्तं महामोक्षप्रदायकम् ॥"

इति कामधेनुतन्त्रम् ॥

तस्य २४ चतुर्विंशतिनामानि यथा,—

"णो निर्गुणं रतिर्ज्ञानं जम्भनः पक्षिवाहनः ।
जया शम्भुर्नरकजित् निष्कला योगिनीप्रियः ॥
द्विमुखं कोटवी श्रोत्रं समृद्धिर्बोधनी मता ।
त्रिनेत्रो मानुषी व्योमदक्षपादाङ्गुलेर्मुखः ॥
माधवः शङ्खिनी वीरो नारायणश्च निर्णयः ॥"

इति नानातन्त्रशास्त्रम् ॥

णः, पुं, ( णखति गच्छति ज्ञानाज्ञनेन इति । णख गतौ + डः । पृषोदरादित्वात् साधुः ।) ज्ञानम् । निश्चयः । इत्येकाक्षरकोषः । बिन्दुदेवः । स बुद्धदेवताविशेषः । भूषणम् । गुणवर्जितः । पानीयनिलयः । इति मेदिनी । णे, २ ॥

णख, गत्ये । इति कविकल्पद्रुमः ॥ (भ्वा-परं-सकं-सेट् ।) णखति । गत्यो गतिः । इति दुर्गादासः ॥

णक्ष, गतौ । इति कविकल्पद्रुमः ॥ (भ्वा-परं-सकं-सेट् ।) प्रणक्षति । इति दुर्गादासः ॥

णट, नृत्यहिंसयोः । इति कविकल्पद्रुमः ॥ (भ्वा-परं-अकं-सकं च-सेट् ।) प्रणटति । वोपदेव-विधौ वर्ज्जनेऽपि अस्य परस्य पैव पाठः केषाञ्चिद्गुरोधात् । अत्र नृत्यं साभिनयनर्त्तनम् । इति दुर्गादासः ॥

णट, अ नृत्तौ । इति कविकल्पद्रुमः ॥ ( भ्वा-परं-अकं-सेट् । ) अ, प्रणटयति । नृत्ताविति नृत्यति-दौवादिकक्तिप्रत्यये रूपम् । अत्र जिकारानु-बन्धेनैतन्निर्दिष्टे पूर्व्वं नृत्यत्यर्थभेदार्थम् । तेन पूर्व्वं नृत्यं साभिनयनर्त्तनम् इह तु नृत्तिरभिनयरहितनर्त्तनमिति । यथा पूर्व्वस्य । पातकिकटकभ्रुविर्नाट्यमस्य श्रेष्ठः । इति माघः । अस्य तु । नाटेन शिव नटविस्मति पीर्व-मायुरिति मुरारिः । इति दुर्गादासः ॥

णद, निष्टौ । इति कविकल्पद्रुमः ॥ (भ्वा-परं-अकं-सेट् ।) निष्टोत्तिरव्यक्तशब्दः । नदति वक्ता । इति दुर्गादासः ॥

णद, क भाषि । इति कविकल्पद्रुमः ॥ ( चुरा-परं-सकं-सेट् । ) क, नादयति । इति दुर्गादासः ॥

णभ, ङ ङ हिंसे । इति कविकल्पद्रुमः ॥ ( भ्वा-आत्मं-सकं-सेट् । ) ङ, अनभत् । ङ, नभते । इति दुर्गादासः ॥

णभ, य ग हिंसे । इति कविकल्पद्रुमः ॥ ( दिवा-क्र्या-च-परं-सकं-सेट् । ) य, नभ्यति । ग नभ्नाति । इति दुर्गादासः ॥

णम, औ शब्दे । नतौ । इति कविकल्पद्रुमः ॥ (भ्वा-परं-अकं-नतौ सकं अकं च अनिट् । ) औ, नन्ता । शब्दार्थो न भाषायाम् । नतिरिह नमस्कारो नम्रीभावश्च । नमति गुरुं लोकः । नमन्ति फलिनो द्रुमाः । अमर्न्तोऽप्यस्य ज्वल-ज्वलतोत्यादिना केवलस्य कृष्णविकल्पनात् सोपसर्गस्यैव नित्यं कृष्णः । नमयति नामयति प्रणमयति । चतुष्कमवनामितं बधिरकर्णचाप: कुतः । इत्यादौ अवनमनं अवनामः सम् ततो अवनामं करोतीति णौ रूपम् । इति दुर्गादासः ॥

णय, ङ गत्यौ । रक्षे । इति कविकल्पद्रुमः ॥ (दिवा-आत्मं-सकं-सेट् । ) ङ, नयते । इति दुर्गादासः ॥

णर्द, शब्दे । इति कविकल्पद्रुमः ॥ (भ्वा-परं-अकं-सेट् ।) वोपदेवविधावस्य वर्ज्जनेऽपि इह पाठः केषाञ्चिदनुरोधात् । प्रणर्दति । इति दुर्गादासः ॥

णल, ज बन्धे । इति कविकल्पद्रुमः ॥ (भ्वा परं सकं सेट् । ) ज, नालः नलः । नलति केशं लोकः बध्नाति इत्यर्थः । गन्धे इति केचित् । गन्धोऽत्रार्थगमिति गोविन्दभट्टः । इति दुर्गादासः ॥

णश, ज य ऋ नाशे । इति कविकल्पद्रुमः ॥ (दिवा-परं-अक सेट्-स्वरादिवान् । ) नाशो दर्शनाभावः । इति प्राञ्चः । शुद्धायनमिति सर्व्वज्ञः । ज, अनेशत् अनशत् । य, नश्यति शत्रुस्त्रिरोभवति इत्यर्थः । ऋ, नशिष्यति नङ्क्ष्यति । इति दुर्गादासः ॥

णस, ङ कृतौ । इति कविकल्पद्रुमः ॥ (भ्वा-आत्मं अकं-सकं च-सेट् । ) कृतिरिह कुटिली-भावस्तत्करणञ्च । ङ, नसते खलः कुटिलः स्यादित्यर्थः । नसते लतां वायुः कुटिलीकरोतीत्यर्थः । इति दुर्गादासः ॥

णह, य ञ औ बन्धे । इति कविकल्पद्रुमः ॥ ( दिवा-उभं-सकं-अनिट् । ) य ञ, नह्यति नह्यते । औ, अनद्ध । इति दुर्गादासः ॥

णाथ, ऋ ङ आशिषि । ऐश्वर्ये । इति कवि-कल्पद्रुमः ॥ ( भ्वा-आत्मं-सकं-अकं च-सेट् । ) वोपदेवविधौ वर्ज्जनेऽप्यस्य पाठः केषाञ्चिदनुरोधात् । ऋ, अननाथत् । ङ, प्रणाथते । इष उपतापः । आशीरिहाशंसाप्रार्थनम् । द्विकर्म्मोऽपि प्रथमार्थविवक्षायां इति विक्रमादि-त्यादिभिः पठितोऽन्यत्र परस्मैपदम् । नाथति शत्रुं वली उपतापयति इत्यर्थः । नाथते श्रियं लोकः आशंसत इत्यर्थः । नाथति वशी ईश्वरः स्यादित्यर्थः । नाथति भूपं भूमिं विप्रः प्रार्थयतीत्यर्थः । मार्गेश्वरेच सर्व प्रयोजनं नाथते विप्र न भूपतः पतिमिति भारवौ । याचनमप्यार्थमाशिषिष्विति । आशिषि नित्यमात्मने-पदमन्यत्र विभाषेति केचित् । इति दुर्गादासः ॥

णाध, ऋ ङ नाथे । इति कविकल्पद्रुमः ॥ ( भ्वा-आत्मं-सकं-सेट् ।) वोपदेवविधावस्य वर्ज्जनेऽपि इह पाठः कस्यचिदनुरोधात् । ऋ, अननाधत् । ङ, नाधते नाथो इत्याशीरैश्वर्यार्थ-नानि । इति दुर्गादासः ॥

णास, ऋ ङ ध्वाने । शब्द इति यावत् । इति कवि-कल्पद्रुमः ॥ ( भ्वा-आत्मं-अकं-सेट् । ) ऋ, अननासत् । ङ, नासते । इति दुर्गादासः ॥

णिक्ष, चुम्बने । इति कविकल्पद्रुमः ॥ (भ्वा-परं-सकं-सेट् । ) निक्षति । इति दुर्गादासः ॥

णिज, इ ल ङ शुद्धौ । इति कविकल्पद्रुमः ॥ (अदा-आत्मं-सकं सेट्-इदित् ।) शुद्धिरिह शुद्धीकरणम्, ङ, कर्म्मणि निञ्जते । ल ङ, प्रणिङ्क्ते । इत्विषी, यानां विप्राणां सम्बद्धः इति हलायुधः । इति दुर्गादासः ॥

णिज, लि इर् ञ औ पोषे । शुद्धौ । इति कवि-कल्पद्रुमः ॥ ( ह्वा-उभं-सकं-अनिट् ।) लि ञ, नेनेक्ति नेनिक्ते । इर्, अनिजत् अनैक्षीत् । औ, नेक्ता । इति दुर्गादासः ॥

णिद, इ कुत्सने । इति कविकल्पद्रुमः ॥ (भ्वा-परं-सकं-सेट्-इदित् । ) निंसनिन्दनिक्षां वोपदेव-मतं निन्दम् । तत्वविकल्पने अरूपत्वत्वात् । केचित्तु णतिविकल्पमिच्छन्ति आदौ तूपसर्गा-दसमासे उपसर्गात् समासे आदौ नित्यमित्यर्थः । यथा, प्रणिन्दकः प्रनिन्दकः । प्रणिन्दति । भट्टौ तु आदावपि विकल्पो दृश्यते । इ, कर्म्मणि निन्द्यते । निन्दति दुष्टं लोकः । इति दुर्गादासः ॥

णिद, ऋ ञ सन्निधौ । कुत्सने । इति कविकल्प-द्रुमः ॥ ( भ्वा-उभं-अकं-कुत्सने-सकं-सेट्-ऋदित् ।) सन्निधिः सन्निकर्षः । ऋ, अनिनेदत् । ञ, नेदति नेदते दयालुं दीनः । निनित्सुः । इति दुर्गादासः ॥

णिल, श गहने । इति कविकल्पद्रुमः ॥ (तुदा-परं-सकं-सेट् । ) वृत्तौ । गहनं दुर्बोधः । श, निलति शास्त्रं सुधीः दुःखेन जानातीत्यर्थः । इति दुर्गादासः ॥

णिव, इ सेके । इति कविकल्पद्रुमः ॥ ( भ्वा-परं-सकं-सेट् । इदित् ।) वृत्तौ । इ, निन्व्यते । इति दुर्गादासः ॥

("गव्यन्त्रिदोषशमनं तक्रं श्रेष्ठन्तदुच्यते ।
दीपनं रुचिकृन्मेध्यमर्शोदरविकारजित् ॥"
इति गव्यतक्रगुणाः ॥
"माहिषं कफकृत् किञ्चिद्दूषणं शोफकरं गुरु ।
प्लीहार्शोग्रहणीगुल्मपाण्ड्वामयविनाशनम् ॥"
इति माहिषतक्रगुणाः ॥
"छागलं लघु संस्निग्धं त्रिदोषशमनं परम् ।
गुल्मार्शोग्रहणीशूलं पाण्ड्वामयविनाशनम् ॥"
इति छागीतक्रगुणाः ॥
"तथाच त्रिविधं तक्रं कथ्यते ब्रह्म पुत्रक ! ।
यथायोगेन तत् सम्यक् शस्यते येषु रोगिषु ॥
समुद्धृतघृतं तक्रमर्द्धोद्धृतघृतञ्च तत् ।
अनुद्धृतघृतञ्चान्यदित्येतत्त्रिविधं मतम् ॥
सर्वं लघु च पथ्यञ्च त्रिदोषशमनं परम् ।
ततः परं गुरुतमं क्रमेण समुदीरितम् ।
समुद्धृतघृतन्तक्रं लघु पथ्यतमं मतम् ॥
गरोदरार्शोग्रहणीपाण्डुरोगज्वरातुरे ।
मर्त्येऽनुद्दत्ते वापि प्लीहाद्यामयदर्शिषु ॥
हितं संशोधनं वल्यं पित्तरक्ताविरोधकृत् ॥
अर्द्धोद्धृतघृतं तस्माद्वृष्यं गुरु कफप्रदम् ।
मधुरं पित्तरक्तघ्नं श्रमघ्नं परमं मतम् ॥
अनुद्धृतघृतं सान्द्रं गुरु विद्यात् कफावहम् ।
बलप्रदन्तु पीनानामशोफातिसारकृत् ॥"
इति त्रिविधतक्रगुणाः ॥ * ॥
"तक्रं ग्राहि कषायाम्लं वीर्य्योष्णं दीपनं लघु ।
श्रमापहरणं स्निग्धं ग्रहण्यर्शोऽतिसारनुत् ॥
इति तक्रगुणाः प्रोक्ता न दद्याद्यत्र तच्छृणु ।
क्षते शोथे च क्षीणानां नोष्णकाले शरत्सु च ॥
संमूर्च्छाभ्रमदाहार्त्ते तथाच रक्तपित्तके ।
न शस्तं तक्रपानञ्च करोति विविधान् गदान् ॥"
एतेषां तक्रं निषिद्धम् ॥
इति हारीते प्रथमस्थानेऽष्टमेऽध्याये ॥ * ॥)

तक्रकूर्च्चिका, स्त्री, ( तक्रजाता कूर्च्चिका । ) तक्रयोगेन क्वथद्दुग्धात् जाता । छाना इति भाषा । अस्या गुणाः । मलवद्धवातकारित्वम् । रूक्षत्वम् । दुर्ज्जरत्वञ्च । इति राजवल्लभः ॥
(यथा सुश्रुते सूत्रस्थाने ४५ अध्याये ।
"ग्राहिणी वातला रूक्षा दुर्ज्जरा तक्रकूर्च्चिका ॥")

तक्रमांसं, क्ली, ( तक्रयोगेन पाचितं मांसम् । ) व्यञ्जनविशेषः । एखनि इति पारस्य भाषा । तस्य पाकप्रकारो यथा,—
"पाकपात्रे घृतं दत्त्वा हरिद्राहिङ्गु भर्ज्जयेत् ।
छागादेः सकलस्यापि खण्डान्यत्रै च भर्जयेत् ॥
सिद्धियोग्यं जलं दत्त्वा पचेन्मृदुतरं यथा ।
राजिकादियुते तक्रे मांसखण्डानि धारयेत् ॥"
तस्य गुणाः ।
"तक्रमांसन्तु वातघ्नं लघु रुच्यं बलप्रदम् ।
कफघ्नं पित्तलं किञ्चित् सर्व्वाहारस्य पाचनम् ॥"
इति भावप्रकाशः ।

तक्राटः, पुं, ( तक्राय तक्रोत्पादनाय अटतीति । अट + अच् । ) मन्थानदण्डः । इति हारावली । ३४ ॥

तक्ष, त्वचो यावे । इति कविकल्पद्रुमः ॥ ( भ्वा-परं-सकं-सेट् । ) त्वचो यावस्तनूकरणं संवरणम् । तक्ष त्वचने इति प्राञ्चः । त्वचनं संवरणमिति रमानाथः । तक्षति कायं वर्म्मणा भटः । इति दुर्गादासः ॥

तक्ष, ऊ कार्श्ये । इति कविकल्पद्रुमः ॥ (भ्वा-परं-सकं-वेट् । ) ऊ, तक्षिष्यति तक्ष्यति । कार्श्यं तनूकरणम् । तक्षति काष्ठं तक्षा । इति दुर्गादासः ॥

तक्ष, ऊ न तक्षे । इति कविकल्पद्रुमः ॥ ( स्वा-परं-सकं-वेट् ।) तक्षः तनूकरणम् । ऊ, तक्षिष्यति तक्ष्यति । न, तक्ष्णोति काष्ठं तक्षा । इति दुर्गादासः ॥

तक्षकः, पुं, ( तक्षतीति । तक्ष + ण्वुल् । ) पातालस्थाष्टनागान्तर्गतनागविशेषः । स कश्यपात् कद्रुगर्भे जातः इन्द्रसखः । अस्य वासः खाण्डववने आसीत् । अयं परीक्षितं दष्टवान् । इति श्रीभागवतम् ॥ (अयं हि क्षपणकरूपधारी उतङ्कस्य गुरोर्गुरुदक्षिणार्थमानीते कुण्डले अपहृत्य नागलोकं गतवान् । यथा, महाभारते । १ । ३ । १२७ ।
"तस्य तक्षको दृढमासन्नः स तं जग्राह । गृहीतमात्रः स तद्रूपं विहाय तक्षकस्वरूपं कृत्वा सहसा धरण्यां विवृतं महाबिलं प्रविवेश ॥ तक्ष तनूकरणे + "कृञ् शिल्पिसंज्ञयोः ।" उणां । २ । ३२ । इति क्वुन् । ) त्वष्टा । इत्यमरः । ३ । ३ । ४ ॥ विश्वकर्म्मा । इति शब्दरत्नावली ॥ द्रुमभेदः । इति हेमचन्द्रः ॥ सूत्रधारः । इत्यमरटीकायां सारसुन्दरी ॥ ( स्वनामख्यातः प्रसेनजित्-पुत्रः । यथा, भागवते । ९ । १२ । ८ ।
"ततः प्रसेनजित् तस्मात् तक्षको भविता पुनः ॥"
छेदके, त्रि । यथा, रामायणे । २।८०।२ ।
"तथा वर्द्धकयश्चैव मार्गिणो वृक्षतक्षकाः ॥")

तक्षणं, क्ली, ( तक्ष तनूकरणे + भावे ल्युट् । ) तनूकरणम् । (यथा, मनुः । ५ । ११५ ।
"द्रवाणाञ्चैव सर्व्वेषां शुद्धिरुत्प्लवनं स्मृतम् ।
प्रोक्षणं संहतानाञ्च दारवाणाञ्च तक्षणम् ॥")

तक्षणी, स्त्री, (तक्षत्यनेनेति । तक्ष + करणे ल्युट् । टित्वात् ङीप् । ) वासी अस्त्रम् । इति शब्दरत्नावली ॥

तक्षशिला, स्त्री, देशविशेषः । इति सिद्धान्तकौमुदी ॥ ( यथा, महाभारते । १।३।२२ ।
"तमेवमुक्त्वा भ्रातरस्तस्य तथा चक्रुः स तथा भ्रातॄन् सन्दिश्य तक्षशिलां प्रत्यभिप्रतस्थे ॥")

तक्षा, [ न् ] पुं, ( तक्षति तनूकरोतीति । तक्ष + "कनिन् युवृषितक्षिराजीति ।" उणां १।१५६ । इति कनिन् । ) त्वष्टा । इत्यमरः । २।१०।९ ॥ ( यथा, माघे । १२ । २५ ।
"अपाकृतस्थौ विगताक्षपाटवे
रुजा निकामं विकलीकृते रथे ।
"आनेन तक्ष्णा भिषजेव सत्वरं
प्रचक्रमे लङ्घनपूर्व्वकः क्रमः ॥")

तग, इ स्खलने । कम्पे । गतौ । इति कविकल्पद्रुमः ॥ ( भ्वा-परं-अकं-गतौ तु सकं-सेट् । ) इ, कर्म्मणि तङ्ग्यते । इति दुर्गादासः ॥

तगरं, गन्धद्रव्यः । पिण्डतगर इति कोङ्कणे प्रसिद्धः । तगरमूल इति ख्यातञ्च । तत्पर्य्यायः । कालानुसारिवा २ वक्रम् ३ कुटिलम् ४ शठम् ५ महोरगम् ६ नतम् ७ जिह्मम् ८ दीपनम् ९ तगरपादिकम् १० । इति रत्नमाला ॥ विनम्रम् ११ कुञ्चितम् १२ वक्रम् १३ नहुषाख्यम् १४ दण्डहस्तम् १५ बर्हिणम् १६ पिण्डीतगरकम् १७ पार्थिवम् १८ राजहर्षणम् १९ कालानुसारकम् २० क्षत्रम् २१ दीनम् २२ । अस्य गुणाः । शीतलत्वम् । तिक्तत्वम् । दृष्टिदोषविषार्त्तिभूतोन्मादभयनाशित्वम् । पथ्यत्वञ्च ॥ आकुल्यहृच्च । इति राजनिर्घण्टः ॥ गन्धद्रव्यविशेषः । तस्य पर्य्यायगुणाः ।
"कालानुसार्य्यं तगरं कुटिलं नहुषं नतम् ।
अपरं पिण्डतगरं दण्डहस्ति च बर्हिणम् ॥
तगरद्वयमुष्णं स्यात् स्वादु स्निग्धं लघु स्मृतम् ।
विषापस्मारमूर्च्छाक्षिरोगदोषत्रयापहम् ॥"
इति भावप्रकाशः ॥

तगरः, पुं, (तं क्रोडभागं गिरतीति । गॄ + अच् ।) पुष्पवृक्षविशेषः । टगर इति भाषा । तत्पर्य्यायः । सितपुष्पः २ । कालपर्णः ३ कटुच्छदः ४ । इति शब्दरत्नावली ॥ (यथा, महाभारते । १३ । १०४ । ८५ ।
"प्रियङ्गुचन्दनाभ्याञ्च बिल्वेन तगरेण च ।
पृथगेवानुलिम्पेत केशरेण च बुद्धिमान् ॥")
मदनवृक्षः । इति राजनिर्घण्टः ॥

तगरपादिकं, क्ली, (तगरस्य पादो मूलदेश इव विद्यतेऽत्र इति ठन् । ) तगरम् । इति रत्नमाला ॥

तङ्कः, पुं क्ली, (टङ्क + पृषोदरात् साधुः ।) पाषाणदारणः । इत्यमरटीकायां रमानाथः ॥ ( तकि कृच्छ्रजीवने + भावे घञ् । ) प्रियविरहजन्तापः । भयम् । इति सिद्धान्तसंग्रहटीकायां भरतः ॥

तञ्ची, स्त्री, ( तं पुच्छाकारं जवति गच्छतीति । जु + क्विप् ङीप् । ) हिङ्गुपत्री । इति राजनिर्घण्टः ॥

तट, उच्छ्राये । इति कविकल्पद्रुमः ॥ ( भ्वा-परं-अकं-सेट् । ) उच्छ्राय उच्चीभावः । तटति पुलिनम् । इति दुर्गादासः ॥

तट, क आहतौ । इति कविकल्पद्रुमः ॥ ( चुरां-परं-सकं-सेट् । ) क, ताडयति । इति दुर्गादासः ॥

तटं, क्ली, (तटति उच्छ्रितं भवतीति । तट उच्छ्राये + पचाद्यच् ।) क्षेत्रम् । इति मेदिनी । टे, १६ ॥ ( प्रदेशः । यथा, महाभारते । १ । ३६ । ३ ।
"गोकर्णे पुष्करारण्ये तथा हिमवतस्तटे ॥")

तटः, त्रि, ( तटति उच्छ्रितो भवतीति । तट + अच् । ) तीरम् । इत्यमरः । १ । १० । ७ ॥

तट् इति भाषा ॥ (यथा, हरिवंशे । ६७।५५ ।
"कर्णयमार्गौ आवेरो इरस्याक्ष तडागुभौ ॥"
महादेवे, पुं । सर्व्वोच्छ्रितत्वादस्य तथात्वम् ।
यथा, महाभारते । १३ । २८४ । ६६ ।
"नमस्तटाय तथ्याय: तटानाम्पतये नमः ॥")

तटस्थं, क्ली, लक्षणविशेषः । तस्य स्वरूपं यथा,
सन्निमत्ते सति अतीतलक्षणम् । तथाच ।
"स्वरूपं तटस्थं द्विधालक्षणं स्यात्
स्वरूपस्य बोधो यतो वाचकाभ्याम् ।
स्वरूपे प्रविष्टात् स्वरूपेऽप्रविष्टात्
यथा काकवन्तो गृहाः खं विलञ्च ॥"
इति वेदान्तकारिका ॥
(तटे तिष्ठतीति । स्था + कः ।) तटस्थिते,
त्रि । (उदासीनः । यथा, नैषधे । ३ । ५५ ।
"धिक् चापले वत्सिमवत्सलत्वं
यत्प्रेरणादुत्तरलीभवन्त्या ।
समीरसङ्गादिव नीरभङ्ग्या
मया तटस्थस्त्वमुपद्रुतोऽसि ॥"
समीपस्थः । यथाह वत्सः ।
"तटस्थः स्यादुदासीने तीरस्थनिकटस्थयोः ॥")

तटाकः, पुं, (तटमकति गच्छतीति । अक +
"कर्म्मण्यण् ।" ३ । २ । १ । इत्यण् ।) तडागः ।
पद्मादियुक्तसरः । इति शब्दरत्नावली । (यथा,
वैराग्यशतके । ४६ ।
"प्रादेशमात्रमुदरं परिपूरयितुं क्रियागर्वं यत्नः ।
चुलकेनाम्भः पातुं खनितव्यः किं तटाकोऽपि ॥")

तटिनी, स्त्री, (तटमस्त्यस्या इति । तट + "अत
इनिठनौ ।" ५ । २ । ११५ । इति इनि-
ततो ङीप् ।) नदी । इत्यमरः । १।१०।३० ॥
(यथा, आर्य्यासप्तशत्याम् । ६६२ ।
"त्वया तटिनि ! तरङ्गैर्मितचक्रेषु नाशये
निहितः ।
फलदलवल्कलरहितस्त्वयान्तरिते तरुस्तम्भः ॥")

तटी, स्त्री, (तटति उच्छ्रिता भवतीति । तट +
अच् । ङीष् ।) तीरम् । इत्यमरः । १।१०।७ ॥
(यथा, साहित्यदर्पणे । ३ । ८६ ।
"मालयञ्च समग्रामञ्च नद्यादीनां तटी तथा ॥")

तड, इ ङ आहतौ । इति कविकल्पद्रुमः ॥ (भ्वा-
आत्मं-सकं-सेट् ।) इ, तण्डाते । ङ, तण्डते ।
इति दुर्गादासः ॥

तड, क भिदि । आहतौ । इति कविकल्पद्रुमः ॥
(चुरा-परं-अकं-सकं च-सेट् ।) क, ताड़-
यति । भिदि दीप्तौ । इति दुर्गादासः ॥

तड़गः, पुं, (तडाते आहन्यते ऊर्म्मिभिरिति ।
तड् + आगः । पृषोदरादित्वात् आलोपे साधुः ।)
तड़ागः । इति द्विरूपकोषः ॥

तड़ाकः, पुं, (तडाते आहन्यते ऊर्म्मिमालाभि-
रिति । तडि आहतौ + "पिनाकादयश्च ।"
उणा० ४ । १५ । इति आकप्रत्ययेन निपातनात्
साधुः ।) तड़ागः । इति शब्दरत्नावली ॥

तड़ाका, स्त्री, (तड़ाक + स्त्रियां टाप् ।) नदी-
प्रमुखाणां तटभागः । (तडि आहतौ + भावे
आकः ।) आघातः । इति संक्षिप्तसारे उणादि-
वृत्तिः ॥ (प्रभा । इत्युज्ज्वलदत्तः । ४ । १५ ॥)

तड़ागः, पुं क्ली, (तड + तड़ागादयश्च । इति
आगप्रत्ययेन निपातनात् साधुः ।) यन्त्रकूटकः ।
इति मेदिनी । गे, ३६ ॥ (तडाते आहन्यते
ऊर्म्मिमालाभिरिति । तडि आहतौ + कर्म्मणि
आकः ।) पद्मादियुक्तं सरः । तत्पर्य्यायः ।
पद्माकरः २ । इत्यमरः । १ । १० । २८ ॥
तड़ाकः ३ तटाकः ४ । इति शब्दरत्नावली ॥
तड़गः ५ । इति द्विरूपकोषः ॥ पञ्चशत-
धनुःपरिमाणजलाशयः । चतुर्हस्तैः पञ्चपञ्चा-
शद्धस्तान्यूनतायां सहस्रहस्तान्यूनत्वेन
तड़ागः । इति नव्यवर्द्धमानधृतो वशिष्ठः ॥ * ॥
तस्य जलगुणाः । वायुकारित्वम् । स्वादुत्वम् ।
कषायत्वम् । पाके कटुत्वम् । शिशिरहिमकाले
प्रशस्तत्वञ्च । इति राजवल्लभः ॥ * ॥ तस्योत्-
सर्गविधिर्यथा,—

पुलस्त्य उवाच ।

"शृणु राजन्महाबाहो ! तड़ागादिषु यो विधिः ।
पुराणेष्वितिहासेषु मन्यते राजसत्तम ! ॥
प्राप्य पक्षं शुभं शुक्लमागते चोत्तरायणे ।
पुण्येऽह्नि विप्रैः क्रियते कृत्वा ब्राह्मणवाचनम् ॥
प्राक्प्रस्रवणाद्देशात्तड़ागस्य समीपतः ॥
चतुर्हस्तसमा वेदी चतुरस्रा समन्ततः ।
तथा षोड़शहस्तः स्यान्मण्डपश्च चतुर्मुखः ॥
वेद्या उत्तरतो गर्त्तारत्निमात्रा तु मेखला ।
नवसप्ताथवा पञ्च योनिवक्त्रा नृपात्मज ! ॥
वितस्तिमात्रा योनिः स्यात् षट्सप्ताङ्गुल-
विस्तृता ।
सर्व्वे स्वहस्तमात्राः स्युस्त्रिपर्व्वोच्छ्रितमेखलाः ॥
सर्व्वे च सर्व्ववर्णाः स्युः पताकाध्वजसंयुताः ।
अश्वत्थोडुम्बरप्लक्षवटशाखाकृतानि च ॥
मण्डपस्य प्रतिदिशं द्वाराण्येतानि कारयेत् ॥
शुभास्तत्राष्ट होतारो द्वारपालाश्च थापरे ।
अष्टौ तु जापकाः कार्य्या ब्राह्मणा वेदपारगाः ॥
सर्व्वलक्षणसम्पूर्णा मन्त्रविद्विजितेन्द्रियाः ।
कुलशीलसमायुक्ताः स्थापिता द्विजसत्तमाः ॥
प्रतिगर्त्तेषु कलसा यज्ञोपस्करणानि च ।
व्यजनञ्चासनं शुभ्रं ताम्रपात्रं सुविस्तरम् ॥
आचार्य्यः प्रक्षिपेद्भूम्यामनुमन्त्र्य विचक्षणः ।
त्र्यरत्निमात्रो यूपः स्यात् क्षीरिवृक्षविनिर्म्मितः ॥
यजमानप्रमाणो वा संस्थाप्यो भूतिमिच्छता ॥
हेमालङ्कारिणः कार्य्याः पञ्चविंशतिरृत्विजः ॥
कुण्डलानि च हैमानि केयूरकटकानि च ।
तथाङ्गुलीपवित्राणि वासांसि विविधानि च ॥
दद्युः समानि सर्व्वेषामाचार्य्ये द्विगुणं पुनः ।
दद्याच्छयनसंयुक्तमात्मनश्चापि यत् कृतम् ॥
सौवर्णौ कूर्म्ममकरौ राजतौ मत्स्यडुण्डुभौ ।
तथा कुलीरमण्डूका वायसः शिशुमारकः ॥
एवमासाद्य तत् सर्व्वं स्वर्णपात्रं विशाम्पते ! ।
शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः ॥
सर्व्वौषध्युदकस्नातः पाठितो वेदपुङ्गवैः ।
यजमानः सपत्नीकः पुत्त्रपौत्त्रसमन्वितः ॥
पश्चिमं द्वारमासाद्य प्रविशेद्यागमण्डपम् ।
ततो मङ्गलशब्देन भेरीणां निःस्वनेन च ॥
रजसा मण्डलं कुर्य्यात् पञ्चवर्णेन चार्च्चितम् ।
षोड़शारं ततश्चक्रं पद्मरागसुशोभनम् ॥
वेद्यामुपरि तत् कृत्वा ग्रहान् लोकपतींस्तथा ।
संन्यसेन्मन्त्रतः सर्व्वान् प्रतिदिक्षु विचक्षणः ॥
तत्पार्श्वे स्थापयेत्कूर्म्मं वारुणं मन्त्रमाश्रितम् ।
ब्रह्माणञ्च शिवं विष्णुं तत्रैव स्थापयेद्बुधः ॥
विनायकञ्च विन्यस्य कमलामम्बिकां ततः ।
शान्त्यर्थं सर्व्वलोकानां भूतग्राममपीष्टतः ।
पुष्पभक्ष्यफलैर्युक्तमेवं कृत्वाधिवासनम् ।
कुम्भांश्च रत्नगर्भांश्च वासोभिः परिवेष्टयेत् ॥
गन्धपुष्पैरलङ्कृत्य द्वारपालान् समन्ततः ।
पठध्वमिति तान् ब्रूयादाचार्य्यमपि पूजयेत् ॥
बह्वृचौ पूर्व्वतः स्थाप्यौ दक्षिणे च यजुर्व्विदौ ।
पश्चिमे सामगौ स्थाप्यावुत्तरेणाथर्व्वगौ ॥
उदङ्मुखो दक्षिणतो यजमान उपाविशेत् ।
पठध्वमिति तान् ब्रूयात् यजध्वमिति याजकम् ॥
उत्कृष्टमन्त्रपाठेन तिष्ठध्वं मन्त्रयाजकाः ।
एवमादिश्य तान् सर्व्वान् पर्य्युक्ष्याग्निं च
मन्त्रवित् ॥
जुहुयाद्वारुणैर्मन्त्रैराज्यञ्च समिधस्तथा ।
ऋत्विग्भिश्चैव होतव्यं वारुणैरेव सर्व्वतः ॥
वैराजं पौरुषं सूक्तं पौष्णं चान्द्रं सुसंहितम् ।
शैशवं पञ्चनिधनं गायन्ति ज्येष्ठसामगाः ॥
वामदेव्यं बृहत्साम रौरवं सरथन्तरम् ।
गवां व्रतं विकर्णञ्च रक्षोघ्नं गरयन्तथा ॥
गायन्ति सामगा राजन् ! पश्चिमद्वारमाश्रिताः ।
अथर्व्वणाश्चोत्तरतः शान्तिकं पौष्टिकं तथा ॥
जपन्ति मनसा देवमाश्रिता वरुणं प्रभुम् ।
पूर्व्वेद्युरभितो मन्त्रैरेवं कृत्वाधिवासनम् ॥
गजाश्वरथ्यावल्मीकसङ्गमह्रदगोकुलात् ।
मृदमादाय दद्याच्च प्रक्षिपेच्च यथा तथा ॥
रोचनाञ्च ससिद्धार्थान् गन्धान् गुग्गुलमेव च ।
स्नपनं तस्य कर्त्तव्यं पञ्चगव्यसमन्वितम् ॥
मृद्भिः कर्त्तुर्महामन्त्रैरेवं कृत्वा विधानतः ।
एवं रक्षति राज्यार्थान् विधियुक्तेन कर्म्मणा ॥ * ॥
ततः प्रभाते विमले संजाते तु गवां शतम् ।
ब्राह्मणेभ्यः प्रदातव्यं होमान्ते चाथवा पुनः ॥
पञ्चाशद्वाथ षट्त्रिंशत् पञ्चविंशतिरेव च ।
ततः संवत्सरे प्राप्ते शुक्ले लग्ने सुशोभने ॥
वेदशब्दैश्च गान्धर्व्ववाद्यैश्च विविधैः पुनः ।
कनकालङ्कृतां कृत्वा जले गामवतारयेत् ॥
सामगाय च सा देया ब्राह्मणाय विशाम्पते ! ।
पात्रीमादाय सौवर्णीं पञ्चरत्नसमन्विताम् ॥
तत्र निःक्षिप्य मकरं मत्स्यादींश्चैव सर्व्वशः ।
धृतां चतुर्भिर्व्विप्रैश्च वेदवेदाङ्गपारगैः ॥
महानदीजलोपेतां दध्यक्षतविभूषिताम् ।
उत्तराभिमुखो न्युब्जां जलमध्ये प्रकाशयेत् ॥
आथर्व्वणेन सूक्तेन पुनर्म्मामित्यनेन च ।
आपो हि ष्ठेति मन्त्रेण क्षिप्त्वागत्य मण्डपम् ॥

पूजयित्वा सुरांश्चैव बलिं दद्यात् समन्वितः ।
पुनर्दिनानि होतव्यं चत्वारि राजसत्तम ! ॥
चतुर्थीकर्म्म कर्त्तव्यं देयं तत्रापि शक्तितः ।
कृत्वा तु यज्ञपात्राणि यज्ञोपकरणानि च ॥
ऋत्विग्भ्यस्तु समं दद्यात् मण्डपं विभजेत् पुनः ।
होमपात्रञ्च शय्याञ्च आचार्य्याय निवेदयेत् ॥
ततः सहस्रं विप्राणामथवाष्टशतं तथा ।
भोजयेच्च यथाशक्त्या पञ्चाशद्वाथ विंशतिः ॥
एवमेष पुराणेषु तडागविधिरुच्यते ।
कूपवापीषु सर्व्वासु तथा पुष्करिणीषु च ॥
एष एव विधिर्दृष्टः प्रतिष्ठासु तथैव च ।
मन्त्रतस्तु विशेषः स्यात् प्रासादोद्यानभूमिषु ॥
अयन्तु ऋत्विगाचार्य्यविधिर्दृष्टेन कर्म्मणा ।
अल्पेष्वेकाग्निवत् कार्य्यं वित्तशाठ्यादृते नृणाम् ॥”
तडागे कालविशेषे जलस्थितेः फलं यथा,—
“प्रावृट्‌काले स्थितं तोयमग्निष्टोमसमं स्मृतम् ।
शरत्काले स्थितं तोयं यदुक्तफलदायकम् ॥
वाजपेयसमं हेमन्तशिशिरस्थितम् ।
अश्वमेधसमं प्राहुर्व्वसन्तसमयस्थितम् ॥
ग्रीष्मेऽपि तु स्थितं तोयं राजसूयफलाधिकम् ॥”
तडागकर्त्तुः फलं यथा,—

“एतान्महाराज ! विशेषधर्म्मान्
करोति योऽथ्यात्मय शुद्धबुद्धिः ।
स याति ब्रह्मालयमेककल्पं
दिव्यं पुनर्यासि तथैव दिव्यम् ॥”

इति पाद्मे सृष्टिखण्डम् ॥

तडाघातः, पुं, ( तटे आघातः । पृषोदरात् टस्य डत्वम् । ) ऊर्द्धीकृत्य हस्तिमुखाघातः । यथा,
“उच्चैःकरिकराक्षेपे तडाघातं विदुर्बुधाः ॥”
इति कुमारसम्भवटीका ॥

तडित्, स्त्री, ( ताडयत्यभ्रमिति । तड आघाते + “ताडेर्णिलुक् च ।” उणां । १ । १०० । इति इतिप्रत्ययः णेर्लुक् च ।) विद्युत् । इत्यमरः ।१।३।९ ॥ ( यथा, रघुः । ६ । ५४ ।

“अथ नभस्य इव त्रिदशायुधं
कनकपिङ्गतडिद्गुणसंयुतम् ।
धनुरधिज्यमनाधिरुपाददे
नरवरो रवरोषितकेशरी ॥” )

तडित्वान्, [ त् ] पुं, ( तडित् विद्युदस्यास्तीति । तडित् + मतुप् । मस्य वः । ) मेघः । मुस्तकम् । इत्यमरः । १ । ३ । ७,२ । ४ । १५९ ॥ (विद्युद्‌विशिष्टे, त्रि । यथा,—

“ससुरचापमनेकमणिप्रभैरपपयोविशदं हिमपाण्डुभिः”
“समुदितमिपयेन तडित्वतीं
लम्भयता शरदम्बुदसंहतिम् ॥”
इति किरातार्ज्जुनीये । ५ । ४ ॥ )

तण्डकः पुं, ( तण्डते कृत्यतीति । तण्ड + ण्वुल् । ) खञ्जनपक्षी । फेनः । समासप्रायवाक् । गृहदारु । तरुस्कन्धः । मायाबहुलके, त्रि । इति मेदिनी । के, ६८ ॥

तण्डकः, पुं क्ली, ( तण्ड + ण्वुल् । ) परिष्कारः । इति त्रिकाण्डशेषे अमरः ॥

तण्डुः, पुं, शिवद्वारपालविशेषः । इति शब्दार्णवः ॥

तण्डुरीणः, पुं, कीटमात्रम् । ( तण्डुले भवः । तण्डुल + ढः । लस्य रः । ) तण्डुलोदकम् । बर्व्वरे, त्रि । इति मेदिनी । णे, ६५ ॥

तण्डुलः, पुं, (तण्ड्यते आहन्यते इति । तड आघाते + “सानसिवर्णसीति ।” उणां ४ । १०७ । इति उलच् । यद्वा, “कृपृवृटिकलिताडिभ्य उलन् तण्डश्च ।” उणां ।५।६। इति उलन् तण्डादेशश्च ।) विडङ्गम् । इति मेदिनी । ले, ८६ ॥
(“पुंसि क्लीबे विडङ्गः स्यात् कृमिघ्नो जन्तुनाशनः । तण्डुलश्च तथा वेल्लममोघा चित्रतण्डुला ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥) तण्डुलीयशाकम् । इति शब्दरत्नावली ॥ धान्यादिनिकरः । इति मेदिनी । ले, ८६ ॥ चाउल इति भाषा । (यथा, पञ्चतन्त्रे । ३।५५।
“सङ्गतिः श्रेयसी पुंसां स्वपक्षे च विशेषतः ।
तुषैरपि परिभ्रष्टा न प्ररोहन्ति तण्डुलाः ॥
सुदुर्जरः स्वादुरसो हंहणस्तण्डुलो नवः ।
सन्धानकृच्छेद्मरः पुराणस्तण्डुलः स्मृतः ॥
द्रव्यसंयोगसंस्कारविकारान् समवेक्ष्य तु ।
यथाकारणमासाद्य भोक्तृणां छन्दतोऽपि वा ॥
अनेकद्रव्ययोनित्वात्कृतान्नस्यात्तान् विनिर्द्दिशेत् ॥”
इति सुश्रुते सूत्रस्थाने ४६ अध्याये ॥)
भृष्टतण्डुलगुणाः । सुगन्धित्वम् । कफनाशित्वम् । रूक्षत्वम् । पित्तकारित्वञ्च । इति राजवल्लभः ॥

तण्डुलपरीक्षा, स्त्री, ( तण्डुलेन परीक्षा । ) नवविधदिव्यान्तर्गतदिव्यविशेषः । चालपड़ा इति भाषा । तद्विधानं यथाह पितामहः ।
“चौर्य्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः ।
तण्डुलान् कारयेच्छुक्लाञ्छालेर्नान्यस्य कस्य चित् ॥
मृण्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ।
स्नानोदकेन संमिश्रान् रात्रौ तत्रैव वासयेत् ॥
प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम् ।
तण्डुलान् भक्षयित्वा तु पत्रे निष्ठीवयेत्त्रिधा ॥
भूर्ज्जस्यैव तु नान्यस्य अभावे पिप्पलस्य तु ।
शोणितं दृश्यते यस्य हनुस्तालु च शीर्य्यते ॥
गात्रञ्च कम्पते यस्य तमशुद्धं विनिर्द्दिशेत् ॥”
स्नानोदकेन देवतास्नानोदकेन । तथा च कात्यायनः ।
“देवतास्नानपानीयस्नानतण्डुलभक्षणे ।
शुद्धिर्निष्ठीवनात् शुद्धो नियन्धोऽशुचिरन्यथा ॥”
शिरोरोपितपत्रकं तण्डुलान् भक्षयित्वा निष्ठीवयेत् प्राड्विवाकः इति । निष्ठीवयेदिति णयन्तात् सिद्धम् । तुलानिरूपितं सर्व्वदिव्यसाधारणञ्च धर्म्मवाहनादिहवनान्तं पूर्व्ववदिहापि कर्त्तव्यम् ॥ शिरोरोपितपत्रलेख्यमन्त्रादि यथा,—
“तस्यार्थमभियुक्तस्य लेखयित्वा तु पत्रके ।
मन्त्रेणानेन सहितं कुर्य्यात्तस्य शिरोगतम् ॥

आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्म्मो हि जानाति नरस्य वृत्तम् ॥”

इति दिव्यतत्त्वम् ॥

तण्डुला, स्त्री, ( तण्ड्यते आहन्यते इति । तण्ड + उलच् ततष्टाप् । ) महायवक्षा । विडङ्गम् । इति राजनिर्घण्टः ॥

तण्डुलाम्बु, क्ली, ( तण्डुलस्य अम्बु । ) तण्डुलोदकम् । चेलुनि इति भाषा । तत्पर्य्यायः । कणाम्बु २ । इति वैद्यकपरिभाषा ॥ तण्डुलोत्थम् ३ । इति राजनिर्घण्टः ॥ यथा, वैद्यकचक्रपाणिसंग्रहे प्रदराधिकारे ।
“पिबेत् सक्षौद्रं तद्भूयं सक्षौद्रं तण्डुलाम्बुना ॥”

तण्डुली, स्त्री, ( तण्डुल + ङीष् । ) यवतिक्ता लता । शङ्खाङ्कुलीकर्कटी । तण्डुलीयशाकः । इति राजनिर्घण्टः ॥ ( विवृतिरस्यास्तण्डुलीयशब्दे ज्ञातव्या ॥)

तण्डुलीकः, पुं, (तण्डुलीव कायतीति । कै + कः । ) तण्डुलीयशाकः । इति शब्दरत्नावली ॥

तण्डुलीयः, पुं, ( तण्डुलाय हितः । तण्डुल + “विभाषा हविरपूपादिभ्यः ।” ५ । १ । ४ । इति छः । ) पत्रशाकविशेषः । न्युदियानटिया इति चाँपानटिया इति च वङ्गभाषा । चवराइ इति अल्पमरषा इति च हिन्दी भाषा । तत्पर्य्यायः । अल्पमारिषः २ । इत्यमरः । २ । ४ । १३६ ॥ तण्डुलीकः ३ तण्डुलः ४ । इति शब्दरत्नावली ॥ भण्डीरः ५ तण्डुली ६ तण्डुलीयकः ७ ग्रन्थिलः ८ बहुवीर्य्यः ९ मेघनादः १० घनस्वनः ११ शुशाकः १२ पथ्यशाकः १३ स्फूर्जथुः १४ स्तनिताह्वयः १५ वीरः १६ तण्डुलनामा १७ । अस्य गुणाः । शिशिरत्वम् । मधुरत्वम् । विषपित्तदाहभ्रमनाशित्वम् । रुचिकारित्वम् । दीपनत्वम् । पथ्यत्वञ्च । तद्बीजगुणाः । हिमत्वम् । अर्शःपित्तरक्तविषकासविनाशित्वम् । ग्राहकत्वम् । मधुरत्वम् । विपाके दाहशोषश्रमनत्वम् । रुचिदातृत्वञ्च । इति राजनिर्घण्टः ॥ विडङ्गम् । ताप्यम् । इति मेदिनी । ये, ११८ ॥ अस्य पर्य्यायगुणाः ।
“तण्डुलीयो मेघनादः काण्डेरस्तण्डुलेरकः ।
भण्डीरस्तण्डुलीबीजो विषघ्नश्चाल्पमारिषः ॥
तण्डुलीयो लघुः शीतो रूक्षः पित्तकफासजित् ।
सृष्टमूत्रमलो रुच्यो दीपनो विषहारकः ॥”
तद्भेदः । जलतण्डुलीयं शाकं कञ्चटमिति प्रसिद्धम् ।
“पानीयतण्डुलीयन्तु कञ्चटं समुदाहृतम् ।
कञ्चटं तिक्तकं रक्तपित्तानिलहरं लघु ॥”
इति भावप्रकाशः ॥

तण्डुलीयकः, पुं, ( तण्डुलीय + स्वार्थे कन् । ) तण्डुलीयशाकः । ( यथा, हारीते १ स्थाने१०अः ।
“स्वादुः पाके लघुकफपित्तविषघ्नस्तण्डुलीयकः ।
हन्ति वातं विड्‌भेदं मूत्रवातकफे हितः ॥”)
विडङ्गम् । इति राजनिर्घण्टः ॥

तण्डुलीयिका, स्त्री, ( तण्डुलीय + स्वार्थे कन् स्त्रियां टाप् । कापि अत इत्वञ्च । ) विडङ्गम् । इति राजनिर्घण्टः ॥

तण्डुलुः, स्त्री, ( तण्डुल + पृषोदरात् उत्वे साधुः ।) विडङ्गम् । इति शब्दरत्नावली ॥

तण्डुलेरः, पुं, (तण्डुल + बाहुलकात् स्वार्थे ढ्र।) तण्डुलीयशाकः। इति हेमचन्द्रः। ४। २५०॥

तण्डुलोत्थं, क्ली, (तण्डुलात् तण्डुलप्रक्षालनात् उत्तिष्ठतीति। उत् + स्था + कः।) तण्डुलाम्बु। इति राजनिर्घण्टः॥

तण्डुलोदकं, क्ली, (तण्डुलस्य तण्डुलक्षालनस्य उदकम्। तण्डुलक्षालितं उदकं वा।) तण्डुलाम्बु। यथा, वैद्यकपरिभाषायाम्।
"जलमष्टगुणं दत्त्वा पलं कण्डिततण्डुलात्।
भावयित्वा ततो देयं तण्डुलोदककर्म्मणि॥"
(अस्य गुणा यथा,—
"तण्डुलं शीतलं पथ्यं मद्यातिसारनाशनम्।
सुस्वादु शीतलञ्चैव हृद्यं तण्डुलोदकम्॥"
इति हारीते प्रथमे स्थानेऽष्टमेऽध्याये॥)

तण्डुलौघः, पुं, (तण्डुलानामोघ इव यत्र।) वेणुयवः। इति शब्दचन्द्रिका॥ वेउकचाँउ इति भाषा। तण्डुलसमूहश्च॥

तत्, व्य, हेतुः। इत्यमरः। ३। ४। ३॥ (यथा, रघुः। ३। ४६।
"तदङ्गमग्र्यं मघवन्! महाक्रतो-
रमुं तुरङ्गं प्रतिमोक्तुमर्हसि॥")

तत्, [द्] त्रि, बुद्धिस्थपरामर्शः। सेइ इति भाषा। सर्व्वनामशब्दोऽयम्। इति व्याकरणम्॥ (यथा, किरातार्ज्जुनीये। २। २।
"अपि वागधिपस्य दुर्व्वचं
वचनन्तद्विदधीत विस्मयम्॥")

तत्, क्ली, ब्रह्मणो नामविशेषः। यथा,—
"ओँ तत् सदिति निर्द्देशो ब्रह्मणस्त्रिविधः स्मृतः।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा॥
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः।
प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्॥
तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः॥"
इति श्रीभगवद्गीतायाम्। १७। २३-२५॥

ततं, क्ली, (तनोति मनोऽनेनेति। तन + "अञ्जिघृसिभ्यां क्तः।" उणां। ३।८८। इति तनु।) वीणादिवाद्यम्। इत्यमरः। १। ७। ४॥

ततः, त्रि, (तन्यते स्म इति। तन + क्तः।) विस्तृतः। (यथा, महाभारते। ४। ५। १।
"ते वीरा बद्धनिस्त्रिंशास्ततायुधकलापिनः॥")
व्याप्तः। (यथा, भगवद्गीतायाम्। ८। २२।
"यस्यान्तःस्थानि भूतानि येन सर्व्वमिदं ततम्॥")
वायौ, पुं। इति मेदिनी। ते, २०॥

ततः, [स्] व्य, (तद् + "पञ्चम्यास्तसिल्।" ५। ३। ७। इति तसिल्। यद्वा, सर्व्वविभक्तिषु तसिल्।) हेतुः। इत्यमरः। ३। ४। ३॥ (यथा, महाभारते। १२। ३४८। ७९।
"क्षीणाः सत्त्वेन कर्म्मेण ततो वैकारिकाः स्मृताः॥")
आदिः। परिप्रश्नः। पश्चादर्थः। (यथा, मनुः। १२। ८५।
"सर्व्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम्।
तद्ध्यग्र्यं सर्व्वविद्यानां प्राप्यते ह्यमृतं ततः॥"
यत्रार्थः। यथा, मनुः। ४। १५।
"न विद्यमानेष्वर्थेषु नार्त्त्यामपि यतस्ततः॥"
कुत्सार्थः। यथा, नारदपञ्चरात्रे। २। ६।
"आराधितो यदि हरिस्तपसा ततः किं
नाराधितो यदि हरिस्तपसा ततः किम्॥")
कथान्तरम्। आनन्तर्य्यम्। इति विश्वः॥ (यथा, महाभारते। ४। ५। २।
"ततस्ते दक्षिणं तीरमन्वगच्छन् पदातयः॥")

ततपत्री, स्त्री, (ततं विस्तृतं पत्रमस्याः।) कदलीवृक्षः। इति शब्दचन्द्रिका॥

ततमः, त्रि, (तेषां मध्ये निर्द्धारितो योऽसौ। तद् + "वा बहूनां जातिपरिप्रश्ने डतमच्।" ५। ३। ९३। इति डतमच्।) बहुषु मध्ये सः। अनेकेर मध्ये सेइ इति भाषा। (यथा, ऐतरेयोपनिषदि। ३। १२। १३।
"स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्श-
मिति॥")

ततरः, त्रि, (तयोर्मध्ये निर्द्धारितो योऽसौ। तद् + "किंयत्तदो निर्द्धारणे द्वयोरेकस्य डतरच्।" ५। ३। ९२। इति डतरच्।) द्वयोर्मध्ये सः। दुयेर मध्ये सेइ इति भाषा॥

ततस्त्यं, त्रि, (ततस्तत्र भवमिति। ततस् + "अव्ययात् त्यप्।" ४। २। १०४। इत्यस्य "अमेहक्वतसित्रेभ्य एव।" इति वार्त्तिकोक्तेः त्यप् प्रत्ययः।) तत्रभवम्। तत्सम्बन्धि। इति व्याकरणम्॥ तार इति भाषा॥

ततिः, स्त्री, (तन् + भावे क्तिन्।) श्रेणी। इति हेमचन्द्रः। ६। ५९॥ (यथा, विष्णुपादादिकेशान्तवर्णनस्तोत्रे। १५।
"अस्माकं विस्मयार्हाण्यखिलमुनिजनप्रार्थ-
नीयानि येयं
दद्यादाद्यानवद्या ततिरतिरुचिरामङ्गलान्यङ्गु-
लीनाम्॥")

तति, त्रि, (तत् परिमाणमेषामिति। तद् + डति।) तत्परिमाणम्। ततगुलि इति भाषा। बहुवचनान्तोऽयम्। इति व्याकरणम्॥

तत्कालः, पुं, (स चासौ कालश्चेति।) वर्त्तमानकालः। तत्पर्य्यायः। तदात्वम् १। इत्यमरः। २।८।२९॥ (यथा, कथासरित्सागरे। २। ८३।
"वर्षस्य वेश्म वसुभिः स किलादरेण
तत्कालमेव समपूरयदुन्नतश्रीः॥")

तत्कालधीः, त्रि, (तस्मिन् काले कार्य्यकाले धीरुपस्थिता बुद्धिर्यस्य।) प्रत्युत्पन्नमतिः। उपस्थितबुद्धिः। इति हेमचन्द्रः। ३। ८॥

तत्क्रियः, त्रि, (सा क्रिया निसर्गतो वेतनन्ते यस्येति।) कर्म्मकारः। वेतनं विना भारवहादिकर्त्ता। इत्यमरः॥

तत्क्षणः, पुं, (स चासौ क्षणश्चेति स एव क्षणो वा।) सद्यः। इत्यमरः। ३। ४। ९॥ (यथा, रघुः। ३। १४।
"दिशः प्रसेदुर्म्मरुतो ववुः सुखाः
प्रदक्षिणार्च्चिर्हविरग्निराददे।
बभूव सर्व्वं शुभशंसि तत्क्षणं
भवो हि लोकाभ्युदयाय तादृशाम्॥")

त(त्त्)त्वं, क्ली, (तनोति सर्व्वमिदमिति। तन् + क्विप् तुक् च। पृषोदरादित्वात् साधुः। यद्वा, "सर्व्वं खल्विदं ब्रह्म।" "ब्रह्मैवेदं सर्व्वम्।" इति श्रुतेस्तस्य ब्रह्मणो भावः इति। तत् + त्व।) स्वरूपम्। परमात्मा। विलम्बितनृत्यम्। इति मेदिनी। वे, ९॥ वाद्यभेदः। इति विश्वः॥ वस्तु। इति त्रिकाण्डशेषः॥ चेतः। इति धरणिः॥ * ॥ चतुर्व्विंशतितत्त्वानि यथा। क्षितिः १ आपः २ तेजः ३ मरुत् ४ व्योम ५ गन्धः ६ रसः ७ रूपम् ८ स्पर्शः ९ शब्दः १० नेत्रम् ११ नासिका १२ जिह्वा १३ त्वक् १४ वाक् १५ पाणिः १६ पादः १७ गुह्यम् १८ पायुः १९ लिङ्गम् २० प्रकृतिः २१ मनः २२ बुद्धिः २३ अहङ्कारः २४। इति पुराणतन्त्रे॥ तत्तु नानामुनिभिर्नानाविधमुक्तम्। तत्र त्रीणि तत्त्वानि यथा। सत्त्वम् १ रजः २ तमः ३। चतुर्व्विधानि यथा। तेजः १ आपः २ पृथ्वी ३ आत्मा ४। पञ्चविधानि यथा। शब्दः १ स्पर्शः २ रसः ३ गन्धः ४ रूपम् ५। षड्विधानि यथा। क्षितिः १ आपः २ तेजः ३ वायुः ४ आकाशम् ५ परमात्मा ६। सप्तविधानि यथा। क्षितिः १ आपः २ तेजः ३ वायुः ४ आकाशम् ५ जीवः ६ आत्मा ७। नवविधानि यथा। पुरुषः १ प्रकृतिः २ महत्तत्त्वम् ३ अहङ्कारः ४ नभः ५ वायुः ६ ज्योतिः ७ आपः ८ क्षितिः ९। एकादशविधानि यथा। श्रोत्रम् १ त्वक् २ चक्षुः ३ घ्राणम् ४ जिह्वा ५ वाक् ६ पाणिः ७ उपस्थः ८ पायुः ९ अङ्घ्रिः १० मनः ११। त्रयोदशविधानि यथा। नभः १ वायुः २ ज्योतिः ३ आपः ४ क्षितिः ५ श्रोत्रम् ६ त्वक् ७ चक्षुः ८ घ्राणम् ९ जिह्वा १० मनः ११ जीवात्मा १२ परमात्मा १३। षोडशविधानि यथा। नभः १ वायुः २ ज्योतिः ३ आपः ४ पृथ्वी ५ शब्दः ६ स्पर्शः ७ रूपम् ८ रसः ९ गन्धः १० श्रोत्रम् ११ त्वक् १२ चक्षुः १३ जिह्वा १४ घ्राणम् १५ मनः १६। सप्तदशविधानि यथा। पूर्व्वोक्तानि षोडश १६ आत्मा च १७। पञ्चविंशतितत्त्वानि यथा। पूर्व्वोक्तानि सप्तदश १७ पुरुषः १८ प्रकृतिः १९ महान् २० अहङ्कारः २१ मुखम् २२ पाणिः २३ उपस्थः २४ पायुः २५। षड्विंशतिविधानि यथा। पूर्व्वोक्तानि पञ्चविंशतिः २५ जीवः २६। सप्तविंशतिविधानि यथा। पूर्व्वोक्तानि षड्विंशतिः २६ ईश्वरः २७। इति श्रीभागवतम्॥

तत्त्वज्ञानं, क्ली, (तत्त्वस्य ब्रह्मतत्त्वस्य ज्ञानम्।) बुद्धिगुणविशेषः। तत् ब्रह्मज्ञानम्। इति हेमचन्द्रः। २। २२५॥ यथा,—
"प्रमाणप्रमेयसंशय-प्रयोजनदृष्टान्त-सिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छल-जातिनिग्रहस्थानानां षोडशपदार्थानां तत्त्व-ज्ञानान्निःश्रेयसाधिगमः।" इति गौतमसूत्रे। १।

तत्त्वन्यासः, पुं, ( तत्त्वानां न्यासः । ) विष्णुपूजा-
विषयकन्यासविशेषः । यथा,—
"मातृकान्यासपर्य्यन्तं जीवात्मैक्यमयो वदेत् ।
नमः परायेत्युच्चार्य्य तत्त्वात्मने नमः ॥
जीवं प्राणं इयं प्रोक्ता सर्व्वाङ्गेषु प्रविन्यसेत् ।
ततो हृदयमध्ये च तत्त्वत्रयञ्च विन्यसेत् ॥
इत्यच्युतीक्ततनुर्विदधीत तत्त्व-
न्यासं सपूर्व्वकपराद्यरनत्युपेतम् ।
भूयः पराय च तदाह्वयमात्मने च
नत्यन्ततुद्धरतु तत्त्वमनुक्रमेण ॥
सकलतनुषि जीवं प्राणमायोज्य मध्ये
न्यसतु मतिमहङ्कारं मनश्चेति मन्त्री ।
कमुखरुदयगुह्याङ्घ्रिष्वथोशब्दपूर्व्वं
गुणमयमथ वर्णादिस्थितं श्रोत्रपूर्व्वम् ॥
वागादीन्द्रियवर्गमात्मनि तथैवाकाशपूर्व्वं गणं
मूर्द्धास्ये हृदये गिरे चरणयोर्हृत्पुण्डरीकं हृदि॥
पं बीजं हृत्पुण्डरीकमस्य हृदि प्रविन्यसेत् ।
इं बीजं सूर्य्यमण्डलतत्त्वं हृदि प्रविन्यसेत् ॥
सं बीजं चन्द्रमण्डलतत्त्वं तत्र प्रविन्यसेत् ।
रं बीजं वह्निमण्डलतत्त्वं तत्रैव विन्यसेत् ॥
यं बीजं परमेष्ठितत्त्वं वासुदेवञ्च मूर्द्धनि ।
यं बीजमथ पुंतत्त्वं सङ्कर्षणमथो मुखे ॥
लं बीजं विश्वतत्त्वञ्च प्रद्युम्नञ्च हृदि न्यसेत् ।
वं बीजं निवृत्तितत्त्वञ्च अनिरुद्धमुपस्थके ॥
लं बीजं सर्व्वतत्त्वञ्च पादे नारायणं न्यसेत् ।
क्ष्रौं बीजं कोपतत्त्वञ्च नृसिंहं सर्व्वगात्रके ॥
एवं तत्त्वानि विन्यस्य प्राणायामं समाचरेत् ॥"
अस्य फलं यथा,—
"तत्त्वन्यासं ततः कुर्य्यात् साधकः सिद्धिहेतवे ।
कृतेन येन देवस्य रूपतामेव यात्यसौ ॥"
इति गौतमीयतन्त्रम् ॥

तत्परः, त्रि, ( सः परोऽस्य । यद्वा, तदेव परं सर्व्वो-
त्तममस्य । ) आसक्तः । इत्यमरः । ३ । १ । ८ ॥
( यथा, भागवते । ४ । १५ । ६ ।
"एष साक्षाद्धरेरंशो जातो लोकरिरक्षया ।
इयञ्च तत्परा हि श्रीरनुजज्ञेऽनपायिनी ॥")

तत्परायणः, त्रि, ( तदेव परमयनमस्य । ) तदा-
सक्तः । यथा,—
"शुद्धा भवन्ति सर्व्वेऽप्यथवा: कृष्णपरायणाः ॥"
इति पद्मोत्तरखण्डम् ॥

तत्फलः, पुं, ( तदेव फलमस्य । यद्वा, तनोति तन्यते
वा । तन + क्विप् तुक् च । तत् विस्तृतं फलमस्य । )
कुवलयम् । कुष्ठनामौषधिः । चोरनाम-
सुगन्धिद्रव्यम् । इति धरणिः ॥

तत्र, इ कुटुम्बधारणे । इति प्राञ्चः । ( भ्वा-परं-
अकं-सेट् । ) द्वावेतौ धारणेऽर्थे वर्त्तेते । इति
चान्द्राः । केचित्तु कुटुम्बधातुमन्यमाहुस्तत्रि-
धातुः कुटुम्बस्य धारणेऽर्थे वर्त्तते इत्याहुः ।
तन्त्र धारणे इत्यनेनैवेष्टसिद्धे इदनुबन्धो वैदेशू-
चारणभेदार्थः । इति दुर्गादासः ॥

तत्र } इ वादे । मोदे । ( भ्वा-परं-अकं-सेट् । )
तद्र } इत्ययमर्द्धोपधः । तन्त्रीः । इत्ययमन्तःस्थोप-
धः । इति केचित् । तत्रीः । औष्ठ्यान्तवर्गीयचतुर्थमध्य । तन्द्रीः । औष्ठ्यादिरयम् ।
इति दुर्गादासः ॥

तत्र, इ क ङ धारणे । इति कविकल्पद्रुमः ॥
(चुरा-आत्म'-सकं-सेट् ।) आदिमध्यवोत्तकारः
शेषो रेफयुक्तः । धारणं धरणम् । भाषायामस्य
विस्तारणे प्रायः प्रयोगः । इ क ङ, तत्त्रयते
तत्रतु तत्त्वयाय: । इति दुर्गादासः ॥

तत्र, अ, ( तस्मिन्निति । तद् + "सप्तम्यास्त्रल् ।"
५।३।१० । इति त्रल् ।) तस्मिन् । तयोः । तेषु ।
इति व्याकरणम् ॥ सेखाने इति भाषा । ( यथा,
मनुः । २ । ११२ ।
"धर्म्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा ।
तत्र विद्या न वप्तव्या शुभं बीजमिवोषरे ॥" )

तत्रत्यः, त्रि, तत्र भवः । ( तद् + "अव्ययात्त्यप् ।"
४।२।१०४ । इत्यस्य "अमेहक्वतसित्रेभ्य एव ।"
इति वार्त्तिकोक्त्या त्यप् । ) तस्मिन्नुत्पन्नः । इति
मुग्धबोधव्याकरणम् ॥ ( यथा, कथासरित्-
सागरे । ५ । ८८ ।
"प्रागस्त्येव च तत्रत्यो जनोऽरोदीत् पुरी मम ॥")

तत्रभवान्, [ त् ] त्रि, ( इतराभ्योऽपि दृश्यन्ते
इति प्राग्दीव्यतीयः प्रथमार्थे त्रल् । ततः
सुप्सुपेति समासः ।) पूज्यः । इति जटाधरः ॥

तथा, अ, ( तेन प्रकारेण । तद् + "प्रकारवचने
थाल् ।" ५ ।३।२३ । इति थाल् । तेन प्रकारे-
णेत्यर्थः । यथा, मनुः । १ । ४ ।
"स तैः पृष्टस्तथा सम्यगमितौजा महात्मभिः ।
प्रत्युवाचार्च्च्य तान् सर्व्वान् महर्षीन् श्रूयता-
मिति ॥")
साम्यम् । इत्यमरः । ३ । ४ । ८ ॥ ( यथा,
मनुः । ६ । ९० ।
"यथा नदीनदाः सर्व्वे सागरे यान्ति संस्थितिम् ।
तथैवाश्रमिणः सर्व्वे गृहस्थे यान्ति संस्थितिम् ॥")
अभ्युपगमः । पृष्टप्रतिवाक्यम् । समुच्चयः ।
( यथा, देवीभागवते । १ । २ । २६ ।
"सपादलक्षञ्च तथा भारतं मुनिना कृतम् ।
इतिहास इति प्रोक्तं पञ्चमं वेदसम्मतम् ॥")
निश्चयः । इति मेदिनी । थे, ३६ ॥ ( यथा,
रघुः । १ । २९ ।
"तं वेधा विदधे नूनं महाभूतसमाधिना ।
तथा हि सर्व्वे तस्यासन् परार्थैकफला गुणाः ॥")

तथागतः, पुं, ( यथा पुनरावृत्तिर्न भवति तथा
तेन प्रकारेण गतः । यद्वा, तथा सत्यं गतं
ज्ञानं यस्य । सुप्सुपेति समासः । ) बुद्धः ।
इत्यमरः ।१।१।१३ ॥ ( यथा, सर्व्वदर्शनसंग्रहे ।
"यथा गतास्ते सुगताः शिवां गतिं
तथा गतिं सोऽपि गतस्तथागतः ॥" ॥
तथा तेन प्रकारेणागतः । ) पूर्व्वोक्तप्रकारेणा-
गते, त्रि ॥ ( यथा, महाभारते । ३।७७।५ ।
"ततो बभूव नगरे सुमहान् हर्षजः स्वनः ।
जनस्य संप्रहृष्टस्य नलं दृष्ट्वा तथागतम् ॥")

तथाच, अ, (तथा च, च च इति द्वन्द्वसमासः ।) पूर्व्वो-
क्तार्थदृढीकरणम् । इति संक्षिप्तसारव्याकरणम् ॥
( यथा, मनुः । ९ । १९ ।
"तथाच श्रुतयो बह्व्यो निगीता निगमेष्वपि ॥"
अव्ययद्वयेनैव सिद्धेः केचिदयं शब्दो न मन्यते ॥)

तथैव, अ, ( तथा च एव च । ) तद्वदेव । सेइ
प्रकार इति भाषा । यथा, चाणक्ये । ४२ ।
"अस्ति पुत्त्रो वशे यस्य भार्य्या भर्त्तुस्तथैव च ॥"
अव्ययद्वयेनैव सिद्धेः केचिच्छब्दोऽयं न मन्यते ॥)

तथ्यं, क्ली, ( तथा साधु । तथा + "तत्र साधुः ।"
४ । ४ । ९८ । इति यत् । ) सत्यम् । ( यथा,
मनुः । ८ । २७४ ।
"काणं वाप्यथवा खञ्जमन्यं वापि तथाविधम् ।
तथ्येनापि ब्रुवन् दाप्यो दण्डं कार्षापणावरम् ॥")
तद्वति त्रि । इत्यमरः । १ । ६ । २२ ॥ (यथा,
महाभारते । ७ । १५७ । ३ ।
"यदर्ज्जुनगुणांस्तथ्यान् कीर्त्तयानं वराधम ! ।
भूरिश्रवात् सुदुर्बुद्धे ! त्वं भर्त्सयसि मातुलम् ॥")

तदा, अ, ( तस्मिन् काले । "सर्व्वैकान्यकियत्तदः काले दा ।" ५ ।
३ । १५ । इति दा । ) तस्मिन् काले । इत्य-
मरः । ३ । ४ । २२ ॥ सेइ समये इति भाषा ॥
( यथा, मनुः । १ । ५५ ।
"न च स्वं कुरुते कर्म्म तदोत्क्रामति मूर्त्तितः ॥")

तदात्वं, क्ली, ( तदा इत्यस्य भावः । तदा + "तस्य
भावस्त्वतलौ ।" ५ । १ । ११९ । इति त्व । )
तत्कालः । वर्त्तमानकालः । इत्यमरः ।२।८।२९॥
( यथा, महाभारते । २ । ५९ । १४ ।
"स चोपभोगलोभान्धो हिरण्यार्थी परन्तप ! ।
आयतिञ्च तदात्वञ्च उभे सद्यो व्यनाशयत् ॥")

तदानीं, [ म् ] अ, ( तस्मिन् काले । "तदो
दा च ।" । ५ । ३ । १९ । इति चकारात्
दानीम् ।) तस्मिन् काले । इत्यमरः ।३।४।२२ ॥
( यथा, ऋग्वेदे । १० । १२९ । १ ।
"नासदासीन्नोसदासीत्तदानीं
नासीद्रजो नो व्योमा परो यत् ॥" )

तदामुखं, क्ली, ( तदा तस्मिन्नेव काले मुखं यस्य । )
आरम्भः । इति भूरिप्रयोगः ॥

तद्दिनं, [ म् ] अ, ( तत् प्रखरकिरणेन प्रसिद्धं
दिनं दिनांशः ।) दिनमध्यम् । (तत्तदेव दिनम् ।)
प्रतिदिनम् । इति हेमचन्द्रः ॥ (तदेव दिनम् ।)
पूर्व्वोक्तदिने, क्ली ॥

तद्धनः, त्रि, ( तदेव अल्पेनाधीनं धनं यस्य । )
कृपणः । इति हेमचन्द्रः । ३ । ३२ ॥ (तदेव
धनमिति विग्रहे पूर्व्वोक्तधने, क्ली ॥)

तद्बलः, पुं, ( तस्मिन् तस्मिन् एव बलं यस्य । )
बाणविशेषः । इति हेमचन्द्रः । ३ । ४४४ ॥

तन, उ कि उपकृतौ । अद्धाघाते । श्रद्धोपतापयोः ।
इति कविकल्पद्रुमः ॥ (चुरा पक्षे भ्वा-परं-अकं-
सकं च-सेट् । उदित्वात् क्त्वावेट् ।) उ, तनित्वा
तत्वा । कि, तानयति तनति । उपकृतिरुप-
कारः । अघातो हिंसावर्ज्जनम् । सुनीतिरिति
गोविन्दभट्टः । उपसर्गादिवशे । दैर्घ्यं दीर्घी-
करणम् । वितानयति यः कीर्त्तिं सितनव्यमल-
यशः । इति हलायुधः । इति दुर्गादासः ॥

तन, इ न उ विस्तृतौ । इति कविकल्पद्रुमः ॥ ( तना-उभं-सकं-सेट् । उदित्वात् क्त्वावेट् । ) इ न, तनोति तनुते पुरुषं व्याधिः । उ, तनित्वा तत्वा । इति दुर्गादासः ॥

तनयः, पुं, ( तनोति विस्तारयति कुलमिति । तन+"बलिमलितनिभ्यः कयन् ।" उणां । ४ । ६६ । इति कयन् । ) पुत्त्रः । इत्यमरः । २ । ६ । २७ ॥ ( यथा, रघुः । ३ । २१ ।
"रघुं द्विषन्तं तनयं स्वकीयं वरप्रदं तनयस्य च ॥")

तनया, स्त्री, ( तनोति कुलमिति । तन+कयन्+टाप् । ) कन्या । इत्यमरः । २ । ६ । २७ ॥ ( यथा, भागवते । १ । १६ । २ ।
"स उत्तरस्य तनयामुपयेमे इरावतीम् ॥")
घृतकुमारी । इति शब्दचन्द्रिका ॥

तनिष्ठः, त्रि, अयमनयोरतिशयेन तनुः । ( तनु +इष्ठन् । ) क्षुद्रः । इति व्याकरणम् ॥

तनीयान् [स्] त्रि, अयमेषामतिशयेन तनुः । ( तनु+ईयसुन् । ) अल्पः । इति व्याकरणम् ॥

तनुः, स्त्री, ( तनोति तन्यते इति वा । तन+"भृमृशीङ्तॄचरीति ।" उणां ।१।७। इति उः । ) शरीरम् । ( यथा, विष्णुपुराणे । १ । १७ । ५ ।
"देवाः स्वर्गं परित्यज्य तत्रासात् मुनिसत्तम ! ।
विचेरुरवनौ सर्वे बिभ्राणा मानुषीं तनुम् ॥")
त्वक् । इति मेदिनी । ने, ८ ॥ स्त्री । इति राजनिर्घण्टः ॥

तनुः, त्रि, ( तन+"भृमृशीति ।" उणां १ । ७ । इत्युः । ) अल्पः । विरलः । ( यथा, मनुः ।३।१० ।
"तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम् ॥")
कृशः । इति मेदिनी । ने, ८ ॥ ( यथा, आर्य्यासप्तशत्याम् । ५२५ । [गात्रि ! ॥")
"वितरन्ती रसमन्तर्मर्मार्द्रभावं तनोषि तनु-

तनुः, [स्] स्त्री, ( तनोति तन्यते वा । तन+"अर्त्तिपृवपियजितनिधनितपिभ्यो नित् ।" उणां २ । ११८ । इति उसिः स च नित् । ) शरीरम् । इत्युणादिकोषः ॥

तनुक्षीरः, पुं, ( तनौ क्षीरं मधुरनिर्य्यासो यस्य । ) आम्रातकः । इति राजनिर्घण्टः ॥

तनुच्छायः, पुं, ( तनुर्विरला स्वल्पा छाया यस्य । ) जालवर्व्वूरकवृक्षः । इति राजनिर्घण्टः ॥ ( तनोश्छाया । ) शरीरच्छायायां स्त्री स्त्री च ॥

तनुजः, पुं, ( तनोः शरीरात् जायते इति । जन +"अन्येष्वपि दृश्यते ।" ३ । २ । १०१ । इति डः । ) पुत्त्रः । इति हलायुधः ॥ ( यथा, पञ्चतन्त्रे । ५ । २२ ।
"स्वामी द्वेष्टि सुसेवितोऽपि सहसा
प्रोज्झन्ति सद्बान्धवा
दीव्यन्ते न गुणास्त्यजन्ति तनुजाः
स्फारीभवन्त्यापदः ।
भार्य्या शोभनवंशजापि भवति
नो यान्ति मित्राणि च
न्यायारोपितविक्रमानपि नरान् येषां
न हि स्यात्कृतम् ॥")

तनुजा, स्त्री, ( तनोः शरीरात् जायते इति । जन +डः+टाप् । ) कन्या । इति शब्दरत्नावली ॥

तनुत्रं, स्त्री, ( तनुं त्रायते इति । त्रै+"आतोऽनुपसर्गे कः ।" ३ । २ । ३ । इति कः । ) वर्म्म । इत्यमरः । २ । ८ । ६४ ॥

तनुत्राणं, स्त्री, ( त्रायतेऽनेनेति । त्रै+करणे ल्युट् । तनोः शरीरस्य त्राणम् । ) तनुत्रम् । इति हलायुधः ॥ ( यथा, महाभारते । ३ । १७४ । ४ ।
"इदञ्च मे तनुत्राणं प्रायच्छत्कवचं प्रभुः ॥")
शरीररक्षणञ्च ॥

तनुत्वचा, स्त्री, ( तनुः तन्वी त्वक् वल्कलमस्याः । ) क्षुद्राग्निमन्थः । इति राजनिर्घण्टः ॥

तनुपत्रः, पुं, ( तनूनि पत्राणि यस्य । ) इङ्गुदीवृक्षः । इति राजनिर्घण्टः ॥

तनुभस्त्रा, स्त्री, ( तनोः शरीरस्य भस्त्रा इव । निश्वासवायुनिर्गमात्तथात्वम् । ) नासिका । इति शब्दरत्नावली ॥

तनुरसः, पुं, ( तनोर्देहस्य रस इव तनोर्निर्गतो रस इति वा । ) घर्म्मः । इति हारावली ।१५४॥

तनुरुट्, [ह्] स्त्री, ( तनौ शरीरे रोहतीति । रुह+क्विप् । ) तनूरुहम् । इति शब्दरत्नावली ॥

तनुरुहं, स्त्री, ( तनौ रोहति उत्पद्यते इति । रुह+"इगुपधज्ञाप्रीकिरः कः ।" ३।१।१३५ । इति कः । ) तनूरुहम् । इति शब्दरत्नावली ॥

तनुलः, त्रि, ( तन्यते स इति । तन+उलच् । ) विस्तृतः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

तनुवातः, पुं, ( तनुः क्षीणो वातः वायुर्यत्र । ) नरकविशेषः । इति हेमचन्द्रः । ५ । २ ॥

तनुवीजः, पुं, ( तनु क्षीणं स्वल्पमात्रं वा वीजमस्य । ) राजबदरः । इति राजनिर्घण्टः ॥

तनुव्रणः, पुं, ( तनुः क्षुद्रः स्वल्पः व्रणो यत्र । ) वल्मीकरोगः । इति शब्दरत्नावली ॥

तनुसञ्चारिणी, स्त्री, ( तनु अल्पमात्रं यथा स्यात् तथा सञ्चरतीति । सम्+चर+णिनिः ङीप् च । ) बालिका स्त्री । इति शब्दमाला ॥

तनूः, स्त्री, ( तनु+ऊङ् । ) शरीरम् । इत्यमरः । २ । ६ । ७१ ॥

तनूकृतः, त्रि, ( अतनुस्तनुरकारि । कृ+कर्म्मणि क्तः । ) तष्टः । अल्पीकृतः । इत्यमरः ।३।१।६६॥

तनूजः, पुं, ( तन्वाः शरीरात् जायते इति । जन+डः । ) पुत्त्रः । इति जटाधरः ॥ ( यथा, रघुः । ५ । ५३ ।
"अवेहि गन्धर्व्वपतेस्तनूजं
प्रियंवदं मां प्रियदर्शनस्य ॥"
स्त्री, कन्या । )

तनूनपं, स्त्री, ( तन्वा कृशं क्षयं पातीति । पा+कः । ) घृतम् । इति शब्दचन्द्रिका ॥

तनूनपात्, [द्] पुं, ( तनूनपं घृतं अत्तीति । अद्+विच् जग्धिरादेशे । यद्वा, तनूं स्वशरीरं न पातयतीति । पत+णिच्+क्विप् ।"नभ्राण्नपात् ।" ६ । ३ । ७५ । इति निपातितः । ) अग्निः । ( यथा, ऋग्वेदे । १ । १३ । २ ।
"तनूनपाद्यज्ञमिमं मधुमन्तं कविः ॥"
"तनूनपाद्धव्यवाहः शरीरे गच्छति ॥")
चित्रकवृक्षः । इत्यमरः । २ । ४ । ८० ॥

तनूरुहं, स्त्री, ( तन्वां रोहतीति । रुह+कः । ) रोम । ( यथा, भागवते । ७ । ८ । ३१ ।
"वक्त्रांशुभारैस्तुतिरेतनूरुहं-
विद्राव्य सुराणीकतलं नखायुधम् ॥"
तथाच शिवपुराणे । वायुसंहितायाम् ।१।१४ ।
"चमत्कारं तं दृष्ट्वा पुलकाञ्चिततनूरुहः ॥")
पतत्रम् । इति मेदिनी । हे, ३० ॥

तनूरुहः, पुं, ( तन्वाः शरीरात् रोहति उत्पद्यते । रुह+कः । ) पुत्त्रः । गरुत् । ( यथा, हृहत्संहितायाम् । ६३ । १ ।
"कुक्कुटस्य कुङ्कुमतनूरुहाकृति-
र्मालाङ्कतलतमनखप्रिमाण्डिकः शिखः ॥")
लोम । इति हेमचन्द्रः ॥

तनूद्भवः, पुं, ( तन्वाः तन्वां वा उद्भवः । ) पुत्त्रः । इति त्रिकाण्डशेषः ॥

तनूप, उ इ लौ । इति कविकल्पद्रुमः ॥ ( स्वा-परं-सकं-सेट् । ) उ, तन्त्रित्वा ताक्षा । इति दुर्गादासः ॥

तनृच, उ घ सकुचि । इति कविकल्पद्रुमः ॥ ( स्वा-परं-अकं-सेट् । ) उ, तञ्चित्वा तक्षा । घ, तनचमि व्योम विस्तृतम् । इति दुर्गादासः ॥

तनृण, उ घ सङ्कोचे । इति कविकल्पद्रुमः ॥ ( स्वा-परं-अकं-सेट् । ) उ, तञ्चित्वा तक्षा । घ, तनणमि व्योम विस्तृतम् । इति दुर्गादासः ॥

तन्तुः, पुं, ( तन्यते विस्तीर्य्यते इति तनोति वा । तन+"सितनिगमिति ।" उणां १ । ७० । इति तुन् । ) सूत्रम् । इत्यमरः ।२।१०।२८ ॥ ( यथा, महाभारते । १२ । ४७ । २२ ।
"यस्मिन् नित्यं तते तन्तौ दृढं स्रगिव तिष्ठति ॥")
ग्राहः । इति हेमचन्द्रः ॥ सन्ततिः । यथा,—
"धाम्नात्मनः सर्व्वभूतानामात्मा योगेश्वरो हरिः ।
स्वमायया ह्यसृजत्तन्त्वं वैराज्याः कुरुतन्तवे ॥"
इति श्रीभागवतम् ॥

तन्तुकः, पुं, ( तन्तुरिव तन्तुनेव वा कायतीति । कै+कः । तन्तु+संज्ञायां कन् वा । ) सर्षपः । इत्यमरटीकायां रमानाथः ॥ ( यथा, सुश्रुते कल्पस्थाने ४ अध्याये । "पिङ्गलस्तन्तुकपुष्पपाण्डुः षड्गोऽधिको वभ्रुकषायः ॥")

तन्तुकाष्ठं, स्त्री, ( तन्तुसमन्वितं काष्ठम् । ) तूली । इति शब्दरत्नावली ॥ ताँतेर काठ इति भाषा ॥

तन्तुकी, स्त्री, ( तन्तुरिव कायतीति । कै+कः ङीप् च । ) नाडी । इति राजनिर्घण्टः ॥

तन्तुकीटः, पुं, ( तन्तूत्पादकः कीट इति शाकपार्थिववत् मध्यपदलोपी समासः । ) कोषकारः । इति जटाधरः ॥ गुटिपोका इति भाषा ॥

तन्तुणः, पुं, ( तन+बाहुलकात् तुणन् निपातनात् वर्णं हन्यनकारत्वं च्छत्वं च । ) ग्राहः । इति हेमचन्द्रः ॥ हाङ्गर इति भाषा ॥

तरः, पुं, ( तॄ तरणे + “ऋदोरप् ।” ३।३।५७। इति अप् । ) तरणम् । ( यथा, मनुः । ८ । ४०४ ।
“पणं यानं तरे दाप्यं पौरुषोऽर्द्धपणं तरे ॥”)
क्षयातुः । इति मेदिनी । रे, ४० ॥ वेगः । इति भूरिप्रयोगः ॥ (“तरतमौ द्विबहूनामेकोत्कर्षे ।” इति मुग्धबोधकव्याकरणात् प्रत्ययविशेषश्च ॥)

तरः, [ स् ] क्ली, ( तॄ प्लवनतरणयोः + करणादौ यथायथं असुन् । ) बलम् । ( यथा, रघुः । ११ । ७७ ।
“तिष्ठतु प्रधनमेवमप्यहं तुल्यबाहुतरसा जितस्त्वया ॥” )
वेगः । तीरम् । प्लवगः । इति शब्दरत्नावली ॥

तरक्षः, पुं, (तरक्षु + पृषोदरात् उलोपः ।) तरक्षुः । इत्यमरटीकायां भरतः ॥ ( यथा, उत्तररामचरिते ।
“शैलकुञ्जे तरक्षवोऽपि घोरं सदा गर्जन्त्याधुनि ॥”)

तरक्षुः, पुं, ( तरं बलं मार्गं वा क्षिणोति । क्षिणु हिंसायाम् + मितद्व्वादित्वात् डुः । ) व्याघ्रविशेषः । नेकडे बाघ इति भाषा ॥ तत्पर्य्यायः । तक्षुः २ मृगादनः ३ तरक्षुकः ४ । इति शब्दरत्नावली ॥ (यथा, हरिवंशे । १६३ । १४ ।
“ततो मायां परां चक्रे देवशत्रुः प्रतापवान् ।
सिंहान् व्याघ्रान् वराहांश्च तरक्षूंश्च वानरान् ॥”)

तरक्षुकः, पुं, ( तरक्षु + स्वार्थे कन् । ) तरक्षुः । इति शब्दरत्नावली ॥

तरङ्गः, पुं, ( तरति प्लवते इव । तॄ + “तरत्यादिभ्यश्च ।” उणां । १ । ११९ । इति अङ्गच् । ) वायुना नद्यादिजलस्य तिर्य्यगूर्द्ध्वगमनम् । ढेउ इति भाषा ॥ तत्पर्य्यायः । भङ्गः २ ऊर्म्मिः ३ वीचिः ४ । इत्यमरः ॥ ऊर्म्मी ५ वीची ६ विचिः ७ लहरी ८ हल्ली ९ विलिः १० । इति भरतः ॥ लहरिः ११ । इति सारसुन्दरी ॥ जललता १२ भङ्गिः १३ । इति हारावली ॥ उत्कलिका १४ ऊर्म्मिका १५ । इति जटाधरः ॥ वस्त्रम् । हयादीनां समुत्फालः । इत्युणादिकोषः ॥

तरङ्गिणी, स्त्री, ( तरङ्गो वीचिरस्त्यस्या इति । तरङ्ग + “अत इनिठनौ ।” इति इनिः । ) नदी । इत्यमरः । १ । १० । ३० ॥ ( यथा, माघः ।
“तरङ्गिणी वेणिरिवायता भुवः ॥” )

तरणं, क्ली, ( तॄ + भावे ल्युट् । ) प्लवनपूर्ब्बकदेशान्तरगमनम् । इति दुर्गादासः ॥ पारगमनम् । सन्तरणम् । यथा, मोहमुद्गरे । ६ ।
“क्षणमपि सज्जनसङ्गतिरेका
भवति भवार्णवतरणे नौका ॥”

तरणः, पुं, ( तीर्य्यतेऽनेनेति । तॄ + करणे ल्युट् । ) भेलकः । इति त्रिकाण्डशेषः ॥ स्वर्गः । इति शब्दचन्द्रिका ॥

तरणिः, स्त्री, ( तीर्य्यतेऽनयेति । तॄ + “अर्त्तिसृधृधम्यश्यवितॄभ्योऽनिः ।” उणां । २ । १०३ । इति अनिः । ) नौका । ( यथा, आर्य्यासप्तशत्याम् । ६९० ।
“कामसुखावति तरणिक्लदपि सुधाकर्षतरङ्गेयम् ॥”)
घृतकुमारी । इत्यमरः । ४ । २ । ७३ ॥

तरणिः, पुं, ( तरति पापमनेनेति । तॄ + अनिः ।) सूर्य्यः । ( यथा, देवीभागवते । ३ । ६ । २८ ।
“इत्युक्ता तरणिः क्षिप्रं सम्पन्नां सुमणितताम् ।
भुक्त्वा जगाम देवेशो वरं दत्त्वाभिवाञ्छितम् ॥”)
अर्कवृक्षः । इत्यमरः ॥ भेलकः । ( यथा, बोपदेवप्रशंसाश्लोकः ।
“सोऽयं व्याकरणार्णवैकतरणिस्तत्त्वार्थचिन्तामणि-
र्जीयात् कोविदगर्व्वपर्व्वतपविः श्रीबोपदेवः कविः ॥” )
किरणः । इति हेमचन्द्रः ॥

तरणिपेटकः, पुं, (तरणिः पेटक इव । ) काष्ठाम्बुवाहिनी । इति जटाधरः ॥

तरणिरत्नं, क्ली, ( तरणिः सूर्य्यस्तत्प्रियं रत्नम् । ) माणिक्यम् । इति राजनिर्घण्टः ॥

तरणी, स्त्री, (तरणिः । कृदिकारादिति वा ङीष् ।) नौका । इति शब्दरत्नावली ॥ पद्मचारिणी । इति शब्दचन्द्रिका ॥ घृतकुमारी । इत्यमरटीकायां भरतः ॥

तरण्डः, पुं, स्त्री, (तरति प्लवत इति । तॄ प्लवनतरणयोः + बाहुलकात् अण्डन् । ) । वडिशीसूत्रबद्धकाष्ठादि । प्लवः । नौका । इति मेदिनी । डे, २९ ॥ कुम्भतुम्बीरम्भादिसङ्घः । इति शब्दरत्नावली ॥

तरण्डः, पुं, देशविशेषः । इति शब्दरत्नावली ॥

तरण्डपादा, स्त्री, ( तरण्डः प्लवनशीलः पादः प्रायेण तुरीयांशो यस्याः । ) नौका । इति शब्दरत्नावली ॥

तरण्डी, स्त्री, (तरत्यनयेति । तॄ + अण्डन् । गौरादित्वात् ङीष् ।) नौका । इति शब्दरत्नावली ॥ ( तरण्डा । इति हारावलीधृतपाठः । ५५ ॥ )

तरत्, [ द् ] स्त्री, ( तरत्यनेनेति । तॄ + बाहुलकाददिः । ) प्लवः । ( तरतीति । तॄ + कर्त्तरि अदिः ।) कारण्डवपक्षी । इति मेदिनी । दे, २९ ॥

तरटी, स्त्री, कण्टकिवृक्षभेदः । तत्पर्य्यायः । तारटी २ तीव्रा ३ खर्व्वुरा ४ रक्तबीजका ५ । अस्या गुणाः । तिक्तत्वम् । मधुरत्वम् । गुरुत्वम् । वश्यत्वम् । कफनाशित्वञ्च । इति राजनिर्घण्टः ॥

तरन्तः, पुं, ( तरतीति । तॄ + “तॄभूवहिवसीति ।” उणां । ३ ।१२८। इति झच् ।) भेकः । आसारः । ( तीर्य्यते इति । + कर्म्मणि झच् । ) समुद्रः । इत्युणादिकोषः ॥

तरन्ती, स्त्री, ( तीर्य्यतेऽनयेति । तॄ + झच् । ततो ङीष् । ) तरिः । इत्युणादिकोषः ॥

तरपण्यं, क्ली, ( तॄ + भावे अप् । तरस्तरणं तस्य पण्यम् । ) आतरः । इत्यमरः । १ । १० । ११ ॥ नौका भाड़ा इति भाषा ॥

तरमुजं, क्ली, ( तरं तरणं अमुवत् आचरति जल + बहुलवचनात् डः ।) फलविशेषः । तरमुज इति ख्यातः । यथा, उत्तरकाशीखण्डे ।
“ज्येष्ठे मासि महेशानि । पौर्णमास्यां विशेषतः ।
तृष्णातुरा महाकाली भ्रमन्ती पिप्पलानने ॥
तत्प्रीत्यै भक्त्या तस्यै फलं दत्त्वा तरमुजम् ।
तत्फलभक्षणात्तृप्ता वरदा सा हरप्रिया ॥
यो मे दद्यात् फलं देव्यं स चिरायुश्चतुर्युगम् ॥”

तरलः, पुं, ( तॄ + “वृषादिभ्यश्चित् ।” उणां । १ । १०८ । इति कलप्रत्ययश्चित्वञ्च ।) हारः । हारमध्यमणिः । ( यथा, महाभारते । ८ । ९४ । १९ ।
“प्रकीर्णका विप्रकीर्णाश्च राजन् !
प्रवालमुक्तातरलाश्च हाराः ॥”)
तलम् । इत्यजयपालः ॥ ( जनपदविशेषः । तद्देशवासिनि बहुवचनान्तः । यथा, महाभारते । ८ । ८ । २० ।
“मत्स्यान् कलिङ्गान् तरलानङ्गकाङ्गविषा-
नपि ॥”)

तरलः, त्रि, ( तॄ + कलच् । ) चलः । ( यथा नैषधे । ५ । २४ ।
“अथः स्वभावमधुरैरनुभावै-
स्तावकैरतितरां तरलाः स्मः ॥”)
पिङ्गः । भास्वरः । इति मेदिनी । ले, ९५ ॥ मध्यशून्यनयम् । इति धरणिः । द्रवीभूतञ्च ॥

तरललोचना, स्त्री, (तरले चञ्चले लोचने यस्याः ।) चञ्चलनयना नारी । इति हेमचन्द्रः ॥

तरला, स्त्री, ( तॄ + कलच् टाप् च । ) यवागूः । सुरा । इति मेदिनी । ले, ९६ ॥ मधुमक्षिका । इति हेमचन्द्रः ॥

तरलितं, त्रि, (तरलं तारल्यमस्य जातम् । तरल + इतच् । तरल इवाचरति तारलं करोतीति तरल + क्विप् + णिच् + क्त इति केचित् । ) जाततारल्यम् । तत्पर्य्यायः । प्रेङ्खोलितम् २ लुलितम् ३ प्रेङ्खितम् ४ द्रुतम् ५ चलितम् ६ कम्पितम् ७ धूतम् ८ वेल्लितम् ९ आन्दोलितम् १० । इति हेमचन्द्रः ॥ (यथा, गीतगोविन्दे । १२ । १५ ।
“व्यालोलः केशपाशस्तरलितमलकैः स्वेदलोलौ कपोलौ ॥”)

तरवारिः, पुं, ( तरं समागतविपक्षबलं वारयतीति । तॄ + णिच् + इन् । ) खड्गः । तरवार इति भाषा । इति हेमचन्द्रः । ३ । ४४५ ॥

अथ खड्गपरीक्षा ।
“अङ्गं रूपं तथा जातिर्नेत्रारिष्टे च भूमिका ।
ध्वनिर्मानमिति प्रोक्तं खड्गज्ञानाष्टकं शुभम् ॥
अभिन्ने दृश्यते यादृक् विभिन्ने घटते तथा ।
यदेव दृश्यते चिह्नं तदङ्गं संप्रचक्षते ॥
नीलश्यामादिकं खड्गे रूपमित्यभिधीयते ।
तेनैव यत् प्रतीतं स्यात् तज्जातिरिति गद्यते ॥
अङ्गातिरिक्तं यज्जातिश्याद्यरूपकञ्चकम् ।
तन्नेत्रमिति जानीयात् खड्गे खड्गविशारदः ॥
अङ्गातिरिक्तं खड्गादिषु बुद्बुदाद्यरूपकम् ।
तदरिष्टमिति प्राहुर्भूमिरङ्गादिधारणम् ॥

य: खड्गे जायते शब्दो गजदन्तादिनादवत् ।
स भूमिगुणनामानं ज्ञानमष्टविधश्चिदम् ॥
पञ्चाशा निपुणै: खड्गे सम्पन्नोऽपि लक्षिता:।
अस्याङ्गानि गुणैः साधैव सहजानिति ॥
शतमङ्गानि चत्वारि रूपाणि जातयस्तथा ।
चिह्नभेदानि जातीयादरिष्टानि तथैव च ॥
भूमिश्च द्विविधा ज्ञेया धनिरष्टविधो मत: ।
मानन्तु द्विविधं प्रोक्तमित्येवं संग्रहो मत: ॥”॥
अथ खड्गस्य शताङ्गलक्षणं लौहार्णवे ।
“कश्यपवर्णगजोत्पन्नरूदमनस्सूलाङ्गच्छायाख्य-श्वेता-
श्रोणगदालिनामककम्बुभस्त्रिशिरातैत्तिरा: ।
मालाजीरकपट्पदीर्हमरिचपालाम्बवर्णाङ्गन-
चौरसुकमलश्रिकातुंबयवश्रीद्विभुमायसैपा: ॥
सिंहरैलकुम्भोंऽशिराश्रिवनखण्यामराचि कैश्यपल-
श्रोणीकाककपालयवसुवर्णावेल्लीफलीवर्षमा: ।
लोजीरलवचारश्रीमसुमनाशिञ्जीणमीरोहित-
श्रोणीमारिचमार्जाराखरतङ्गिर्कीवामिशुङ्गाधरा:॥
कूर्माचिलमत्स्यटुण्डुकपटीमार्जारिकाकेतकी-
कर्कालचलकचायचम्पककमलाम्बयोधर्वशाखना: ।
श्चेलीनागमिपीलिकानगरज: कुम्भाण्डरोम-
सूची
कर्केन्दुस्वेकुचारनागमश्रिवस्त्रच्छत्रांशका इति ॥
प्रोक्ता लौहविशारदेन मुनिना खड्गस्य भेदा:
क्रमात् ॥”
अथ तस्य चत्वारि रूपाणि ।
“नील: कृष्ण: पिशङ्गश्च धूम्रश्चेति चतुर्विध: ।
वर्णप्रकर्ष: खड्गानां कथितो मुनिपुङ्गवै: ॥”
अथ चतस्रो जातय: ।
“ब्राह्मण: क्षत्रियो वैश्य: शूद्रश्चेति चतुर्विध: ।
जातिभेदो विनिर्द्दिष्ट: खड्गानां मुनिपुङ्गवै: ॥”
अथ चिह्नभेदानि ।
“चक्रं पद्मं गदा शङ्खो डमरुश्चाङ्कुश: ।
छत्रं पताका वीणा च मत्स्यलिङ्गध्वजेन्दव: ॥
कुम्भ: शूलश्च शार्दूल: सिंह: सिंहासनं गज: ।
हंसो मयूरो जिह्वा च दम्भ: खड्ग एव च ॥
पुत्रिका चामरं शैल: पुष्पमाला भुजङ्गम: ।
चिह्नदेतानि भेदानि खड्गानां कथितानि वै ॥”
अथ चिह्नदरिष्टानि ।
“छिद्रं काकपदं रेखा भिन्नं भेकश्च कृमिका: ।
बिडाल: शर्करा नीली मधुको भृङ्गधूमिके ॥
त्रिबिन्दु: कालिका दारी कपोत: काक एव च ।
खर्पर: शुकको क्रोडो कुशपत्रकवालिके ॥
कराळकङ्कखर्जूरशङ्कपुच्छकनिकम् ।
लाङ्गलं वडिशाख्यञ्च मुनिना तत्त्ववेदिना ॥
प्रोक्तान्येतान्यरिष्टानि खड्गानां चिह्नदेव हि ॥”
अथ द्विविधा भूमि: ।
“दिव्यभौमविभागेन भूमिस्तु द्विविधा भवेत् ।”
अथाष्टधा ध्वनि: ।
“कंसकांस्याशटकानां काहलस्त्रीवराक्षणाम् ।
ध्वनयोऽष्टविधा: प्रोक्ता नानाशृङ्गसुवेत्तसा: ॥”
अथ द्विविधं मानम् ।
“उत्तमाधमभेदेन मानं तद्द्विविधं भवेत् ।

इति प्रोक्तानि रूपाणि खड्गानां शाकवेदिनि ॥
एतानि तत्त्वतो ज्ञात्वा भवेन्नृपतिपूजित: ॥”
इति खड्गाध्याय: ॥ * ॥
तत्र प्रथमतोऽङ्गानां लक्षणानि निबोधत ॥
लौहप्रदीपे ।
“कश्यपवत्समा भूमिरङ्गं श्वेतं प्रतीयते ।
कर्द्ध तन्तु मध्यात्तं कश्यपमनुवन्ति तम् ॥
एष खड्गवरो दद्यान्नश्रीमायुर्यशो बलम् ॥१॥
स्वर्णरेखा वक्री तन्वी यद्भूमौ निकषोपमा ।
स्वर्णवत्त्वमिति प्राहुरायुर्लक्ष्मीजयप्रदम् ॥२॥
गजमुक्ताकृतिर्भूमौ छायायामङ्कवन्मत: ।
गजवत्त्वमिति प्राहू रक्तवर्णे तु तद्भवेत् ॥
ज्वरादिव्याधिशमनं तस्य प्रक्षालनाम्भसा ।
अपि चौर्योऽपि भूयान्नशृङ्गैरात् साधयेन्
महीम् ॥३॥
स्वच्छबीजप्रतिममङ्गं भूमि: सितेतरा ।
बहुपत्रमिदं नाम्ना प्राहुदर्पच्छयङ्कर: ॥
एतस्य स्पर्शमात्रेण नर: सम्यग्विमुच्यते ।
मण्डिमाख्यमिदं वर्णं केचिदाहुर्मनीषिण: ॥४॥
अङ्गं दमनपत्राभं खड्गे यस्मिन् प्रतीयते ।
विद्याद्दमनवत्त्वञ्च तज्ज्ञेयं द्विविधं बुधै: ॥
नीला शुभ्रा भवेद्भूमिस्तत्र नीला गरीयसी ।
तस्मिन् मधुंषितं तोयं गन्धे दमनकोपमम् ॥
तत्प्रभावान्महीपाल: कृत्स्नां पृथ्वीं हि साध-
येत् ॥५”॥
शार्ङ्गधरस्य ।
“एका स्थूला सिता रेखा भूमिर्नीला दृढा यदि ।
स्थूलाङ्गमङ्गवत्त्वं तद्विद्याल्लक्ष्मीयश:प्रदम् ॥
एतत्प्रति भवेत्क्रोध: स्थूलश्चिरतरस्थिति: ।
एतं मध्यान्तमपरे वदन्ति खड्गकोविदा: ॥६॥
छायायां दृश्यते भूमौ अङ्गञ्च प्रतिबिम्बितम् ।
अङ्गवत्त्वं भवेत्तस्य द्विधाभूमि: सितासिता ॥७”॥
लौहप्रदीपेऽपि ।
“गिरङ्गं कश्यपत्राभमीषच्छ्रिनिभञ्च यत् ।
दुर्लभं तन्महानन्दं कान्तलौहं प्रचक्षते ॥
कृष्णा भूमिर्भवेत् स्वच्छा पीता वज्राङ्गसङ्गता ।
हाणवत्त्वमिति प्राहुस्तत्प्रति मोक्ष उच्यते ॥”
प्रदीपेऽपि ।
“कृष्णा भूमि: सुवर्णाभमीषच्छुक्लाङ्गसङ्गतम् ।
डाहुलीवत्त्वकं विद्यात् कालसंज्ञमथापरे ॥८॥
स्वर्णं कश्यमङ्गं चेदङ्गं भूमि: सितेतरा ।
स्वर्णाख्यमिदं वर्णं प्राहुदर्पनिकृन्तनम् ॥
स्वर्णांशुस्पर्शमात्रेण वह्निरूपा वमेत् शिखाम् ।
तस्य स्पर्शनमात्रेण पद्मकोष: स्फुटेन्निशि ॥
दुर्लभं तन्मनुष्याणां भाग्यै: क्वापि लभ्यते ।
तद्योजनवरस्य रिपुं नाशयति ध्रुवम् ॥९॥
श्वेताश्लिष्टो यदा रेखा आमूलादुपलक्ष्यते ।
श्वेताङ्गमिति तद्विद्यादृश्यश्रीलक्ष्मीबलप्रदम् ॥१०॥
अम्भोजदलसङ्काशमङ्गं भूमि: सितेतरा ।
अम्भोजवत्त्वं तज्ज्ञेयं कथितं मुनिपुङ्गवै: ॥११॥
अङ्गं यस्य गदाकारं भूमिश्चैव सितेतरा ।
गदावत्त्वमिदं भूयात् तत्प्रति शूलकम्पव: ॥१२॥

अङ्गं कथलिजाकारं भूमिश्चैव सितासिता ।
तिलवत्त्वमिदं ज्ञेयं लक्ष्मीविजययश:प्रदम् ॥
तत्प्रति तिलतैलाभा वसा प्रस्रवतेऽनिशम् ॥१३॥
धूम्रवर्णा भवेद्भूमिरङ्गं वह्निशिखोपमम् ॥
अग्निवत्त्वमिदं ज्ञेयं धूम्रवर्णं दाहकारकम् ।
अत्र शीतोदकं न्यस्तं तप्तं भवति च क्षणात् ॥
प्राणी वह्निं नमेद्यस्तु तथा स्पर्शांशुसङ्गमात् ।
तत्प्रति बलवान् दाहो दग्धवच्च व्रणो भवेत् ॥
एतत् परमभाग्येन लभ्यते धरणीतले ॥१४॥
भूमि: सिता तिला वापि अङ्गञ्चेत् पिप्पली-
प्रभम् ॥
कणावत्त्वमिदं ज्ञेयमन्तर्दाहस्तु तत्प्रति ॥१५॥
कृष्णाभूमिर्यदैवाङ्गे दृश्यते यस्थिसञ्चय: ॥
यस्थिवत्त्वमिदं ज्ञेयं वैरियन्त्रविनाशनम् ।
तत्प्रति बलवान् दाहकृपा च ज्वर एव च ॥१६॥
प्रासादवर्णैदलाकारमङ्गं कृष्णाधिपुष्यिका ।
स्थिरावत्त्वमिदं प्राहुस्तत्प्रति वेपथुर्भवेत् ॥१७॥
यदा तित्तिरिपक्षाभमङ्गं भूमि: सितेतरा ।
एतत्तित्तिरिवत्त्वं स्यात् तत्प्रति बहुवेदनम् ॥१८॥
घनमालासमा यस्मिन् माला खड्गे प्रदृश्यते ।
मालाङ्गमिति तद्विद्यात्तत्तोयं गन्धवद्भवेत् ॥
अत्र तप्तोदकं न्यस्तं शीतं भवति तत्क्षणात् ।
एष दाहपरीतानाम्मते पित्तज्वरातुरानाम् ॥
भवेत् परमभैषज्यं भाग्यैनैतद्धि लभ्यते ॥१९॥
यदा जीरकसङ्काशमङ्गं भूमि: सितासिता ॥
एतज्जीरकवत्त्वं स्यात्तत्प्रति तत्क्षणाज्ज्वर:॥२०॥
भूमि: सितासितश्चैव अङ्गं भृङ्गाभमिष्यते ॥
तत्र चैकध्यमन्यस्तं शोषमाप्नोति केवलम् ।
एतद्भ्रमरवत्त्वं स्यात्तत्प्रति स्याद्विषूचिका॥२१॥
ऊर्द्धगं कपिलाभासमङ्गं यस्मिन् प्रतीयते ।
ऊर्द्धवत्त्वमिदं प्राहुर्विपक्षेगनिकृन्तनम् ॥”
लौहप्रदीपेऽपि ।
“ऊर्द्धगं कपिलाभासमङ्गं यस्मिन् प्रतीयते ।
लाङ्गलाङ्गन्तु तद्विद्यात् स्पर्शे तस्याश्विनाशनम् ॥
२२ ॥
अङ्गं मरीचसङ्काशं भवेद्भूमि: सितेतरा ।
मरीचाङ्गमिदं वर्णं तत्प्रति कटुरक्तता ॥
तत्प्रक्षालनतोयेन नश्यन्ति पीनसादय: ॥२३॥
यदा सर्पफणाकारमङ्गं भूमिस्तु निर्म्मला ॥
भुजङ्गवत्त्वं तद्विद्यात्तत्प्रति विषवद्रुजा ।
तस्य स्पर्शनमात्रेण भेक: प्राणैर्विमुच्यते ॥
एकस्यास्य प्रसादेन कृत्स्नां प्राप्नोति महीं नृप: ।
२४ ।
यदाश्वखुरसङ्काशमङ्गं भूमिस्तु निर्म्मला ॥
अश्वाङ्गमिति तं विद्यात् खड्गं परमदुर्लभम् ।
तस्य संयोगमात्रेण वाजी मन्दोऽपि धावति ॥
तस्य क्षालनतोयेन ह्यश्वानां रोगनाशनम् ।
एतत्प्रति भ्रमो मूर्च्छा दाहश्च भ्रम एव च ॥२५॥
मयूरपिच्छसदृशमङ्गं भूमि: सितेतरा ।
बर्हाङ्गमिति तं विद्यात्तत्प्रति वान्तिरिष्यते ॥
सर्पाणामिह सर्व्वेषामस्य स्पर्शाद्विषाकुला ।
एतदेव हृपतिभिर्भाग्यै: क्वापि लभ्यते ॥२६॥

भूमिरञ्जनसङ्काशा धारा चास्य सिता भवेत् ।
अञ्जनाख्यमिदं प्रायः सर्व्वदैवोपलभ्यते ॥”
लौहप्रदीपेऽपि ।
“धारा शुभ्रा भवेद्यस्य भूमिः कज्जलसन्निभा ।
छायया कृष्णितं वापि विद्यात् कज्जलखड्गकम् ॥२७॥
मधुवर्णसमा भूमिरङ्गं वा मधुबिन्दुवत् ।
क्षौद्राङ्गमिति जानीयात् जयलक्ष्मीयशःप्रदम् ॥”
शार्ङ्गधरेऽपि ।
“निष्कलङ्को भवेद्यस्य राजिभिश्चित्रितो भवेत् ।
मधुरो मधुवर्णाभः स खड्गो देववल्लभः ॥
विलीयाचाप दृश्यन्ते सततं मक्षिकादयः ।२८।
आलीमकोषिका यस्य क्षुद्राङ्गं कुक्कलीलतम् ॥
क्षुद्रपद्मकनामानं प्राह नागार्ज्जुनो मुनिः ।
इदं कुक्कलपद्मञ्च प्राह लौहार्णवे मुनिः ॥
अस्य चतेषु बलवान् दाहः समवलोकितः ।२९।
यदङ्गं मक्षिकाकारं भूमिश्चैव सितासिता ॥
क्षेदः शुष्यति चैवास्य मक्षिकाङ्गं समादिशेत् ।३०।
अङ्गं यदा तुषाकारं या च भूमिः सितासिता ॥
तुषचञ्चमिदं ख्यातं प्राह नागार्ज्जुनो मुनिः ।३१।
अङ्गं यवफलाकारं भूमिः कृष्णा सिता तथा ॥
यवाङ्गमिति तं विद्यात्तत्स्पर्शं काञ्चनप्रभः ।
एष खड्गाधमश्चाप्यो यदीच्छेद्भूतिमात्मनः ।३२।
अङ्गं व्रीहिप्रसूनाभं भूमिर्धूम्रा सिताऽसिता ।
तद्व्रीहिचञ्चं जानीयाच्छत्रूणां भयवर्द्धनम् ३३ ॥
अतसीफलसङ्काशमङ्गं भूमिः सितासिता ।
अतसीचञ्चमाहुस्तं तत्स्पृशेत् शिरसो रुजा ३४ ॥
यदा सर्षपबीजाभमङ्गं भूमिः सितासिता ।
खरधारः खरस्पर्शः सर्षपाङ्गः स दुर्लभः ॥३५॥
सिंहाकारं भवेद्यस्य चाङ्गं भूमिः सितासिता ।
सिंहीचञ्चन्तु तद्विद्यात्तत्स्पृशेत् प्रजापतिः ॥
एतद्भावनतोयेन कायरोगोपनाशनम् ॥३६॥
अङ्गं तण्डुलसङ्काशं भूमिर्धूम्रा सितासिता ।
तण्डुलाङ्गमिमं विद्याद्यशःश्रीबलवर्द्धनम् ।
एतत्पर्य्युषितं तोयं तण्डुलोदकसन्निभम् ॥
अस्य प्रभावान्मनुजो अर्थं हि लभते श्रियम् ॥३७
अङ्गञ्चेत्क्षुराकारं भूमिराघातनिःस्वना ॥
खड्गाधममिदं विद्यात्क्षौरञ्चं नाम नामतः ॥३८॥
रेखा दीर्घाः शिराः कृष्णा भूमिश्चैव सिता-
सिता ॥
शिराङ्गमिति तं ब्रूयादेनं खड्गाधमं बुधाः ।३९।
शिवलिङ्गाकृतिश्चाङ्गे धारा चैव सिताथवा ॥
शिवाङ्गमिति तं ब्रूयाच्छत्रुपक्षनिसूदनम् ॥४०॥
यदा श्वानखाकारमङ्गं भूमिस्तु पिङ्गला ॥
नखचञ्चमिदं ब्रूयात्तत्स्पृशेत् श्वयथुर्भवेत्,
एतद्दामिषसंस्पर्शात् प्रविशेत् स्वयमेव हि ॥४१॥
व्याघ्रपुच्छोपमञ्चाङ्गं भूमिर्धूम्रा खराकृतिः ।
व्याघ्राङ्गमिति जानीयाच्छत्रुवंशोपनाशनम् ॥
अस्य सर्पसमावेशे जीवन्नत्स्या अपक्ष्यकम् ॥४२॥
यदा मत्कुणकाभमङ्गं भूमिः सितासिता ॥
मेषाङ्गमिति जानीयात् संग्रामे विजयप्रदम् ।
एतद्भावनतोयेन मृगमन्धोऽपि पश्यति ॥४३॥
अङ्गं केशसमं यस्य भूमिर्धूम्रा सितासिता ।

केशाङ्गमिति जानीयात् शीघ्रं दुःखभयापहम् ॥४४॥
निरङ्गं स्थूलपक्षाति सुफलाङ्गं विदुर्बुधाः ।
एतद्धि प्रायशो लोके दृश्यते हि नृपसत्तम ! ॥”४५
पद्मपुराणस्य ।
“निरङ्गा निशिता धारा प्राशे वह्निं वमत्यपि ।
श्रीगीवञ्चमिदं श्रेयं पृथिव्यां नातिदुर्लभम् ॥४६॥
अङ्गं काकपदाकारं भूमिराघातनिःस्वना ।
एष खड्गाधमश्चाप्यो काकाङ्गो भूति-
मिच्छता ॥४७॥
यदा कपालमङ्गेषु दृश्यते घर्षितः खरम् ।
एतद्धि दुःखजनकं कपालाङ्गं बुधस्त्यजेत् ॥४८॥
तन्वीपत्रा बलाङ्गा या सुवर्णाङ्गासिपुत्रिका ।
पत्रचञ्चमाहुस्तं आयुर्व्वेदविदो जनाः ॥”
लौहार्णवेऽपि ।
“सुपर्णसन्निभा भूमिरङ्गं कालं प्रतीयते ।
तत् पत्रचञ्चं कालस्य सुपर्णमुपजायते ॥४९॥
तुवरीदलसङ्काशमङ्गं यस्मिन् प्रतीयते ।
तुवरीचञ्चमाहुस्तं तत्स्पृशेत् शिरसो भ्रमः ॥
एष खड्गाधमश्चाप्यो यदीच्छेज्जीवनं निजम् ॥
५० ॥
बिम्बीदलसमा भूमिरङ्गं बिम्बीफलोपमम् ॥
बिम्बीचञ्चन्तु तद्विद्यात्तज्जलं तिक्तमुच्यते ।
पित्तश्लेष्मविकाराणां प्रशमाय प्रयुज्यते ॥५१॥
प्रियङ्गुसदृशञ्चाङ्गं भूमिश्च कपिलाकृतिः ।
फलचञ्चमिदं प्रोक्तं प्राशे धूम्रं वमत्यपि ॥५२॥
अङ्गं सर्षपपुष्पाभं भूमिश्चैव सितासिता ।
एतत् सर्षपचञ्चं स्यात् प्राशे वह्निं वमत्यपि ॥
अपि कुण्डलिका याति एतदत्यन्तकोमलम् ।
एतत्प्रसादात् क्षितिपः शत्रूणां साधयते महीम् ॥
५३ ॥
नीलीरससमा भूमिरङ्गं नीलीतरङ्गवत् ।
नीलीचञ्चमिदं दृष्टं प्राशे वह्निशिखां वमेत् ॥
एष खड्गवरो नृणामरिष्टभयनाशनः ॥५४॥
रक्ताक्तको महारेखा भूमिश्चैव सितासिता ॥
रक्ताङ्गमिति जानीयाद्वैरिपक्षविनाशनम् ।
शाणेन यस्तु रक्तां वा नीलां वा वमेत शिखाम् ॥
रक्तस्पर्शनमात्रेण स्वयमेव निकृन्तति ।
ततोऽस्य रक्तस्यपुष्पभा दाहश्च जायते ॥५५॥
अङ्गं वचादलसमं भूमिश्चैव सितासिता ।
वचाचञ्चमिदं श्रेयं तत्स्थतापितनाशनम् ॥
एष खड्गवरो राज्ञा साधनीयः प्रयत्नतः ॥५६॥
रसोनादुत्तमं चाङ्गं भूमिस्तस्य दलोपमा ॥
रसोनचञ्चं जानीयात् प्राशे वह्निं वमत्यपि ।
अस्य धावनतोयेन आमवातविनाशनम् ॥५७॥
निरङ्गा निर्म्मला भूमिर्धारा तीक्ष्णा खरः खरः ।
सुभगाचञ्चमेतत् स्याद्भुवि नात्यन्तदुर्लभम् ॥५८॥
मञ्जिष्ठासदृशा दीर्घास्तन्वो रेखाः सुविस्तराः ।
मञ्जिष्ठचञ्चमिदं नाम सर्व्वकामार्थसाधनम् ॥५९॥
अङ्गं शमीपत्रसमं भूमिर्धूम्रा सितासिता ।
शमीचञ्चमिदं श्रेयं शत्रुचक्रसुदारुणम् ॥
शाणेषु वमते वह्निं वहते वह्निपीडनम् ॥६०॥
रोहितमत्स्यसदृशमङ्गं भूमिः सितासितापि ।

धूम्रा गम्भीरस्वरयुक्ता धारा तीक्ष्णा सिता
भवेत्तथा ॥
रोहिताख्यमिदं चञ्चं सर्व्वारिष्टविनाशनम् ।
वह्निसंस्पर्शमात्रेण किञ्चित्किञ्चिद्विभाव्यते ।
इत्ययं दुर्लभः खड्गो देवानामपि कथ्यते ॥६१॥
शफरीवत्सकाकारमङ्गं भूमिः सितासिता ।
प्रोष्ठीचञ्चमिदं प्रोक्तं चञ्चं तरति वारिणि ॥
एष खड्गोत्तमो राज्ञा विपक्षबलनाशनः ।
कदाचिल्लभ्यते भाग्यैर्लभ्यते लभ्यते मही ॥६२॥
अङ्गं मारिषपत्राभं भूमिः स्याद्धिमसच्छविः ।
इत्ययं मारिषाङ्गः स्यात् पृथिव्यां नातिदुर्लभः ॥
६३ ॥
भृङ्गराजस्य पुष्पाभमङ्गं भूमिर्दीप्तप्रभा ।
आघातं सहते नैव एष खड्गाधमो मतः ॥६४॥
धारा तीक्ष्णा खुराकारा भूमिरङ्गविवर्ज्जिता ।
आघातं सहते घोरं प्राशे वह्निं वमत्यपि ।
खुराङ्गमिति जानीयात् पृथिव्यां नातिदुर्ल-
भम् ॥६५॥
निर्मेला समता भूमिर्भवेच्चैव यदा यदा ।
मन्दा तीव्रा भवेद्धारा तद्विद्यात्स्य लक्षणम् ॥६६॥
नीलाञ्जनसमा भूमिरङ्गं जलतरङ्गवत् ।
मेघाङ्गमिति जानीयाच्छायी शीतं भवत्यपि ॥
एष खड्गाधमश्चाप्यो यदीच्छेद्भूतिमात्मनः ।
भर्त्तुः प्रतापं शमयेद्रविबिम्बं यथा घनः ॥६७॥
मन्दा धारा भृशं गाढ़ा भूमिरङ्गविवर्ज्जिता ।
पर्व्वताङ्गमिदं नाम सर्व्वत्रैवोपलभ्यते ॥६८॥
अङ्गं गुञ्जाफलसमं भूमिर्म्मौक्तिकोपमा ।
गुञ्जाचञ्चमिदं पृष्ठं सप्त भवति घर्षणे ॥
शाणे सिन्दूरसङ्काशं रजो वमति चाद्भुतम् ।
एष खड्गवरो राज्ञा भाग्यादेवोपयुज्यते ॥
अस्य प्रभावात्तन्नास्ति यन्न साधयते नृपः ॥६९॥
अङ्गं तनुशराकारं भूमिश्चैव सितासिता ।
धारा तीक्ष्णा वमति च शाणे वह्निसमाः
शिखाः ।
शरचञ्चमिदं श्रेयं राज्ञां वाञ्छितसिद्धये ॥७०॥
दूर्व्वादलनिभा भूमिर्धारा तीक्ष्णा खरः खरः ।
शाणेन वमते वह्निं दूर्व्वाचञ्चं सुदुर्लभम् ॥७१॥
अङ्गं बिल्वदलाकारं भूमिश्चैव सितासिता ।
बिल्वचञ्चमिदं शाणे नीलपीतं वमेच्छिखे ॥
एष खड्गवरः प्रोक्तः शत्रूणां कुलनाशनः ॥७२॥
मरुवकदलसङ्काशा भूमिरङ्गं मरुवकवत् ।
मरुवकाङ्गमिदं शाणे रजो वमति चाद्भुतम् ॥७३॥
शोणपुष्पनिभा रेखा दीर्घा भूमिः सितेतरा ।
शोणाङ्गमिति जानीयात् खड्गं परमदुर्ल-
भम् ॥७४॥
शटीदलसमा भूमिरङ्गं तत्कुसुमोपमम् ।
शटीचञ्चमिदं प्रायो लभ्यते पुण्यवत्तरम् ॥७५॥
मार्ज्जाररोमसदृशमङ्गं भूमिः सितेतरा ।
मार्ज्जाराङ्गमिदं त्याज्यं रोगशोकभयावहम् ।
एष खड्गाधमश्चाप्यो यदीच्छेद्भूतिमात्मनः ॥
७६ ॥
केतकीपत्रसदृशमङ्गं यस्मिन् प्रतीयते ।

विद्यात् कैतकवर्णं तत् कारागारसहस्रदम् ॥”७७
लौहप्रदीपस्य ।
“अङ्गं करवीरतन्तुनिभं भूमिर्मूर्वीदलच्छविः ।
प्रायेण वमते मुक्तो छिद्रो मौर्वी भवेत्ततः ॥
मौर्व्याङ्गमिदमुत्कृष्टं यशःकीर्त्तिवहावहम् ॥७८॥
लिङ्गं तीक्ष्णं खरं गाढ़ं प्राणी यद्वमेत् कणम् ।
छिन्नाच्छाविषं तैलं वत्साङ्गमिति तद्वदेत् ॥७९॥
बलाकपुष्पसदृशमङ्गं भूमिः सितासिता ।
बलाकवर्णं जानीयात् तद्धृते पापं नश्यति ॥८०॥
अङ्गं चम्पकपुष्पाभं भूमिः कृष्णा तथा सिता ।
छिद्रो प्राणी वमेच्छ्वेतं तिलं तस्य जलं भवेत् ।
इदं चम्पकवर्णं स्यात् सर्व्वत्र विजयप्रदम् ॥८१॥
अङ्गं बकाण्डसमं भूमिः शुक्ला तथेतरा ।
बकाण्डमिदं ज्ञेयं नानाभावं भवेद्दृढम् ॥
इत्ययं वातरोगाणां नाशने परमौषधम् ॥८२॥
अङ्गं वटारोहसमं भूमिर्म्मेदकच्छविः ।
वटवर्णमिदं ज्ञेयं खरं खड्गाधमं बुधैः ।
एतस्य धर्षमात्रेण नरो मुच्येत सम्पदा ॥८३॥
वंशनीलीसमा भूमिः खरधारा सिताकृतिः ।
वंशाङ्गमिति जानीयाद्वंशवृद्धिकरं परम् ॥८४॥
भूमिः शालदलाकारा अङ्गं लघु सितासितम् ।
शालाङ्ग एव खड्गः स्यात् पूज्यः सर्व्वार्थदायकः ।
अयं प्राणी वमेद्वह्निं धारा चाप्यथवा भवेत् ॥८५॥
भूमिः सितासिता वापि अङ्गं ज्येष्ठीसमं लघु ।
ज्येष्ठीवर्णमिदं निन्द्यं न स्पृश्यं वा हितेच्छुभिः ॥
८६ ॥
पुरागजालसदृशमङ्गं भूमिः सितासिता ॥
जालवर्णमिदं पूज्यं प्रभुसम्पत्तिनाशनम् ।
यदि प्राणी वमेन्नीलां छिद्रो वह्निं वमेच्च वा ॥
तदैव दुर्लभः खड्गो नान्यथा भयहेतुकः ॥८७॥
अङ्गं पिपीलिकाकारं भूमिर्धूम्रा तथासिता ॥
पिपीलिकाङ्ग इत्येव तद्धृते कष्टसम्भवः ।
अयं यदि भवेद्रक्तः प्राणी पूज्यतमस्तदा ॥८८॥
नलपत्रसमा भूमिरङ्गमन्तकुसुमोपमम् ।
नलाङ्गमिति जानीयाद्भर्त्तुः सर्व्वार्थसाधकः ॥
८९ ॥
निरङ्गा निर्म्मला भूमिर्धूम्रं छत्रं वमेद्व्रणः ।
दृढा धारा भवेत् स्थूला आघातं सहते न च ॥
रजोवर्णमिदं निन्द्यं प्रभूणां विजयावहम् ॥९०॥
कुष्माण्डबीजसदृशमङ्गं भूमिः सितासिता ॥
कुष्माण्डवर्णं जानीयात्तद्धृते वेगनिग्रहः ॥९१॥
अङ्गं हरोमसदृशं भूमिर्धूम्रा सितासिता ।
रोमाङ्गमिति जानीयात्तद्धृते पिङ्गलोद्गमः ॥९२॥
भूमिः कुन्दीदलसमा अङ्गं तन्तुकण्टकोपमम् ॥
धारा तीक्ष्णा रक्तवीणी लघुमानं खरा शुभा ।
शुभाङ्गः खड्ग इत्येव तद्धृते दारुणभ्रमाः ॥
शुखाधिककर्णनासानां दाहः पाकश्च जायते ।
अयं यदि च सर्पाणां फणाक्षपरि विध्यति ॥
फणाविदारमाप्नोति सर्पो लोठयते शिरः ।
अस्य धावनतोयेन कुष्ठरोगविनाशनम् ॥९३॥
कर्कन्धुदलपृष्ठाभा भूमिरङ्गं तु तत्समम् ।
कर्कन्धुवर्णं जानीयात्तद्धृते दारुणाशनम् ॥

एष खड्गाधमश्चान्यो धेनया यदि विद्विषः ॥
९४ ॥
रक्तं बकुलपुष्पाभं भूमिस्तत्पत्रसन्निभा ॥
बकुलाङ्गमिदं पूज्यं प्राणी सुरभिगन्धवत् ।
तस्मिन् गमतीमध्ये यद्गेन न बाध्यते ॥९५॥
अङ्गं संमिश्रितं यस्मिन् किञ्चिद्रक्तमीक्ष्यते ।
सर्व्वेषां दर्शनं नापि तीक्ष्णधारः खरस्वरः ॥
एष काञ्चिकवर्णः स्याद्दुर्यतादेवीपलभ्यते ।
नैनं प्राप्यापि वर्द्धन्ते श्रेयांसि व्याधयोऽपि च ॥
९६ ॥
भूमिः कृष्णा निरङ्गा चेद्धारा तीक्ष्णा दृढापि च ।
आघातं सहते घोरं रक्तं वर्णेन यो विशेत् ॥
प्राणेन वह्निं वमति ध्रुवं चाप्यतिवर्णवान् ।
महिषाङ्गः स वै खड्गः पृथिव्यां नातिदुर्लभः ॥
९७ ॥
अत्यन्तनिर्म्मला भूमिः शरीरं प्रतिबिम्बितम् ।
धारा तीक्ष्णा खरस्तीक्ष्णः स्वच्छाङ्गं तद्विनि-
र्दिशेत् ॥९८॥
तस्मिन् यदा भवेद्रेखा ऋज्वी जलाख्यं तदा॥९९॥
अस्मिन्नपि भवेद्वक्रा रेखा वक्राभिधस्तु तत्॥१००॥
एतच्चितयसहितं खड्गानां प्रवरं बुधैः ।
प्रायशो लभ्यते लोके यदि सर्व्वगुणावहम् ॥
इतीदं निखिलं प्रोक्तं वर्णानां लक्षणं मया ।
प्रयत्नैर्लिखितं यत्तं सर्व्वेषां हितकाम्यया ॥
इतः परन्तु लौहानां लक्षणं यत्र लक्ष्यते ।
तस्य दासो भवाम्येव प्रतिज्ञेति कृता मया ॥
द्वित्रिङ्गमिश्रमालोक्य मिश्राङ्गमिति निर्द्दिशेत् ।
सर्व्वेषामङ्गमालोक्य सर्व्वाङ्गमिति निर्द्दिशेत् ॥”
इति खड्गपरीक्षायामङ्गाध्यायो द्वितीयः ॥ * ॥
खड्गस्य रूपाणि यथा,—
“नीलीकलायकुसुमच्छविरञ्जनाभा
या चन्द्रनीलमणिकाचमणिप्रभा च ।
भूमिश्च या मरकतप्रतिमावभासा
खड्गस्य नीलमिति रूपमिदं वदन्ति ॥
तत्र नेत्रिन्द्रिमान्यङ्गान्यरिष्टानि बहून्यपि ।
दृश्यन्ते बहुदोषापि तथापि गुणवत्तरम् ॥१॥
या कालकाम्बुदमसीरसकालसर्प-
भृङ्गान्धकारकचभारसमा विभाति ।
भूमिश्च या भ्रमरबन्धुसमावभासा
खड्गस्य कृष्णमिति रूपमिदं वदन्ति ॥
अत्र नेत्राणि सम्पत्त्यै अरिष्टान्यशुभानि च ।
साधारणमिदं रूपं प्राह नागार्ज्जुनो मुनिः ॥२॥
या प्राहृषेण्यघनमेकसमानवर्णा
गोमेदरत्नसदृशापि च यस्य भूमिः ।
खड्गस्य पिङ्गमिति रूपमिदं वदन्ति
भर्त्तुर्य्यशोबलधनक्षयकारणाय ॥३॥
या मन्दधूमसदृशा च शिरीषपुष्प-
तुल्या विभाति मलिनापि च खड्गभूमिः ।
नागार्ज्जुनो वदति धूम्रमिदं हि रूपं
भर्त्तुर्य्यशोधनबलाबलिवर्द्धनाय ॥४॥
द्विरूपं मिश्रितं ज्ञात्वा सङ्करं प्रवदेद्बुधः ।
त्रिभी रूपैः समेतन्तु खड्गं त्रिपुरलाञ्छनम् ॥

रूपैश्चतुर्भिः संयुक्तं चतुरं खड्गमुत्तरम् ॥”
इति लौहार्णवस्य खड्गपरीक्षायां वर्णा-
ध्यायस्तृतीयः ॥ * ॥
“जातिश्चतुर्व्विधा प्रोक्ता खड्गानां च पुरा यथा ।
सम्प्रत्यपि प्रयत्नेन तासां लक्षणमुच्यते ॥
शुद्धाङ्गः शुद्धवर्णश्च सुनेत्रः सुस्वरश्च यः ।
मृदुस्पर्शः सुवर्ण्णवत्तीक्ष्णधारो महागुरुः ॥
खड्गं ब्राह्मणजातिं तं प्राह नागार्ज्जुनो मुनिः ।
अस्य क्षते भवेच्छोथो घोरः सर्व्वाङ्गगोचरः ॥
मूर्च्छा पिपासा दाहश्च ज्वरो मन्युश्च जायते ।
आकृष्टं निष्कलङ्कञ्च मर्द्दनाभिर्द्दिवोषितम् ।
मलिनत्वं न लभते निर्म्मलं कुरुते परम् ।
तरुणादित्यकिरणस्पर्द्धीव रविः स्थितः ॥
रक्षेत् सर्व्वं न तु करं पुरुषस्य हि धारितः ।
गायसुराकारमात्रेण खरतां भजति वसुधम् ॥
एष खड्गवरः सर्व्वमरिष्टं नाशयेद्ध्रुवम् ।
अस्य प्रसादात् पुरुषस्त्रिलोकानपि साधयेत् ॥
तस्मादेव मनुष्याणां सुलभो न हि भूतले ।
दृश्यन्ते प्रायशः स्वर्गे कुशद्वीपे हिमालये ॥१॥
धन्वर्ण्णं महाभारं तीक्ष्णधारं खरस्वरम् ।
सर्व्वाघातसहं सर्व्वमेवमवलेखराकरम् ॥
खड्गं क्षत्रियजातिं तं जानीयात् खड्गकोविदः ।
अस्य क्षते भवेद्दाहकृपाणाख्यो ज्वरो भ्रमः ॥
मृत्युश्च जायते प्राणी वमेद्वह्निकणान् बहून् ।
संस्कारे चाप्यसंस्कारे नैर्म्मल्यं तस्य लक्ष्यते ॥
प्राणोऽप्यप्राणो खरता क्वचित् चात्यन्ततीक्ष्णता ।
रक्तस्पर्शनमात्रेण विशेद्भ्रामरमन्तरम् ॥
अयं खड्गवरः पूज्यो मनुष्यैरपि लभ्यते ॥२॥
नीलवर्णः कृष्णवर्णः संस्कारे निर्म्मलो भवेत् ॥
प्राणेन खरता चास्य घातसुखं निकृन्तति ।
वैश्यजातिरयं खड्गः क्षते त्वङ्मांसदर्शनम् ॥
नात्युत्कृष्टो नातिहीनं सर्व्वत्रैवोपलभ्यते ॥३॥
सजलाम्भोदसङ्काशः स्थूलधारो मृदुस्वरः ॥
संस्कारे चैव मलिनः प्राणी चापि खरेतरः ।
शूद्रजातिरयं खड्गः क्षते नात्यापि वेदना ॥
दूरात्संघोऽधमस्त्वान्यो यदीच्छेद्धितमात्मनः ।
प्रायशः सर्व्वलोकेषु स्वयमेवोपलभ्यते ॥४॥
द्वयोर्लक्षणमालोक्य जारजं खड्गमादिशेत् ।
त्रयाणां लक्षणेनैव त्रिजातिं खड्गमादिशेत् ।
चतुर्णां लक्षणेनैव जातिसङ्करमुच्यते ॥”
इति लौहार्णवस्य खड्गपरीक्षायां जात्य-
ध्यायः ॥ * ॥
अथ चिह्नभेदानां लक्षणानि ।
“चक्राकारं यदा नेत्रं खड्गस्याङ्गे प्रदृश्यते ।
तं चक्रनेत्रं जानीयात् भर्त्तुः सर्व्वार्थसाधनम् ॥
अनेनैकेन खड्गेन कृत्स्नां साधयते महीम् ॥१॥
प्रफुल्लपद्मसङ्काशं नेत्रं पद्मदलोपमम् ॥
यदि वा दृश्यते खड्गे पद्मनेत्रं समादिशेत् ।
अयं खड्गवरो यत्र तत्रैव कमलालया ॥२॥
ऊर्द्धं स्थूला यदा रेखा गदाकारा प्रतीयते ।
गदानेत्रमिदं विद्धि सर्व्वशत्रुनिसूदनम् ॥३॥
शङ्खाकारं यदा नेत्रं खड्गमध्येऽभिदृश्यते ।

शूलनेत्रमिदं सर्व्वदेवानामपि दुर्ल्लभम् ॥४॥
कमलप्रतिमं नेत्रं यस्य भूमौ प्रतीयते ।
सर्व्वार्थसाधकं खड्गं तं विद्याद्विजयप्रदम् ॥५॥
धनुःस्वरूपं यन्नेत्रं धनुर्न्नेत्रं वदन्ति तम् ।
तस्य स्पर्शनमात्रेण मन्त्रोऽपि प्रसन्नायते ॥
अयं निशीथे विजने खड्गो मानमनायते ॥६॥
यन्नेत्रमङ्कुशाकारं तंविद्यादङ्कुशमन्तरम् ॥
खड्गमङ्कुशनेत्राख्यं भर्त्तुः सर्व्वार्थसाधकम् ।
अलक्ष्मीपापरन्ध्रोत्थं क्षयायुद्धनिवारकम् ॥७॥
छत्राकारं यदा नेत्रं छत्रनेत्रं वदन्ति तम् ।
अस्य प्रभावात् चौर्य्योऽपि सार्व्वभौमो भवेन्नृपः॥
दीनोऽपि च सुखी भूयात् सुखी भूयाच्चेश्वरः ।
महेश्वरोऽपि नृपतिः नृपतिर्मण्डलेश्वरः ॥
मण्डलेशश्चक्रवर्त्ती भवेदत्र न संशयः ॥८॥
पताकाकृतिनेत्रं चेत् सर्व्वसम्पत्तिकारकम् ॥
पताकानेत्रमाकृष्टं संग्रामे विजयप्रदम् ॥९॥
नेत्रं वीणाकृति यदा वीणानेत्रमुशन्ति तम् ।
निशीथे विजने खड्गो वीणावत् स्वनमावहेत् ।
अस्य प्रभावात् सर्व्वेऽपि अपि वशा भवन्ति
हि ॥१०॥
मत्स्याकृति यदा नेत्रं मत्स्यनेत्रमिमं विदुः ।
अस्य प्रभावात् क्षितिपः कृत्स्नां साधयते
महीम् ॥११॥
शिवलिङ्गसमं नेत्रं लिङ्गनेत्रमिमं विदुः ।
भर्त्तुः सर्व्वार्थसंसिद्धै शत्रूणां नाशनाय च ॥
वामपार्श्वे तु यात्रायां धर्म्मोऽयं तथा रवौ॥१२॥
अथ अन्याद्यैश्चन्द्रकलसानां लक्षणानि प्रति-
सानि । १३ । १४ । १५ ।
शूलाकृति यदा नेत्रं शूलनेत्रं वदन्ति तम् ।
सर्व्वार्थसाधकः सर्व्वारिष्टानिष्टप्रणाशनः ॥१६॥
शार्दूलनेत्रं तं विद्यात् शार्दूलाकृतिनेत्रतः ।
शत्रुश्रेणीविनाशाय संग्रामे विजयाय च ॥१७॥
सिंहाकृति यदा नेत्रं सिंहनेत्रमिमं विदुः ।
अस्य प्रभावात् चौर्य्योऽपि कृत्स्नां साधयते
महीम् ॥१८॥
तत् सिंहासननेत्रं स्यात् नेत्रे सिंहासनोपमे ।
अस्य प्रभावात् क्षितिपः कृत्स्नां साधयते
महीम् ॥१९॥
गजाकृति यदा नेत्रं गजनेत्रं वदन्ति तम् ॥
अस्य प्रभावात् चौर्य्योऽपि लभते राज्यसम्पदम् ॥
२० ॥
नेत्रं हंसाकृति यदा हंसनेत्रं वदन्ति तम् ।
अस्य प्रभावात् भूपालो यशः प्राप्नोत्यनुत्तमम् ॥
२१ ॥
मयूराकृतिनेत्रे द्वे तन्नेत्रमिति निर्द्दिशेत् ॥
अस्य प्रभावान्मनुजः सर्व्वदर्पान्निकृन्तयेत् ॥२२॥
जिह्वाकारं यदा नेत्रं जिह्वानेत्रं वदन्ति च ॥
संग्रामखर्परेऽत्रैव पिबेद्वैरिशिरोरजः ॥२३॥
दन्ताकारं यदा नेत्रं दन्तनेत्रं वदन्ति तम् ॥
अयं रिपुगणं हन्ति चर्व्वयत्यतिभैरवम् ॥२४॥
खड्गाकारं यदा नेत्रं खड्गनेत्रं वदन्ति तम् ।
तस्य प्रभावान्मनुजस्त्रिलोकीं वशयेदपि ॥२५॥

मनुष्यमुण्डिकाकारा मुण्डिकानेत्रमुच्यते ॥
अयं सप्तैतां सद्वीपां कृत्स्नां साधयेत् क्षितिम् ।
न चेयं मुण्डिका किन्तु नवलक्ष्मीरिव श्रयम् ॥
तस्मान्नायं मनुष्याणामल्पभाग्येन लभ्यते ॥२६॥
चामराकृतिनेत्राकारमेतमिति निर्द्दिशेत् ।
अस्य प्रभावाच्चायन्ते चामरीकृतसम्पदः ॥२७॥
एकानेकशिखे शैलनेत्रे तन्नेत्रसंज्ञकम् ।
अपि राष्ट्रभये युद्धे विषमे वैरिसङ्कटे ।
स्थिरीकरोति धरणीं धरणीं पर्व्वतो यथा ॥२८॥
पुष्पमालासमं नेत्रं पुष्पनेत्रं वदन्ति तम् ।
अस्य प्रभावात्तुष्यन्ति यक्षाः सर्व्वाश्च देवताः ॥
२९ ॥
भुजङ्गसदृशे नेत्रे सर्पनेत्रमिदं मतम् ।
अयं शत्रुगणं हन्ति यथा मर्त्त्यं भुजङ्गमः॥३०॥
सवर्णं समवर्णञ्च तत् सर्व्वं द्विविधं भवेत् ।
सवर्णं शान्तिसम्पत्त्यै रिपुनाशे तथापरम् ॥
द्वयोरेकत्र दृष्टे च तत् पुनर्व्विविधं भवेत् ।
एकलोकसुखं नेत्रं ददाति द्विविधं द्वयोः ॥
मूलमध्याग्रसंस्थानात्तत् पुनर्द्विविधं भवेत् ।
अग्रे चाग्रफलं ज्ञेयं मध्ये मध्यफलं मतम् ॥
मूले फलं जघन्यं स्यात् प्राह नागार्ज्जुनो मुनिः ।
एकं द्वे त्रीणि नेत्राणि नाम संख्या व्यतिक्रमः ॥
एकं धर्म्मः स्वर्गकामौ द्वे त्रीणि च त्रिवर्गकम् ।
तत्फलानि प्रयच्छन्ति प्राह नागार्ज्जुनो मुनिः ॥
द्विनेत्रमिति जानीयात् स्वसंज्ञां नेत्रयोर्द्वयोः ।
त्रिनेत्रञ्च त्रिभिर्ज्ञेयं बहुनेत्रमतः परम् ॥
यथोत्तरं गुणवहं खड्गमाहुरनुत्तमम् ।
दिव्यात्रमिति निर्द्दिष्टं नेत्राणां शुभदायिनाम् ॥
तीव्राणां मङ्गलानाञ्च दर्शनञ्च शुभावहम् ॥"
इति खड्गपरीक्षायां नेत्राध्यायः पञ्चमः ॥*॥
"यथा नेत्रस्य संस्थानं तथारिष्टस्य लक्षयेत् ।
नेत्रेषु स्थाननियमो नारिष्टे स्थाननिर्णयः ॥
प्रशस्ताङ्गोऽपि यः खड्गोऽरिष्टेनैकेन
निन्दितः ॥"
अथ त्रिंशदरिष्टानां लक्षणानि ॥
"छिद्रवद्दृश्यते खड्गे स्वभावेन च लक्ष्यते ।
छिद्रारिष्टमिदं विद्धि भर्त्तुर्व्वीर्य्यबलापहम् ॥१॥
यदा काकपदाकारमरिष्टं दृश्यते क्वचित् ।
अयं काकपदारिष्टः सर्व्वाभीष्टविनाशनः ॥२॥
रेखाकारं यदारिष्टमूर्द्ध्वं वा तिर्य्यगेव वा ।
रेखारिष्टमिदं विद्धि भर्त्तुर्वीर्य्यबलापहम् ॥३॥
भिन्नभ्रान्तिकरं मार्गं भिन्नारिष्टमिदं विदुः ।
भर्त्तुः कुलं यशो राष्ट्रं नाशयत्या न व्रजेत्
स्वयम् ॥४॥
यदा भेकशिरोरूपमरिष्टं दृश्यते क्वचित् ।
भेकारिष्टमिदं नाम्ना संग्रामे भयदायकम् ॥५॥
अरिष्टे मुषिकाकारे मुषिकारिष्टमुच्यते ।
अयं खड्गाधमः कुर्य्यात् भर्त्तुः पाताकलङ्क-
मम् ॥६॥
विडालनयनाकारो बिन्दुरेकोऽतिनिष्ठुरः ।
विडालारिष्टमेतत् स्यात् भर्त्तुः सर्व्वार्थनाश-
नम् ॥७॥

अरिष्टं शर्कराकारं यदा स्पर्शेन बुध्यते ।
शर्करारिष्टमेतत् स्याद्धनबुद्धिविनाशनम् ॥८॥
यदा नीलीरसाभासमरिष्टं दृश्यते क्वचित् ।
नील्यरिष्टमिदं ज्ञेयं यशोलक्ष्मीविनाशनम् ॥९॥
अरिष्टे मशकाकारे मशकारिष्टमुच्यते ।
भर्त्तुः कुलं यशो बुद्धिं धृतिं प्रीतिञ्च नाशयेत् ॥
१० ॥
भङ्गमात्रतिमो बिन्दुरेकोऽनेकोऽथवा यदा ।
भङ्गमारिष्टं इत्येव धृतिद्युतिविनाशनः ॥११॥
सूचीरूपमरिष्टञ्चेदूर्द्धं वा तिर्य्यगेव वा ।
सूच्यरिष्टमिदं नाम भर्त्तुः कुलविनाशनम् ॥१२॥
यद्यच्छिन्द्यो राजन् ! मङ्गलो विषमेव वा ।
उपर्य्युपरि चाधोऽधश्छिन्द्राद्यमरिष्टकम् ॥
तस्य स्पर्शनमात्रेण सचेलः स्नानमाचरेत् ॥१३॥
कालिकारिष्टमित्येतद् धीधृतिद्युतिनाशनम् ॥
१४ ॥
एकश्च यदि न क्वेव प्रयत्नेनापि संहृतः ।
हारी नाम महारिष्टं सर्व्वाभीष्टविनाशनम् ॥
अनेकगुणसम्पन्नः खड्गो लोकेन गच्छति ॥१५॥
कपोतपक्षप्रतिममरिष्टञ्चेत्तदाह्वयम् ।
भर्त्तुः कुलं यशो विद्यां वलं बुद्धिञ्च नाशयेत् ॥१६॥
काकाकृति यदारिष्टं काकारिष्टं तदोच्यते ।
अनेन भर्त्तुः संग्रामे भङ्ग एवोपजायते ॥१७॥
अरिष्टे खर्परकाकारे खर्परारिष्टमुच्यते ।
भर्त्तुर्यशो बलं वीर्य्यं बुद्धिं प्रीतिञ्च नाशयेत् ॥१८॥
यदाग्निलोहशकलं लग्नं स्यादिव लक्ष्यते ।
शकलीति स वै खड्गः सर्व्वाभीष्टनिकृन्तनः॥१९॥
क्रोडीकुशपत्रकयोर्लक्षणे पतिते २० । २१ ।
यस्मिन्निम्नमिवाभाति मध्ये वा दृश्यते क्वचित् ।
त्रासारिष्टमिदं नाम भर्त्तुः कुलधनापहम्॥२२॥
एकैकरेखा दीर्घाग्रा यदा प्रज्वलिनी भवेत् ।
स्पर्शे वाथ करेणाथ करालारिष्टमुच्यते ॥
अयं हि क्षितिपालानां हृदयोग्यो भवेन्न हि ।
दर्शनादेव नश्यन्ति यशोलक्ष्मीजयादयः ॥२३॥
अरिष्टं कङ्कपक्षाभं कङ्कारिष्टं तदुच्यते ।
अस्य स्पर्शनमात्रेण नश्यत्यायुर्यशो बलम् ॥२४॥
खर्ज्जूरदलप्रतिमं यदारिष्टन्तु लक्ष्यते ।
खर्ज्जूरारिष्टमेतत् स्याद्भर्त्तुः कुलधनापहम् ॥२५॥
गोशृङ्गाभमरिष्टञ्चेत् शृङ्गारिष्टं तदुच्यते ।
अनेन भर्त्तुर्नश्यन्ति लक्ष्मीबलकुलादयः ॥२६॥
गोपुच्छाकृति चेत् खड्गे अरिष्टं संप्रतीयते ।
पुच्छारिष्टमिदं नाम भर्त्तुः सर्व्वार्थनाशनम्॥२७॥
खनित्राभमरिष्टञ्चेत् खनित्रारिष्टमुच्यते ।
शूराणामपि संग्रामे भङ्गमेतत् प्रयच्छति ॥२८॥
अरिष्टं लाङ्गलाकारे लाङ्गलारिष्टमुच्यते ।
अयं पापात् पापतरः प्रेक्षणीयो न भूभुजा ॥
अयमायुः श्रियं हन्ति विद्यां बलमपीश्वतः॥२९॥
वडिशारिष्टस्य लक्षणं पतितम् ॥३०॥
इत्यरिष्टानि प्रोक्तानि नानातन्त्रात् प्रयत्नतः ।
विचार्य्यैतानि मतिमान् खड्गं कोषे निधापयेत्॥
दिङ्मात्रमिदमुद्दिष्टमरिष्टानां हितात्मनाम् ।
अमङ्गलानां मन्त्राणां दर्शनञ्चाशुभावहम् ॥

अरिष्टमेकमेव व्याहरदिदं शुभावहम् ।
अन्योऽन्यमशुभं कुर्य्याद्विरुद्धं हि विषं यथा ॥
एकमारभ्य चान्तमरिष्टं प्राह नान्यथा ।
यथोत्तरं द्विगुणितं फलमाहुर्मनीषिणः ॥
इति खड्गपरीक्षायामरिष्टाध्यायः षष्ठः ॥*॥
अथ द्विविधा भूमिः ।
दिव्यभौमविभागेन भूमिर्या द्विविधा मता ।
दिव्या दिवि समुद्भूता भौमा भूमिसमुद्भवा ॥
तल्लक्षणमशेषेण लिख्यते तन्निबोधत ।
देवदानवयोर्मध्ये खड्गाच्छिदिरभूत् पुरा ॥
ते खड्गाः पुण्यदेशेषु केषु केषु प्रतिष्ठिताः ॥
दिव्यलक्षणं यथा,—
ये खड्गाः सूक्ष्मधारा भृशमतिलघवो निर्म्म-
लाङ्गाः सुभेद्या
ये दिव्याश्चारुरूपाः सुविमलतनवश्चाप्यसंस्कार-
योगात् ।
दुर्भेद्या दुर्घटाश्च ज्वलितगुणगुरवो यत्नतो दाह-
पाकौ
ते दिव्याः कुर्व्वतेऽमी कुलधनविजयश्रीयशो-
वृद्धिमाशु ॥१॥
अथ भौमलक्षणं उक्तहारीते ।
पूर्व्वं महीषेण विधाय यानि
भुक्तानि तेषां पतितास्तु बिन्दवः ।
यस्मिन् प्रदेशे स स एव देशः
कालायसामाकरतां जगाम ॥
पुरान्धकं क्षीरसमुद्रमध्या-
दुत्पाद्य संयम्य ययुः सुरेन्द्राः ।
तद्बिन्दवो यत्र निपेतुरेव
शुद्धायसामाकरतां जगाम ॥
ये विषोत्था भृशश्यामाः खराङ्गाः सम्भवन्ति हि ।
मूर्च्छादाहज्वरानाहशोकहिक्कावमीकराः ॥
येऽमृतोत्थाः कर्व्वुराङ्गा मन्दाङ्गाः संभवन्ति च ।
वलीपलितमालिन्यजराव्याधिविनाशनाः ॥
यत्रैव पतितं यत्तु तत्तदाकरताङ्गताः ॥
तद्यथा,—
वाराणसीमगधसिंहलभूमिभागे
नेपालभूमिषु तथाङ्गमहीप्रदेशे ।
सौराष्ट्रिकेऽप्यतरधन्यमहीविभागे
शुद्धायसां क्षितिवराः प्रवदन्ति जन्म ॥
तद्यथा,—
वाराणसेयाः सुस्निग्धास्तीक्ष्णधाराः सदङ्गिनः ।
लघवः सुखसन्धेया ये चाभेद्याप्रशालिनः ॥
मागधाः कर्कशाः सूक्ष्मधारा गूढतराङ्गिनः ।
गुरवो दुःखसन्धेयाः खड्गा ज्ञेया विचक्षणैः ॥
नैपालदेशप्रभवा निरङ्गा निर्म्मलाश्च ये ।
ज्ञेयाः सदङ्गा मलिना लघवः सूक्ष्मधारिणः ॥
कालिङ्गा गुरवः स्वच्छा असाङ्गास्तनुहीनवः ।
सौराष्ट्रा निर्म्मलाः स्निग्धाः सुषमाङ्गा भृशं
खराः ॥
सिंहलद्वीपजातानां चतुर्द्धा भेद उच्यते ।
केचित् सदङ्गा गुरवः कर्कशाः स्निग्धधारिणः ॥
केचित् सदङ्गा लघवः सुस्निग्धा सूक्ष्मधारिणः ।

एवं रूपेण निर्म्मेया ज्ञेया हि द्विजसत्तमः ॥
सामान्यात् द्विगुणञ्चौड्रं कालिङ्गं गुणसत्तमः ।
कलेः शतगुणं भद्रं भद्राच्च सहस्रधा ।
वज्रात् शतगुणः माक्षिकनिरविद्धप्रभिर्गुणैः ।
ततः कोटिसहस्रेण सूर्यकान्तः प्रशस्यते ॥"
इत्यादिकं रत्नार्थमौपयोगिकमेव न तु खड्गे
दृष्टफलम् ॥ यदाह ।
आवासन्तु लौहजातीनां वर्ण्यं खड्गाय युज्यते ।
तथाच ।
ये खड्गास्तीक्ष्णधारा भृशमतिगुरवः षड्-
गुणाढ्याः सुभेद्याः
केचित् साङ्गा निरङ्गाः कति च न समला
निर्म्मलाः केचिदेव ।
ते भौमाः कुर्व्वतेऽमी धनविजययशः षड्गुणा
निर्गुणा वा
ते दुःखं शोकमुग्रं दधति सकुलश्रीयशोनाश-
कार्त्ते ॥
इति खड्गपरीक्षायां भूम्यध्यायः सप्तमः ॥*॥
अथाष्टधा ध्वनिः ।
ध्वनिरष्टविधः प्रोक्तो यः पूर्व्वं सूत्रसंग्रहे ।
तेषामपि लिखाम्यत्र सगुणं लक्षणाष्टकम् ॥
तद्यथा,—
पूर्व्वं चत्वारः शुभदाः परे निन्द्यास्तदाख्यया ।
विचार्य्य खड्गमानञ्च कर्त्तव्यं खड्गकोविदैः ॥
घोरस्तार इति ख्यातो द्विविधः खड्गकोविदैः ।
घोरः स्यात् सुखसम्पत्त्यै तार उच्चाटने मतः ॥
यत्र हंसरवस्येव खड्गे लक्ष्यते ध्वनिः ।
हंसध्वनिरयं खड्गः सकलार्थप्रसाधनः ॥१॥
कांस्यशब्द इवाभाति यस्मिन् खड्गे हते ध्वनिः ।
कांस्यध्वनिरयं खड्गः प्राह नागार्ज्जुनो
मुनिः ॥२॥
अभ्रस्य लक्षणं पतितम् ॥३॥
ढक्काशब्द इवाभाति यस्मिन् खड्गे हते ध्वनिः ।
ढक्काध्वनिरयं खड्गः सर्व्वशत्रुनिसूदनः ॥४॥
काकस्वर इवाभाति यस्मिन् खड्गे हते ध्वनिः ।
काकस्वरोऽयं खड्गः स्यात् श्रीयशःकुल-
नाशनः ॥५॥
तन्त्रीस्वरसमो यस्मिन् भवेत् खड्गे हते ध्वनिः ।
तन्त्रीध्वनिरयं खड्गः कुलश्रीधननाशनः ॥६॥
खरस्येव ध्वनिर्यस्मिन् खरध्वनिरयं मतः ।
श्रीयशोज्ञानविज्ञानजयतेजोविनाशनः ॥७॥
प्रस्तरस्येव यः खड्गः स निन्द्यः खड्ग-
लक्षणे ॥८॥
गभीरतारध्वनिता खड्गस्याशुभलक्षणम् ।
उत्तानमन्द्रध्वनिता खड्गस्याशुभलक्षणम् ॥
अपाङ्गेनक्षीणोऽपि खड्गः सुध्वनिरुत्तमः ।
अन्धः कुरूपो मञ्जुलो यथा भुवि सुगायनः ॥
सर्व्वलक्षणसम्पन्नः खड्गो यो ध्वनिवर्ज्जितः ।
स निन्द्यः सुन्दराङ्गोऽपि यथा वाक्यविवर्ज्जितः ॥
नखेन चाथ दण्डेन तथा लौहशलाकया ।
लोष्टेन शर्कराभिर्व्वा ध्वनिविज्ञानमुच्यते ॥"
इति खड्गपरीक्षायां ध्वन्यध्यायोऽष्टमः ॥*॥

अथ द्विविधं मानम् ।
यन्मानं द्विविधं प्रोक्तं तस्य लक्षणमुच्यते ।
उत्तमाधमभेदेन भेदो हि द्विविधो मतः ॥
उत्तमं यद्विधानं स्यादङ्गुमानं प्रकीर्त्तितम् ॥१॥
अधमं तच्च यत् सर्व्वं गुणमानं प्रकीर्त्तितम् ॥२॥
तत्पुनस्त्रिविधं प्रोक्तमादिमध्यान्तभेदतः ।
यो मुष्टिविंशतिसमायततीक्ष्णधारो
भर्त्तुर्भवेत् प्रसरतोऽपि चतुरङ्गुलीभिः ।
मानेन चाष्टपलिकः स हि खड्गमध्ये
नातिप्रभञ्जनविजयफलप्रदः स्यात् ॥
यो द्वादशाष्टनवमुष्टिभिरायतः स्यात्
मन्दो भवेत् प्रसरतोऽपि चतुर्थभागः ।
तावत्पलैः परिमितस्तु ततोऽधिको वा
खड्गाधमो धनयशःकुलनाशनाय ॥
नागार्ज्जुनोऽपि ।
यावन्तो मुष्टयो दैर्घ्ये तदर्द्धाङ्गुलयो यदा ।
प्रसरे तच्चतुर्थांशमिति वै मानमुत्तमम् ॥
यावन्तो मुष्टयो दैर्घ्ये प्रसरे तत्त्रिभागिकः ।
पलैस्तदर्द्धैस्तुलितः स खड्गो मध्य उच्यते ॥
यावन्तो मुष्टयो दैर्घ्ये तुर्य्यांशः प्रसरे तु तत् ।
अधमः कीर्त्तितः खड्गस्तत्समो वाधिकः
पलैः ॥
भौमानामिदमुद्दिष्टं दिव्यास्तु लघवो मताः ॥"
इति खड्गपरीक्षायां मानाध्यायः ॥*॥
भोजस्तु ।
"दीर्घता लघुता चैव स्वरविस्तीर्णता तथा ।
दुर्भेद्यता सुघटता खड्गानां गुणसंग्रहः ॥
खर्व्वता गुरुता चैव मन्दता तनुता तथा ।
सुभेद्यता दुर्घटता खड्गानां दोषसंग्रहः ॥
इति निखिलमुदारमुक्तमत्र
बहुतन्त्रेषु निरूप्य खड्गयष्टेः ।
नृपतिरिति विचिन्त्य यो बिभर्त्ति
स चिरतरां श्रियमुच्छ्रितां लभेत ॥"
इति युक्तिकल्पतरूक्तखड्गपरीक्षा समाप्ता ॥

**तरसं**, क्ली, (तॄ + बाहुलकात् असच् ।) मांसम् । इत्यमरः । २ । ६ । ६३ ॥ (यथा, कात्यायन-श्रौतसूत्रे ।
"तरसमयाः पूर्व्वाग्निभागाः ॥"
"तरसमया मांसमयाः ।" इति कर्कः ॥)

**तरस्थानं**, क्ली, (तराय अवतरणाय यत् स्थानम् । तरस्य स्थानं वा ।) घट्टः । इति जटाधरः ॥

**तरस्वान्**, [त्] त्रि, (तरो बलं वेगो वा अस्यास्तीति मतुप् । मस्य वः ।) शूरः । वेगी । इति व्याकरणम् ॥ (चतुर्थमनुपुत्रविशेषः । यथा, हरिवंशे । ७ । ८८ ।
"तरङ्गभीरुर्धृष्णश्च तरस्वानुग्र एव च ।
अभिमानी प्रवीरश्च जिष्णुः सङ्क्रन्दनस्तथा ॥")

**तरस्वी**, [न्] त्रि, (तरो वेगः बलं वास्यास्ति । तरस् + "अस्मायामेधास्रजो विनिः ।" ५ । २ । १२१ । इति विनिः ।) शूरः । वेगी । इत्यमरः । ३।३।१२७ । (यथा, भागवते । ८ । १० । ३१ ।
"राहुणा च तथा सोमः पुलोम्ना युयुधेऽनिलः ।

निमुक्तमुभयोर्देवी भद्रकाली तरङ्गिणी ॥")
गरुडे वायौ च पुं । इति राजनिर्घण्टः ॥

तरान्धुः, पुं, (तराय तरणाय तरे तरणे वा अन्धुरिव अतिगभीरमध्यदेशत्वात् तथात्वम् ।) नौकाविशेषः । भड इति भाषा । तत्पर्य्यायः । कोलः १ वहनम् २ वार्घटः ३ वहित्रम् ४ । इति त्रिकाण्डशेषः ॥

तरालुः, पुं, (तराय तरणार्थं अलति पर्य्याप्नोतीति । अल + उण् ।) नौकाविशेषः । इति हारावली ॥

तरिः, स्त्री, (तरत्यनया इति । तॄ + "अच इः ।" उणां । ४ । १३८ । इति इः ।) नौका । इत्यमरः । १।१०।१० ॥ (यथा, महाभारते । १ । १०० । ४८ ।
"साब्रवीद्दाशकन्यास्मि धर्म्मार्थं वाहये तरिम् ॥")
दशा । वस्त्रादिपेटकः । इति हेमचन्द्रः ॥

तरिकः, पुं, (तराय तरणाय हितः । तॄ + ठन् ।) प्लवः । इति त्रिकाण्डशेषः ॥ (तरणं तरस्तन्निमित्तकदेयशुल्केऽधिकारोऽस्यास्य । तरणशुल्कग्रहणाधिकारी । यथा, याज्ञवल्क्ये । २ । २६६ ।
"तरिकः स्थलजं शुल्कं गृह्णन् दाप्यः पणान् दश ॥")

तरिका, स्त्री, (तरिक + टाप् ।) नौका । इति शब्दरत्नावली ॥

तरिणी, स्त्री, (तरणमुत्तरणं कर्त्तव्यत्वेनास्त्यस्याः इति इनिः ङीप् च ।) नौका । इति हेमचन्द्रः ॥

तरिता, स्त्री, (तर + इतच् ।) तर्ज्जनी । इति शब्दचन्द्रिका । सिद्धमम् । गाँजा इति भाषा । यथा, कुलार्णवतन्त्रे ।
"सम्विदा कालकूटञ्च तालकूटञ्च धुस्तुरम् ।
अहिफेनं खर्ज्जूरसत्वारिका तरिता तथा ॥"

तरिरथः, पुं, (तरेर्नौकाया रथ इव तत्परिचालनसाधनत्वात् ।) अरित्रम् । इति हारावली ॥

तरीः, स्त्री, (तरत्यनया इति । तॄ + "अवितॄस्तृतन्त्रिभ्य ईः ।" उणां । ३ । १५८ । इति ईः ।) नौका । (यथा, माघे । ३ । ७६ ।
"तरीषु तत्रत्यमफल्गुभाण्डम् ॥")
गदा । वस्त्रादिपेटकः । इत्युणादिकोषः ॥ धूमः । इति त्रिकाण्डशेषः ॥ द्रोणी । इति जटाधरः ॥ दशा । इति मेदिनी । रे, ४० ॥

तरीषः, पुं, (तॄ + "तॄभ्यामीषन् ।" उणां । ४ । २६ । इति ईषन् ।) शोभनाकारः । भेलः । व्यवसायः । इत्युणादिकोषः ॥ समुद्रः । समर्थः । इति संक्षिप्तसारे उणादिवृत्तिः ॥ स्वर्गः । इति मेदिनी । षे, २७ ॥

तरीषी, स्त्री, (तरीष + संज्ञायां ङीष् ।) इन्द्रकन्या । इति मेदिनी । षे, ३८ ॥

तरुः, पुं, (तरति समुद्रादिकमनेनेति । तॄ + "भृमृशीतॄचरीति ।" उणां । १ । ७ । इति उः ।) वृक्षः । इत्यमरः । २ । ४ । ५ ॥ (यथा, रघुः । ३ । ७० ।
"मुनिवनतरुच्छायां देव्या तया सह शिश्रिये ॥")

तरुकूचिः, पुं, (तरौ वृक्षे कूचयतीति । कूच + इन् ।) वाग्गुदपक्षी । इति त्रिकाण्डशेषः ॥

तरुजीवनं, क्ली, (तरोर्जीवनं जीवनकारणम् ।) वृक्षमूलम् । इति शब्दचन्द्रिका ॥

तरुणं, क्ली, (तॄ + "तॄ दृभ्यो वा ।" उणां । ३ । ५४ । इति उनन् ।) कुब्जपुष्पम् । इति मेदिनी । णे, ४९ ॥

तरुणः, पुं, (तॄ + उनन् ।) स्थूलजीरकः । एरण्डः । इति राजनिर्घण्टः ॥

तरुणः, त्रि, (तरति प्लवते प्रमोदसलिले इति । तॄ + "तॄ दृभ्यो वा ।" उणां । ३ । ५४ । इति उनन् ।) युवा । इति मेदिनी । णे, ४९ । (यथा, महाभारते । १ । ४० । २६ ।
"तरुणस्तस्य पुत्रोऽभूत्तिग्मतेजा महातपाः ॥")
नूतनः । इति धरणिः ॥ (यथा, छन्दोमञ्जर्य्याम् ।
"तरुणं सर्षपशाकं नवौदनं पिच्छिलानि दधीनि ।
स्वल्पव्ययेन सुन्दरि ! ग्राम्यजनो मिष्टमश्नाति ॥")

तरुणज्वरः, पुं, (तरुणश्चासौ ज्वरश्चेति ।) सप्ताहावधिज्वरः । (यथा, चक्रदत्तः ।
"आमप्रराच तरुणं ज्वरमाकुर्मिनैर्जिव ॥")

तरुणदधि, क्ली, (तरुणं तरुणत्वयोक्तं दधीति ।) पञ्चदिनातीतदधि । इति वैद्यकम् ॥
"शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि ।
प्रभाते मैथुनं निद्रा सद्यःप्राणहराणि षट् ॥"
इति चाणक्ये । ६४ ॥

तरुणी, स्त्री, (तरुण + गौरादित्वात् ङीष् ।) द्वितीयवयाः स्त्री । (यथा,—
"ततस्तु तरुणी ज्ञेया द्वात्रिंशद्वत्सरावधि ।
निदाघशरदोर्बाला हिता विषयिणी मता ॥
तरुणी शीतसमये ॥"
"नित्यम्बाला सेव्यमाना नित्यं वर्द्धयते बलम् ।
तरुणी ह्रासयेच्छक्तिम् ॥"
"वृद्धोऽपि तरुणीं गत्वा तरुणत्वमवाप्नुयात् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
भूयोभूयः प्रवर्त्तमानरजाः स्त्री । इत्यमरटीकासारसुन्दरी ॥ तत्पर्य्यायः । युवती २ । इत्यमरः । २ । ६ । ८ ॥ तलुनी ३ युवतिः ४ । इति भरतः ॥ यूनी ५ दिक्करी ६ धनिका ७ धनीका ८ । इति शब्दरत्नावली ॥ घृतकुमारी । दन्तीवृक्षः । चीडानामगन्धद्रव्यम् । पुष्पविशेषः । सेउती इति भाषा ॥ तत्पर्य्यायः । सहा २ कुमारी ३ गन्धाढ्या ४ चारुकेशरा ५ भृङ्गेष्टा ६ रामतरुणी ७ सुदला ८ बहुपत्रिका ९ भृङ्गवल्लभा १० । इति राजनिर्घण्टः ॥ सेवती ११ । यथा, नारसिंहपुराणे ।
"चम्पकात् पुष्पशतकादशोकं पुष्पमुत्तमम् ।
अशोकात् पुष्पसाहस्रात् सेवतीपुष्पमुत्तमम् ।
सेवतीपुष्पसाहस्रात् कुब्जकं पुष्पमुत्तमम् ॥"
(यथा, भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
"शतपत्री तरुणयुक्ता कर्णिका चारुकेशरा ।
महाकुमारी गन्धाढ्या लाक्षाच्छ्यातिमञ्जुला ॥"
अस्या गुणाः । शिशिरत्वम् । स्निग्धत्वम् । पित्तदाहज्वरतृष्णामुखक्लमविस्फोटहिक्काशमनत्वम् । मधुरत्वञ्च । इति राजनिर्घण्टः ॥

तरुणीकटाक्षमालः, पुं, (तरुणीनां कटाक्षाणां माला यत्र ।) तिलकवृक्षः । इति राजनिर्घण्टः ॥

तरुतूलिका, स्त्री, (तरुस्थिता तूलिका चित्रशलाका इव । यद्वा, तरौ वृक्षे दोलयतीति । दुल क्षेपे + ण्वुल् । टापि अत इत्वम् । पृषोदरादित्वात् साधुः ।) वातुलिः । इति हारावली ॥ वादुड इति भाषा ॥ तरुदूलिकापि पाठः ॥

तरुनखः, पुं, (तरौ तरोर्वा नख इव ।) कण्टकः । इति हारावली ॥

तरुभुक्, [ज्] पुं, (तरुं भुनक्तीव । भुज + क्विप् ।) वन्दाकः । इति राजनिर्घण्टः ॥

तरुमृगः, पुं, (तरौ तिष्ठन् मृग इव । शाकपार्थिववत् मध्यमपदलोपी समासः । यद्वा, तरुप्रियो मृगः पशुः ।) वानरः । इति शब्दरत्नावली ॥

तरुरागं, क्ली, (तरो रागो रक्तिमाभा यस्मात् ।) किसलयम् । नूतनपल्लवः । इति हारावली ॥

तरुराजः, पुं, (तरूणां राजा अत्युच्चत्वादस्य तथात्वम् । समासे टच् ।) तालवृक्षः । इति राजनिर्घण्टः ॥ (सर्व्वपूज्यत्वात् स्वर्लोकभोग्यत्वाच्च पारिजातवृक्षः । यथा, हरिवंशे ।१२४।५५।
"यदेतदाहृतं स्वर्गात् तत् त्वदर्थं मया विभो ।
देवोपभोग्यमेतद्धि तरुराजसमुद्भवम् ॥")

तरुरुहा, स्त्री, (तरौ रोहतीति । रुह + कः । टाप् ।) वन्दाकः । इति राजनिर्घण्टः ॥

तरुरोहिणी, स्त्री, (तरुषु रोहतीति । रुह + णिनिः + ङीप् ।) वन्दाकः । इति राजनिर्घण्टः ॥

तरुवल्ली, स्त्री, (तरुषु वल्लीव तरुवल्लीव वा ।) जतुकालता । इति राजनिर्घण्टः ॥

तरुशायी, [न्] पुं, (तरौ तरुकोटरे शाखायां वा शेते इति । शी + णिनिः ।) पक्षी । इति हारावली ॥

तरुसारः, पुं, (तरोः सारः ।) कर्पूरः । इति हारावली ॥ (यथा, सुश्रुते चिकित्सितस्थाने ३५ अध्याये । "तक्मनेत्राणि सुवर्णरजतताम्रायोरीतिदन्तशृङ्गमणितरुसारमयाणि कारयेत् ॥" कर्पूरमत्रार्थेऽस्य विरलप्रयोगस्य ॥)

तरुस्था, स्त्री, (तरौ तिष्ठतीति । स्था + कः टाप् च ।) वन्दाकः । इति राजनिर्घण्टः ॥

तरूटः, पुं, (तरोः कट इव ।) उत्पलकन्दः । अस्य गुणाः । गुरुत्वम् । विष्टम्भित्वम् । शीतलत्वञ्च । इति राजवल्लभः ॥ (यथा, चरके सूत्रस्थाने सप्तविंशेऽध्याये ।
"तरूटविसशालूकक्रौञ्चादनकशेरुकम् ।
शृङ्गाटकं कलोडाच्च गुरुविष्टम्भि शीतलम् ॥")

तर्क, क दीप्तौ । इति कविकल्पद्रुमः ॥ (चुरां-परं-अकं-सेट् ।) क, तर्कयति । वितर्कोऽप्ययम् । (अत्र तर्कं ।) तर्कमयमवगुणं सुधीः । इति दुर्गादासः ॥

तर्कः, पुं, (तर्क+भावे घञ्।) आकाङ्क्षा। वितर्कः। व्यभिचारशङ्काविवर्त्तकः। इति भाषापरिच्छेदः॥ (यथा, महाभारते। ३। ११९। १०८।
"शुष्कतर्कं परित्यज्य आश्रयस्व श्रुतिं स्मृतिम्॥")
स च पञ्चविधः। यथा। आत्माश्रयः १ अन्योन्याश्रयः २ चक्रकः ३ अनवस्था ४ प्रमाणबाधितार्थकः ५। इति जगदीशः॥ एषां लक्षणानि तत्तच्छब्दे द्रष्टव्यानि॥ कक्षः। हेतुशास्त्रम्। तच्च मीमांसादि। इति मेदिनी। के, २५। (यथा, मनुः। १२। १०६।
"आर्षं धर्म्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतरः॥"
न्यायशास्त्रम्। यथा, नैषधे।
"यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः॥"
ज्ञानम्। यथा, महाभारते। १। १९८। १८।
"तं वै पञ्चार्थिनं मन्ये ज्ञातरं तर्कचक्षुषा॥"
अर्थवाद इति कर्कोपाध्यायः। यथा, अक्ताः शर्करा उपदधातीति विधिः श्रूयते। तच्चाञ्जनसाधनं घृतं तैलं वा तन्मध्ये केनाक्ता इति संशये तेजो वै घृतमित्यर्थवादात् घृतेनाक्ता इति निर्णीयते। अतस्तर्कोऽर्थवादः॥")
तर्ककः, पुं, (तर्केण आकाङ्क्षया कायति प्रकाशते इति। कै+कः।) याचकः। इति हेमचन्द्रः॥ (यथा, महाभारते। १२। ४५। ६।
"तथानुजीविनो भृत्यान् संश्रितानतिथीनपि।
कामैः सन्तर्पयामास कृपणांस्तर्ककानपि॥"
तर्कयतीति। तर्क+ण्वुल्।) तर्ककारकश्च॥
तर्कविद्या, स्त्री, (तर्कोपदिष्टा विद्या तर्करूपा वा विद्या वा।) न्यायविद्या। तत्पर्य्यायः। आन्वीक्षिकी २। इत्यमरः। १।६।५॥ (यथा, महाभारते। १३। ३७। १२।
"आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम्॥")
तर्कारी, स्त्री, (तर्कं ऋच्छतीति। ऋ+"कर्म्मण्यण्।" ३। २। १। इत्यण्। ङीप् च।) जयन्तीवृक्षः। इत्यमरः। ४। २। ६५॥ (पर्य्यायोऽस्या यथा, वैद्यकरत्नमालायाम्।
"वैजयन्ती च तर्कारी जयन्ती विजया जया॥"
अस्या गुणा यथा,—
"तर्कारी वरणं स्वादु सतिक्तं कफवातजित्॥"
इति वाभटे सूत्रस्थाने षष्ठेऽध्याये॥
अस्याः व्यवहारो यथा,—
"तर्कारी बिल्वशिग्रुसुरसवत्सकमिश्रैः।
सप्तच्छदपर्णैस्तोयं स्नानसुखञ्च सेवनम्॥"
इति चरके चिकित्सास्थाने षड्विंशेऽध्याये॥
इयं गणिकारिकापि वाच्या। तत्पर्य्याया यथा,
"अग्निमन्थो जयः स स्यात् श्रीपर्णी गणिकारिका।
जया जयन्ती तर्कारी नादेयी वैजयन्तिका॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे॥)
तर्कितः, पुं, चक्रमर्द्दवृक्षः। इति रत्नमाला॥ तर्किलोऽपि पाठः॥ (चक्रमर्द्दशब्देऽस्य विवृतिर्ज्ञातव्या॥)
तर्की, [न्] त्रि, (तर्कोऽस्त्यस्य यद्वा तर्कयतीति। तर्क+णिनिः।) तर्कविशिष्टः। मीमांसकः। यथा,—
"त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्म्मपाठकः।
त्रयश्चाश्रमिणः पूर्ब्बे परिषत् स्याद्दशावरा॥"
इति मनुः। १२। १११॥
तर्कुः, स्त्री, (कृत्+उः। निपातनात् साधुः।) सूत्रनिर्म्माणयन्त्रम्। टेको इति भाषा॥ तत्पर्य्यायः। कपालनालिका २। इति त्रिकाण्डशेषः॥ तर्कुटी ३ सूचला ४। इति हारावली॥ (कुम्भकारस्य चक्राकारशिलाभाण्डम्। यथा, अनर्घराघवे। २। ६।
"शुक्रं सम्प्रति यावदभ्युदयते तत्तर्कुटङ्कोन्मुखा रथ्याडिम्बरणज्वटावलयितो देवास्त्रयामीश्वरः॥")
तर्कुटं, क्ली, (तर्कयति सूत्रोत्पादकतया शोभते इति। तर्क दीप्तौ+बाहुलकात् उटन्।) कर्त्तनम्। इति त्रिकाण्डशेषः॥ काटनाकाटा इति भाषा॥
तर्कुटी, स्त्री, (तर्कुट+स्त्रियां गौरादित्वात् ङीष्।) तर्कुः। इति हारावली। २१३।
तर्कुपिण्डः, पुं, (तर्कुस्थितः पिण्डः। मध्यपदलोपिसमासः।) तर्कुस्थितस्तूपिण्डः। टेकोर वाँटुल इति भाषा॥ तत्पर्य्यायः। वर्त्तिनी २। इति जटाधरः॥ तर्कुपीठी ३ वर्त्तुला ४। इति हारावली। २१३॥
तर्कुपीठी, स्त्री, (तर्कुस्थिता पीठी स्वरूपो न्हस्पिण्डः।) तर्कुपिण्डः। इति हारावली। २१३॥
तर्कुलासकः, पुं, (लासयति शोभयतीति। लस कान्तौ+णिच्+ण्वुल्। तर्कुः सूत्रनिर्म्माणयन्त्रं तस्या लासकः।) आक्षोलः। इति हारावली। २१३॥ खरसा इति भाषा॥
तर्कुशाणः, पुं, (तर्कोः शाणः।) सामकः। इति त्रिकाण्डशेषः॥ टेकोर शाण इति भाषा॥
तर्क्षुः, पुं, (तरक्षुः पृषोदरादित्वात् साधुः।) तरक्षुः। इति शब्दरत्नावली॥
तर्क्ष्यः, पुं, यवक्षारः। इति रत्नमाला॥
तर्ज्ज, भर्त्सने। इति कविकल्पद्रुमः॥ (भ्वां-परं-सकं-सेट्।) तर्ज्जति। इति दुर्गादासः॥
तर्ज्ज, क ङ भर्त्से। इति कविकल्पद्रुमः॥ (चुरां-आत्मं-सकं-सेट्।) क ङ, तर्ज्जयते। भर्त्सः सन्तर्जनम्। तामतर्ज्जयदम्बरे। इति रघुप्रयोगस्तु तर्ज्जनं तर्ज्जः। तर्ज्जं करोतीति णौ साध्यः। इति दुर्गादासः॥
तर्ज्जनं, क्ली, (तर्ज्ज+भावे ल्युट्।) भर्त्सनम्। यथा। अधीरायास्तर्ज्जनताडनादि। इति रसमञ्जरी॥ (यथाच कुमारे। ६। ४५।
"भ्रूभेदिभिः सकम्पोष्ठैर्ललिताङ्गुलितर्ज्जनैः।
यत्र कोपैः कृताः स्त्रीणामाप्रसादार्थिनः प्रियाः॥")
तर्ज्जनी, स्त्री, (तर्ज्ज्यतेऽनयेति। तर्ज्ज भर्त्सने+करणे ल्युट्। ततः स्त्रियां ङीप्।) अङ्गुष्ठसमीपाङ्गुलिः। तत्पर्य्यायः। प्रदेशिनी २। इत्यमरः। २। ६। ८१॥ सा तु गर्भस्थस्य चतुर्भिर्मासैर्भवति। इति सुखबोधः॥ (यथा, कथासरित्सागरे। १७। ८८।
"तच्छ्रुत्वा श्वशुरं तं सा वधूः सोमप्रभा क्रुधा।
विलोक्य भासयामास प्रमार्ज्जामिव तर्ज्जनीम्॥")
तर्ज्जिकः, पुं, (तर्ज्जस्तर्ज्जनमस्त्यस्य। तर्ज्ज+ठन्।) देशविशेषः। तत्पर्य्यायः। ताजिकः २। इति हेमचन्द्रः। ४। २४॥
तर्णः, पुं, (तर्णोति तृणादिकं भक्षयतीति। तृण भक्षणे+अप्।) वत्सः। इति हेमचन्द्रः। ४। ३२६॥
तर्णकः, पुं, (तर्ण एव। स्वार्थे कन्।) सद्योजातवत्सः। इत्यमरः। २। ९। ६१॥ कोमले वाछुर इति भाषा॥ (यथा, राजतरङ्गिण्याम्। ५। ४३६।
"स्नानचौरी वरा पर्णी सच्छ्राद्धा निपात्यते।
आलिङ्गमाना क्रन्दद्भिस्तर्णकैरिव दारकैः॥"
बालकः। यथा, अनर्घराघवे। २। २३।
"मुनिविनियोगमूकप्रकृढ्स्कन्दुग्धाङ्गुलानि वर्ण्णिभि।
गोकर्णान्तर्णकोऽयं तर्णोत्थपकच्छकच्छेषु॥")
तर्णिः, पुं, (तरणिः पृषोदरादित्वाद्लोपः।) सूर्य्यः। प्लवः। इति शब्दार्थकल्पतरुः॥
तर्त्तरीकं, क्ली, (तीर्य्यतेऽनेनेति। तॄ+"पर्फरीकादयश्च।" उणां। ४। २०। इति ईकप्रत्ययेन निपातनात् साधुः।) नौका। (तरतीति। कर्त्तरि ईकः।) पारगे, त्रि। इति मेदिनी। के, १९१॥
तर्द्द, हिंसे। इति कविकल्पद्रुमः॥ (भ्वां-परं-सकं-सेट्।) तर्द्दति। इति दुर्गादासः॥
तर्द्दूः, स्त्री, (तरति प्लवते इति। तॄ+"दो दुक् च।" उणां। १। ९१। इति ऊः दुगागमश्च।) दारुहस्तकः। इत्यमरः। २। ९। ३४। काठेर हाता इति भाषा॥
तर्पणं, क्ली, (तृप प्रीणने+भावे ल्युट्।) तृप्तिः। प्रीणनम्। इत्यमरः। २। ९। ५६॥ (यथा, कथासरित्सागरे। २६। १३६।
"तत्राहूय तरोर्मूले वेतालं शवकेवरे।
पूजयित्वाकरोत्तस्य नृमांसबलितर्पणम्॥")
यज्ञकाष्ठम्। इति हेमचन्द्रः॥ (तृप्यन्ति पितरो येन। तृप्+करणे ल्युट्।) देवर्षिपितृमनुष्याणां जलाञ्जलिदानेन तृप्तिसम्पादनम्। यथा,
"एवं स्नात्वा पितॄन् देवान् मनुष्यांस्तर्पयेन्नरः।
नाभिमात्रे जले स्थित्वा चिन्तयेदूर्द्ध्वमानसः॥
आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम्।
त्रींस्त्रीञ्जलाञ्जलीन् दद्यादाकाशे दक्षिणे तथा॥
वसित्वा वसनं शुष्कं स्थले चास्तीर्णबर्हिषि।
विधिज्ञास्तर्पणं कुर्य्युर्न पात्रे तु कदाचन॥
यदपां क्रूरमांसन्तु यदमेध्यन्तु किञ्चन।
अशान्तं मलिनं यच्च तत् सर्व्वमपगच्छतु॥
गृहीत्वानेन मन्त्रेण तोयं सव्येन पाणिना।
प्रक्षिपेद्दिशि नैर्ऋत्यां रक्षोमघ्नतयेऽञ्जलिम्॥
अगाधिकन्तु यद्युक्तं पापादृयश्च प्रतिग्रहम्।

"गुरुपत्नीषु युवतीं नाभिवाद्येत पादयोः ।
कुर्व्वीत वन्दनं भूमौ असावहमिति ब्रुवन् ॥
विप्रोष्य पादग्रहणमन्वहञ्चाभिवादनम् ।
गुरुदारेषु कुर्व्वीत सतां धर्म्ममनुस्मरन् ॥
अभिवादनशीलः स्यान्नित्यं वृद्धेषु धर्म्मतः ।
असावहम्भो नामेति सम्यक् प्रणतिपूर्व्वकम् ॥
आयुरारोग्यसिद्ध्यर्थं तन्द्रादिपरिवर्ज्जितः ।
आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने ॥
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्व्वाक्षरः प्लुतः ।
यो न वेत्त्यभिवादस्य द्विजः प्रत्यभिवादनम् ।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥
सव्यस्तपाणिना कार्य्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥
लौकिकं वैदिकञ्चापि तथाध्यात्मिकमेव वा ।
आददीत यतो ज्ञानं तं पूर्व्वमभिवादयेत् ॥
ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् ।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव तु ॥"*॥
अभिवादनीया गुरवो यथा,—
"उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः ।
मातुलः श्वशुरस्त्राता मातामहपितामहौ ।
बन्धुर्ज्येष्ठः पितृव्यश्च पुंस्येते गुरवः स्मृताः ॥
माता मातामही गुर्व्वी पितुर्मातुश्च सोदराः ।
श्वश्रूः पितामही ज्येष्ठा धात्री च गुरवः स्त्रियाम् ।
इत्युक्तो गुरुवर्गोऽयं मातृतः पितृतो द्विजाः ॥
अनुवर्त्तनमेतेषां मनोवाक्कायकर्म्मभिः ।
गुरून् दृष्ट्वा समुत्तिष्ठेदभिवाद्य कृताञ्जलिः ॥"
इति कूर्म्मपुराणे ११ अध्यायः ॥ *॥
अथ सप्तधा नतिलक्षणानि ।
"त्रिकोणमथ षट्कोणमर्द्धचन्द्रं प्रदक्षिणम् ।
दण्डमष्टाङ्गमुग्रञ्च सप्तधा नतिलक्षणम् ॥
ऐशानी वाथ कौबेरी दिक् कामाख्याप्रपूजने ।
प्रशस्ता स्थण्डिलादौ च सर्व्वकर्म्मसु सर्व्वतः ॥
त्रिकोणादिव्यवस्थाञ्च यदि पूर्व्वमुखो यजेत् ।
पश्चिमात् शाम्भवीं गत्वा व्यवस्थां निर्द्दिशेत्तदा ॥
यदोत्तरामुखः कुर्य्यात् साधको देवपूजनम् ।
तदा याम्यात्तु वायव्यां गत्वा कुर्य्यात्तु संस्थितिम् ॥
दक्षिणाद्वायवीं गत्वा दिशं तस्माच्च शाम्भवीम् ।
ततोऽपि दक्षिणं गत्वा नमस्कारस्त्रिकोणवत् ।
त्रिकोणो यो नमस्कारस्त्रिपुराप्रीतिदायकः ॥१॥
दक्षिणाद्वायवीं गत्वा वायव्यात् शाम्भवीं ततः ।
ततोऽपि दक्षिणं गत्वा तां त्यक्त्वाग्नौ प्रविश्य च ॥
अग्नितो राक्षसीं गत्वा ततश्चाप्युत्तरां दिशम् ।
उत्तराच्च तथाग्नेयीं भ्रमणं द्विस्त्रिकोणवत् ।
षट्कोणो यो नमस्कारः प्रीतिदः शिवदुर्गयोः ॥२॥
दक्षिणाद्वायवीं गत्वा तस्माद्व्यावृत्य दक्षिणम् ।
गत्वा योऽसौ नमस्कारः सोऽर्द्धचन्द्रः प्रकीर्त्तितः ॥ ३ ॥
सकृत् प्रदक्षिणं कृत्वा वर्त्तुलाकृतिसाधकः ।
नमस्कारः कथ्यतेऽसौ प्रदक्षिण इति द्विजैः ॥४॥
त्यक्त्वा स्वमाननस्थानं पश्चात्कृत्वा नमस्कृतिः ।
प्रदक्षिणं विना या तु निपत्य भुवि दण्डवत् ।
दण्ड इत्युच्यते देवैः सर्व्वदेवौघमोददः ॥ ५ ॥
पूर्व्ववद्दण्डवद्भूमौ निपत्य हृदयेन तु ।
चिबुकेन मुखेनाथ नासया ललिकेन च ॥
ब्रह्मरन्ध्रेण कर्णाभ्यां यद्भूमिस्पर्शनं क्रमात् ।
तदष्टाङ्ग इति प्रोक्तो नमस्कारो मनीषिभिः ॥६॥
प्रदक्षिणत्रयं कृत्वा साधको वर्त्तुलाकृतिः ।
ब्रह्मरन्ध्रेण संस्पर्शः क्षितेर्यः स्यान्नमस्कृतौ ।
स उग्र इति देवौघैरुच्यते विष्णुतुष्टिदः ॥ ७ ॥
नदानां सागरो यादृग्द्विपदां ब्राह्मणो यथा ।
नदीनां जाह्नवी यादृग्देवानामिव चक्रधृक् ।
नमस्कारेषु सर्व्वेषु तथैवोग्रः प्रशस्यते ॥
त्रिकोणाद्यैर्नमस्कारैः कृतैरेव तु भक्तितः ।
चतुर्वर्गं लभेद्भक्तो न चिरादेव साधकः ॥
नमस्कारो महायज्ञः प्रीतिदः सर्व्वतः सदा ।
सर्व्वेषामपि देवानामन्येषामपि भैरव ! ॥
योऽसावुग्रो नमस्कारः प्रीतिदः सततं हरेः ।
महामायाप्रीतिकरः स नमस्कारणोत्तमः ॥"
इति कालीपुराणम् ॥

**नमस्कारी**, स्त्री, ( नमस्कारस्तदञ्जलिरिव पत्र-सङ्कोचोऽस्त्यस्या इति । अच् । गौरादित्वात् ङीष् । ) खदिरिकाशाकः । लाजालु इति ख्यात इति केचित् ॥ किन्तु रभसेन वराहक्रान्ता लज्जालुः समङ्गा जलकारिकेति खदिरिकायाम् । सङ्कोचपत्री लज्जालुरिति लज्जालुकायां पठितम् । अञ्जलिरूपपत्त्रत्वादञ्जलेर्नमस्कारव्यञ्जकत्वात् नमस्कारशीलेव नमस्कारी । इत्यमरटीकायां भरतः ॥ ( यथास्याः पर्य्यायो वैद्यकरत्नमालायाम् ।
"गण्डकाली नमस्कारी समङ्गा खदिरी कथिता ॥")

**नमस्यः**, त्रि, ( नमस्य नामधातुः + कर्म्मणि यत् । ) नमस्कारयोग्यः । यथा,—
"स्त्रियो नमस्या वृद्धाश्च वयसा पत्युरेव ताः ॥"
इति मलमासतत्त्वम् ॥

**नमस्या**, स्त्री, (नमस्य + भावे अः । स्त्रियां टाप् ।) पूजा । इत्यमरः । २ । ७ । ३५ ॥

**नमस्यितः**, त्रि, ( नमःकृतमिति । नमस् + "नमोवरिवः इति ।" ३ । १ । १६ । इति क्यच् । ) पूजितः । इत्यमरः । ३ । १ । १०१ ॥

**नमितः**, त्रि, नमोऽस्य जात इत्यर्थे इतच्प्रत्ययनिष्पन्नः । जातनमस्कारः । नामितः । यथा,—
"अपः शालग्रामाप्लवनगरिमोद्गारसरसाः
सुधीः को वा कौपीरपि नमितमूर्द्धा न पिबति ॥"
इति विदग्धमाधवनाटकम् ॥

**नमुचिः**, पुं, (न मुञ्चतीति । मुच + इन् । स च कित् । ) कन्दर्पः । दैत्यभेदः । इति मेदिनी । चे, १४ ॥ यथा,—
"कश्यपस्य दनुर्नाम भार्य्यासीद्द्विजसत्तम ! ।
तस्यास्तु द्वौ सुतावास्तां सहस्राक्षाद्बलाधिकौ ॥
ज्येष्ठः शुम्भ इति ख्यातो निशुम्भश्चापरोऽसुरः ।
तृतीयो नमुचिर्नाम महाबलसमन्वितः ॥"
इति वामने ५२ अध्यायः ॥
( इन्द्र एनं निहतवान् । यथा, महाभारते । ९ । ४३ । ३३—३६ ।
"नमुचिर्वासवाद्भीतः सूर्य्यरश्मिं समाविशत् ।
तेनेन्द्रः सख्यमकरोत् समयञ्चेदमब्रवीत् ॥
न चार्द्रेण न शुष्केण न रात्रौ नापि चाहनि ।
वधिष्याम्यसुरश्रेष्ठ ! सखे ! सत्येन ते शपे ॥
एवं स समयं कृत्वा दृष्ट्वा नीहारमीश्वरः ।
चिच्छेदास्य शिरो राजन्नपां फेनेन वासवः ॥
तच्छिरो नमुचेश्छिन्नं पृष्ठतः शक्रमन्वयात् ।
भो मित्रहन् ! पापेति ब्रुवाणं शक्रमन्तिकात् ॥")

**नमुचिद्विट्**, [ ष् ] पुं, ( नमुचिं द्वेष्टीति । द्विष् + "सत्सूद्विषेति ।" ३ । २ । ६१ । इति क्विप् ।) इन्द्रः । यथा, माघे । १ । ५१ ।
"विगृह्य चक्रे नमुचिद्विषा बली
य इत्थमस्वास्थ्यमहर्दिवं दिवः ॥"

**नमुचिसूदनः**, पुं, (नमुचिं दैत्यविशेषं सूदयतीति । सूदि + ल्युः ।) इन्द्रः । इत्यमरः । १ । १ । ४६ ॥

**नमेरुः**, पुं, ( नम्यते इति । नम + बाहुलकात् एरुः । ) रुद्राक्षः । इति भूरिप्रयोगः ॥ सुरपुन्नागः । इति राजनिर्घण्टः ॥ ( यथा, रघुः । ४ । ७४ ।
"विशश्रमुर्नमेरूणां छायास्वध्यास्य सैनिकाः ॥")

**नमोगुरुः**, पुं, ( नमस्करणीयो गुरुः । ) नमस्कारैर्गुरुः । ब्राह्मणः । इति काचित् शब्दरत्नावली ॥

**नम्ब**, गतौ । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-सकं-सेट् । ) ओष्ठ्यवर्गशेषोपधः । नम्बति । इति दुर्गादासः ॥

**नम्रः**, त्रि, ( नमतीति । नम + "नमिकम्पीति ।" ३।२।१६७। इति रः ।) नतः । इति हलायुधः ॥ ( यथा, पञ्चतन्त्रे । २ । १८६ ।
"यन्नम्रं सरलञ्चापि तच्चापत्सु न सीदति ।
धनुर्मित्रं कलत्रञ्च दुर्लभं शुद्धवंशजम् ॥" )

**नम्रकः**, पुं, ( नम्र इव प्रतिकृतिः । "इवे प्रतिकृतौ ।" ५ । ३ । ९६ । इति कन् । ) वेतसः । इति भावप्रकाशः ॥ ( नम्र एव । स्वार्थे कन् । नते, त्रि ॥ )

**नय**, ङ गतौ । इति कविकल्पद्रुमः ॥ ( भ्वां-आत्मं-सकं-सेट् । ) ङ, नयते । इति दुर्गादासः ॥

**नयः**, पुं, (नीयतेऽनेनेति । नी + "एरच् ।" ३ ।३ । ५६ । इत्यच् ।) नीतिः । तत्पर्य्यायः । न्यायः २ इत्यमरः । ३।२।९ ॥ (यथा, पञ्चतन्त्रे ।१।३८५ ।
"कथञ्चिन्न विकल्पन्ते विद्वद्भिश्चिन्तिता नयाः ॥")
द्यूतविशेषः । इति मेदिनी । ये, ३४ ॥ नैगमादिः । इति हेमचन्द्रः ॥ न्याय्ये नेतरि च त्रि । इति शब्दरत्नावली ॥

**नयनं**, क्ली, ( नीयते दृष्टिविषयोऽनेनेति । नी + करणे ल्युट् । ) चक्षुः । इत्यमरः । २ । ६ । ९३ ॥ ( यथा, मार्कण्डेये । १८ । ४० ।
"नीलोत्पलाभनयनां पीनश्रोणिपयोधराम् ॥")
णी ञ प्रापणे इत्यस्माद्भावे ल्युट्प्रत्ययः प्रापणम् । ( आनयनम् । यथा, हरिवंशे । १२७ । ११ ।
"तन्त्वं श्रृणुष्व देवेश ! श्रूयतां वदतो मम ।
नयनं पारिजातस्य द्वारकां मम रोचते ॥")

नयनी, स्त्री, (नीयतेऽनयेति । नी+करणे ल्युट्+ ङीप् । ) कनीनी । इति शब्दचन्द्रिका ॥

नयनोत्सवः, पुं, ( नयनयोरुत्सवो यस्मात् । ) प्रदीपः । इति शब्दरत्नावली ॥ चक्षुरुत्सवश्च ॥

नयनोपान्तः, पुं, ( नयनयोरुपान्तः प्रान्तभागः । ) अपाङ्गः । इति राजनिर्घण्टः ॥

नयनौषधं, क्ली, ( नयनयोरौषधम् । ) पुष्पकासीसम् । इति हेमचन्द्रः । ४ । १२३ ॥

नयपीठी, स्त्री, ( नयस्य पीठीव । ) अष्टकाङ्गम् । इति त्रिकाण्डशेषः ॥ छक् इति भाषा ॥

नयविशारदः, पुं, ( नये नीतौ विशारदो विज्ञः ।) नीतिशास्त्रज्ञः । यथा,—

"षाड्गुण्यविधितत्त्वज्ञो देशभाषाविशारदः ।
सान्धिविग्रहिकः कार्य्यो राज्ञा नयविशारदः ॥"
इति मात्स्ये ८६ अध्यायः ॥

नरं, क्ली, ( नृणाति प्रापयति आनन्दमिति । नृ प्रापणे+अच् । ) रामकर्पूरतृणम् । इति मेदिनी । रे, ५२ ॥

नरः, पुं, ( नृणातीति । नृ+अच् । ) मनुष्यः । इत्यमरः । २ । ६ । १ ॥ (यथा, मनुः ।१ । ६६ ।
"बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ॥" )

पुरुषः । इति राजनिर्घण्टः ॥ ( यथा, देवीभागवते । ५ । ७ । १४ ।
"यदा कदापि दैत्येन्द्र ! मार्य्यास्ते मरणं ध्रुवम् ।
न नरेभ्यो महाभाग ! स्वस्ति ते महिषासुर ! ॥")

विष्णुः । ( महादेवः । यथा, महाभारते । १३ । १७ । ११५ ।
"गान्धारश्च सुवासश्च तपःसक्तो रतिर्नरः ॥")

अर्ज्जुनः । इति मेदिनी । रे, ५२ ॥ ( नरमुनेरंशजातत्वादस्य तथात्वम् ॥ ) शङ्कुः । इति लीलावती ॥ * ॥ अथ नरजन्मकारणम् । "पितुः शुक्राधिको नरः ॥" अन्यच्च । सुखबोधे ।
"विषमायां तिथौ विप्रं कुर्य्याद्दीनस्तु कन्यकाम् ।
समायां पुरुषं नूनं केचिदाहुर्म्मनीषिणः ॥
चतुरशीतिलक्षाणि योनिभ्रान्ता ततःपरं नरः ।
ततस्तु ब्राह्मणश्च स्यादभयं नात्र संशयः ॥"
इति पाद्मोत्तरखण्डे १५ अध्यायः ॥

( स्वनामख्यातो हरेरंशभूतो धर्म्मपुत्रःऋषिः । यथा, देवीभागवते । ४ । ५ । १५ ।
"हरेरंशौ स्थितौ तत्र नरनारायणावृषी ।
पूर्णं वर्षसहस्रन्तु चक्राते तप उत्तमम् ॥"
अस्य विवरणन्तु तत्रैव विशेषतो द्रष्टव्यम् ॥ * ॥

देवयोनिविशेषः । यथा, विष्णुपुराणे ।२।५।५८।
"नरकिन्नररक्षांसि वयःपशुमृगोरगान् ॥" )

नरकः, पुं, ( नृणानि क्लेशं प्रापयतीति । नृ+ "कृञादिभ्यः संज्ञायां वुन् ।" उणां । ५ । ३५ । इति वुन् । ) देवराजिप्रभेदः । इत्युणादिकोषः ॥ (नरस्य मनुष्यस्य कं शिरो यत्र ।) दैत्यविशेषः । स पृथिव्या गर्भे वराहदेवाज्जातः । यथा,—
"रजस्वलाया गोत्राया गर्भे वीर्य्येण पोत्रिणः ।
यतो जातस्ततो भूतो देवपुत्रोऽपि सोऽसुरः ॥"

तस्य नामकारणं यथा,—
"मानुषस्य शिरस्तत्र मृतस्य प्राप्य बालकः ।
स्वशिरस्तत्र विन्यस्य ददृशाते तदा तदा ॥
नरस्य शीर्षे स्वशिरो निधाय स्थितवान् यतः ।
तस्मात्तस्य मुनिश्रेष्ठो नरकं नाम वै व्यधात् ॥"

तस्य राज्यं यथा,—
श्रीभगवानुवाच ।
"करतोया सत्यगङ्गा पूर्ब्बभागावधिश्रिता ।
यावल्ललितकान्तास्ति तावद्देशं पुरं तदा ॥
अत्र देवी महामाया योगनिद्रा जगत्प्रसूः ।
कामाख्यारूपमादाय सदा तिष्ठति शोभना ॥
अत्रास्ति नदराजोऽयं लौहित्यो ब्रह्मणः सुतः ।
अत्रैव दशदिक्पालाः स्वे स्वे पीठे व्यवस्थिताः ॥
अत्र स्वयं महादेवो ब्रह्मा चाहञ्च सर्व्वदा ।
चन्द्रः सूर्य्यश्च सततं वसतेऽत्रैव पुत्रक ! ॥
सर्व्वे क्रीडार्थमायाता रहस्यं देशसत्तमम् ।
अत्र श्रीः सर्व्वतोभद्रा भोग्यमत्र सदा बहु ॥
अत्रैव हि स्थितो ब्रह्मा प्राङ्नक्षत्रं ससर्ज्ज ह ।
ततः प्राग्ज्योतिषाख्येयं पुरी शक्रपुरीसमा ॥
अत्र त्वं वस भद्रन्ते ह्यभिषिक्तो मया स्वयम् ।
कृतदारः सहामात्यै राजा भूत्वा महाबल ! ॥"

तस्य महिषी माया यथा,—
"ततो विदर्भराजस्य पुत्रीं मायाख्यां हरिः ।
पुत्रार्थे वरयामास नरकस्य समां गुणैः ॥
तामुद्वाह्य हृषीकेशस्तस्मिन् पुरवरे स्वयम् ।
तया समं स्ततनयं राजत्वेनाभ्यषेचयत् ॥"

तस्य पुत्रा यथा,—
"ऋतुमत्याञ्च जायायां कालेन नरकः क्रमात् ।
भगदत्तं महाशीर्षं मदवन्तं सुमालिनम् ॥
चतुरो जनयामास पुत्रांस्तांश्च क्षितेः सुतः ।
महासत्त्वान् महावीर्य्यान् देवैरन्यैर्दुरासदान् ॥"
इति कालीपुराणे ३८ अध्यायः ॥

पापिनां यातनास्थानम् । तत्सङ्ख्या यथा,—
"पातालानाञ्च सप्तानां लोकानाञ्च यदन्तरम् ।
सुचिरं तानि कथ्यन्ते भुवनानि चतुर्द्दश ॥
अष्टाविंशति विख्यातास्ततो नरककोटयः ।
नरकाणामधस्तात्तु धूमः कालाग्निसम्भवः ॥
तस्याधस्तादनन्ताख्यो रुद्रः सर्व्वमयो महान् ।
तदधो धर्म्मचक्रन्तु येनेदं धार्य्यते जगत् ॥"
इति वह्निपुराणे गणभेदनामाध्यायः ॥

तत्पर्य्यायः । नारकः २ निरयः ३ दुर्गतिः ४ । इत्यमरः । १ । ६ । १ ॥ * ॥ नरकसंख्या यथा,—
"उक्तोर्द्धे नरकाः शक्र ! कोट्यः पञ्चाशमानतः ।
चत्वारिंशन्मितं तेषां प्रधानं तन्निबोधत ॥"
उक्तोर्द्धे पाताले कालाग्निरुद्रस्य पुरोर्द्धे ।
"अवीचिः कृमिभक्ष्यश्च तथा वैतरणी महान् ।
कूटशाल्मलिरुच्छ्रासरुद्धश्चान्धसरौरवम् ॥
निरुच्छ्वासः पूतिमांसस्तप्तलाक्षाश्रितं जलम् ।
क्रकच्छेदस्तथा पङ्कं कृष्णायससुतापिनम् ॥
पूतिपूर्णस्तथा मेदस्तम्भश्च रुधिरं वसा ।
तामिस्रस्तपतुण्डश्च तीक्ष्णासिश्च नपुंसकः ।
लौहतप्तस्त्रियो भीमा अङ्गारराशिकोपरि ।
कुम्भीपाकः क्षुरस्थेयः सञ्जीवनसुतापनम् ॥
कालसूत्रं महापङ्कं शीतोष्णं क्षुरमेव च ।
अम्बरीषं तथा घोरं महारौरवसंज्ञकः ॥
सूचीमुखेन्द्रयन्त्रश्च तैलं तप्तञ्च पुत्तथा ।
असिपत्रं तथा शाल्मं भूमिर्वागपहारिका ॥"
इति देवीपुराणम् ॥

नरकागामिनो यथा,—
यम उवाच ।
"न गच्छन्ति नरा घोरान् बहवोऽधर्म्मनिर्म्मितान् ।
वधांश्च सुबहूंस्तत्र प्राप्नुवन्ति तपोधन ! ॥
विस्तरेण तु तत् सर्व्वं ब्रवीमि मुनिसत्तम ! ।
श्रूयतां तन्महाभाग ! श्रुत्वा चैवोपधारय ॥
नाग्निचिन्नरकं याति न सत्पुत्री न भूमिदः ।
शूरश्च शतवर्षी च वेदानाञ्चैव पारगः ॥
पतिव्रता न गच्छन्ति सत्यवाक्याश्च ये नराः ।
अजिताश्चाशठाश्चैव स्वामिभक्ताश्च ये नराः ॥
तिलं गाञ्च हिरण्यञ्च पृथिवीञ्चापि शाश्वतीम् ।
ब्राह्मणेभ्यः प्रयच्छन्ति न गच्छन्ति न संशयः ॥
स्वदारनिरता दान्ताः परदारविवर्ज्जकाः ।
सर्व्वभूतात्मभूताश्च सर्व्वभूतानुकम्पकः ॥
न गच्छन्ति तु तं देशं पापिष्ठं तमसावृतम् ।
यातनास्थानसंपूर्णं हाहाप्रतिभयस्वनम् ॥
ज्ञानवन्तो द्विजा ये च ये च विद्यापरं गताः ।
उदासीना न गच्छन्ति स्वाम्यर्थे च हता नराः ॥
न गच्छन्त्यत्र दातारः सर्व्वभूतहिते रताः ।
शुश्रूषका मातृपित्रोर्न गच्छन्ति न संशयः ॥
अहिंसका न गच्छन्ति ब्रह्मचर्य्यव्यवस्थिताः ।
पतिव्रता दानवन्तो द्विजभक्ताश्च ये नराः ॥
यथोक्तं यजमानाश्च सत्रयाजिन एव च ।
चातुर्म्मास्यकरा ये च ये द्विजा आहिताग्नयः ॥
गुरुचित्तानुपालाश्च व्रतिनो मौनयन्त्रिताः ।
नित्यस्वाध्यायिनो दान्ताः सदा सन्ध्याश्च ये नराः ॥
मानवान् पूजयन्तो वै आत्मभावेन भाविताः ।
अपर्व्वमैथुना ये च न गच्छन्ति द्विजोत्तमाः ॥
ब्राह्मणा अमरत्वञ्च प्राप्नुवन्ति न संशयः ॥
निराशाः सर्व्वकामेभ्यो निराशाः सुजितेन्द्रियाः ।
न गच्छन्ति हि तं घोरं यत्र ते पापकर्म्मिणः ॥"
इति वराहपुराणम् ॥ * ॥

नरकगामिनो यथा,—
नारद उवाच ।
"दुष्कर्म्माण्यपि वक्ष्यामि नरकं यैः प्रयान्ति हि ।
सर्व्वेष्वेव तु कार्य्येषु देवपूर्व्वेषु भूमिप ! ॥
घ्नन्ति पुत्रान् पशून् क्षतृखान् ब्राह्मणातिक्रमः कृतः ।
गुर्व्वर्थं वा भयार्त्तं वा वर्ज्जयित्वा महीपते ! ।
येऽनृतं कथयन्ति स्म ते वै निरयगामिनः ॥
प्रपाणाञ्च सभानाञ्च संक्रमाणाञ्च मारिष ।
आगाराणाञ्च भेत्तारो नरा निरयगामिनः ॥
ये परस्वापहर्त्तारः परस्वानाञ्च नाशकाः ।
सूचकाश्च परेषां हि ते नरा नरकाशुगाः ॥
सूचकाः सन्धिभेत्तारः परदत्तुपजीविनः ।

अकृतज्ञाश्च मित्राणां ते वै निरयगामिनः ॥
पाषण्डा दूषकाश्चैव समयानाञ्च दूषकाः ।
ये प्रत्यवस्थिताश्चैव ते वै निरयगामिनः ॥
वृत्तिच्छेदं गृहच्छेदं दारच्छेदञ्च पार्थिव ! ।
मित्रच्छेदं तथाशायाः कृत्वा नरकगामिनः ॥
विषमव्यवहाराश्च विषमाश्चैव बुद्धिषु ।
लाभेषु विषमाश्चैव नरा निरयगामिनः ॥
कृताशं कृतनिर्व्वेशं कृतभक्तं कृतश्रमम् ।
भेदैर्ये व्यपकर्षन्ति ते वै निरयगामिनः ॥
द्यूतसंव्यवहाराश्च निष्परीचाश्च मानवाः ।
प्राणिहिंसाप्रवृत्ताश्च ते वै निरयगामिनः ॥
वेदविक्रयिणश्चैव वेदानाञ्चैव दूषकाः ।
वेदानां लेखकाश्चैव ते वै निरयगामिनः ॥
केशविक्रायका राजन् ! विषविक्रायकाश्च ये ।
क्षीरविक्रायकाश्चैव ते वै निरयगामिनः ॥
चातुराश्रम्यबाह्याश्च श्रुतिबाह्याश्च ये नराः ।
विकर्म्मभिश्च जीवन्ति ते वै निरयगामिनः ॥
ब्राह्मणानां गवाञ्चैव कन्यानाञ्च महामते ! ।
येऽन्तरं यान्ति कार्य्येषु ते वै निरयगामिनः ॥
शस्त्रविक्रायकाश्चैव कर्त्तारश्च महीपते ! ।
शल्यानां धनुषाञ्चैव ते वै निरयगामिनः ॥
शिलाभिः शङ्कुभिर्व्वापि श्वभ्रैर्व्वा मनुजर्षभ ! ।
ये मार्गमनुरुन्धन्ति ते वै निरयगामिनः ॥
अगोप्तारश्च राजानो बलिषड्भागतस्कराः ।
समर्थाश्चाप्यदातारस्ते वै निरयगामिनः ॥
क्षान्तान् दान्तानथ प्राज्ञान् दीर्घकालसहोषितान् ।
त्यजन्ति कृतकृत्या ये ते वै निरयगामिनः ॥
बालानामथ वृद्धानां दासानाञ्चैव ये नराः ।
अदत्त्वा भक्षयन्त्यग्रे ते वै निरयगामिनः ॥
इत्येतत् कथितं राजन् ! धर्म्माधर्म्मविनिर्णयम् ।
विज्ञाय पुरुषः कर्म्म धर्म्ममेव समाचरेत् ॥”
इति पाद्मे स्वर्गखण्डे ३४ अध्यायः ॥

नरकविशेषगामिपापिनो यथा,—
“कूटसाक्षी तथा सम्यक् पक्षपातेन यो वदेत् ।
यश्चान्यदनृतं वक्ति स नरो याति रौरवम् ॥
भ्रूणहा पुरहर्त्ता च गोघ्नश्च मुनिसत्तम ! ।
यान्ति ते नरके रोधे यश्चोच्छ्वासनिरोधकः ॥
सुरापो ब्रह्महा हर्त्ता सुवर्णस्य च शूकरे ।
प्रयाति नरके यश्च तैः संसर्गमुपैति वै ॥
राजन्यवैश्यहा ताले तथैव गुरुतल्पगः ।
तप्तकुम्भे स्वसृगामी हन्ति राजभटांश्च यः ॥
साध्वीविक्रयकृद्बन्धपालः केशरिविक्रयी ।
तप्तलौहे तु पच्यन्ते यश्च भक्तं परित्यजेत् ॥
‘केशरी अश्वः ।’
स्नुषां सुताञ्चापि गत्वा महाज्वाले निपात्यते ।
अवमन्ता गुरूणां यो यश्चाक्रोष्टा नराधमः ॥
वेददूषयिता यश्च वेदविक्रायकश्च यः ।
अगम्यागामी यश्च स्यात्ते यान्ति लवणं द्विज ! ॥
चौरो विमोहे पतति मर्य्यादादूषकस्तथा ।
देवद्विजपितॄन् द्विष्टा रत्नदूषयिता च यः ॥
स याति कृमिभक्षे वै कृमीशे च दुरिष्टकृत् ॥
पितृदेवातिथीन् यस्तु पर्य्यश्नाति नराधमः ।
लालाभक्षे स यात्युग्रे शरकर्त्ता च रोधके ॥”
‘पर्य्यश्नाति परित्यज्य आदौ भुङ्क्ते ।’
करोति कर्णिनो यस्तु यस्तु खड्गादिकृन्नरः ॥
प्रयान्ति ते विशसने नरके शस्त्रदारुणे ।
असत्प्रतिग्रहीतारो नरके यान्त्यधोमुखे ॥
अयाज्ययाजकस्तत्र तथा नक्षत्रसूचकः ।
वेगी पूयवहश्चैको याति मिष्टान्नभुङ्नरः ॥
‘वेगी साहसकारी । पुत्रादीन् वर्ज्जयित्वा एक एव मिष्टान्नभुक् ।’
लाक्षामांसरसानाञ्च तिलानां लवणस्य च ।
विक्रेता ब्राह्मणो याति तमेव नरकं द्विज ! ॥
मार्ज्जारकुक्कुटच्छागान् श्ववराहविहङ्गमान् ।
पालयन्नरकं याति तमेव द्विजसत्तम ! ॥
रङ्गोपजीवी कैवर्त्तः कुण्डाशी गरदस्तथा ।
सूची माहिषकश्चैव पर्व्वकारी च यो द्विजः ॥
‘पत्यौ जीवति जाराज्जातः कुण्डः तदन्नभोजी माहिषो महिषोपजीवी । यद्वा,—
महिषीत्युच्यते भार्य्या भगेनोपार्ज्जितं धनम् ।
उपजीवति यस्तस्याः स वै माहिषकः स्मृतः ॥
इति स्मृतिः ॥
पर्व्वकारी धनादिलोभेनापर्व्वसु अमावास्यादिक्रियाप्रवर्त्तकः ।’
अगारदाही मित्रघ्नः शाकुनिर्ग्रामयाजकः ।
रुधिरान्धे पतन्त्येते सोमं विक्रीणते च ये ॥
मधुहा ग्रामहन्ता च याति वैतरणीं नरः ।
रेतःपानादिकर्त्तारो मर्य्यादाभेदिनश्च ये ॥
ते कृष्णे यान्त्यशौचाश्च कुहकाजीविनश्च ये ।
असिपत्रवनं याति वनच्छेदी वृथैव यः ॥
औरभ्रिको मृगव्याधो वह्निज्वाले पतन्ति वै ।
यान्त्येते द्विज ! तत्रैव यश्चापाकेषु वह्निदः ॥
व्रतेषु लोपको यश्च स्वाश्रमाद्विच्युतश्च यः ।
सन्दंशयातनामध्ये पततस्तावुभावपि ॥
दिवास्वप्नेषु स्कन्दन्ति ये नरा ब्रह्मचारिणः ।
पुत्रैरध्यापिता ये च ते पतन्ति श्वभोजने ॥
एते चान्ये च नरकाः शतशोऽथ सहस्रशः ।
तेषु दुष्कृतकर्म्माणः पच्यन्ते यातनागताः ॥
तथैव पापान्येतानि तथान्यानि सहस्रशः ।
भुज्यन्ते यानि पुरुषैर्नरकान्तरगोचरैः ॥
वर्णाश्रमविरुद्धञ्च कर्म्म कुर्व्वन्ति ये नराः ।
कर्म्मणा मनसा वाचा निरयेषु पतन्ति वै ॥
अधःशिरोभिर्दृश्यन्ते नारकैर्दिवि देवताः ।
देवाश्चाधोमुखान् सर्व्वानधः पश्यन्ति नारकान् ॥
स्थावराः कृमयोऽब्जाश्च पक्षिणः पशवो नराः ।
धार्म्मिकास्त्रिदशास्तद्वन्मोक्षिणश्च यथाक्रमम् ॥
सहस्रभागाः प्रथमा द्वितीयानुक्रमास्तथा ।
सर्व्वे ह्येते महाभाग ! यावन्मुक्तिसमाश्रयाः ॥
यावन्तो जन्तवः स्वर्गे तावन्तो नरकौकसः ।
पापकृद्याति नरकं प्रायश्चित्तपराङ्मुखः ॥”
इति विष्णुपुराणे । २ । ६ । ७—३२ ॥

अपि च ।
“कथयामि विचित्राणां कर्म्मणां विविधा गतीः ।
ताः शृणुष्व महाराज ! याः श्रुत्वा मोक्षमाप्नुयात् ॥
परवित्तं परापत्यं कलत्रं पारकञ्च यः ।
हरते बुद्धिमोहेन सोऽन्ते ह्यवशगं गतः ॥
कालपाशेन संबद्धो यमदूतैर्म्महाबलैः ।
तामिस्रे पात्यते तावत् यावद्वर्षसहस्रकम् ॥
तत्र ताड़नसङ्कुलाः कुर्व्वन्ति यमकिङ्कराः ।
पापभोगेन सन्तप्तस्ततो योनिन्तु शौकरीम् ॥
तत्र भुक्त्वा महादुःखं मानुषत्वं गमिष्यति ।
रोगादिचिह्नितं तत्र दुर्यशोज्ञापकं स्वकम् ॥
भूतद्रोहं विधायैव केवलं स्वकुटुम्बकम् ।
पुष्णाति पापनिरतः सोऽन्धतामिस्रके पतेत् ॥
ये नरा इह जन्तूनां वधं कुर्व्वन्ति वै वृथा ।
ते रौरवे निपात्यन्ते खाद्यन्ते रुरुभिर्यतः ॥
यः स्वोदरार्थं भूतानां वधमाचरति स्फुटम् ।
महारौरवसंज्ञे तु पात्यते स यमाज्ञया ॥
यो वै निजन्तु जनकं ब्राह्मणं द्वेष्टि पापकृत् ।
कालसूत्रे महादुष्टे योजनायतविस्तृते ॥
यावन्ति पशुरोमाणि गवां देहं करोति यः ।
तावद्वर्षसहस्राणि पच्यते यमकिङ्करैः ॥
यो भूमौ भूपतिर्भूत्वा दण्डायोग्यन्तु दण्डयेत् ।
करोति ब्राह्मणस्यापि देहदण्डं विलोलुपः ।
स शूकरमुखैर्दुष्टैः पीड्यते यमकिङ्करैः ॥
पश्चाद्दुष्टासु योनीषु जायते पापभुक्तये ।
ब्राह्मणानां गवां ये तु द्रव्यं वित्तं तथाल्पकम् ॥
वृत्तिं वा गृह्णते मोहाल्लुम्पन्ति खलनागराः ।
ते परत्रान्धकूपे च पात्यन्ते च महाहिताः ॥
योऽर्थं स्वयमुपाहृत्य मधुरश्नाति लोलुपः ।
न देवाय न सुहृदे ददाति रसनातुरः ॥
स पतत्येव नरके कृमिभोजनसंज्ञके ।
अनापदि नरो यस्तु हिरण्यादीनपाहरेत् ॥
ब्रह्मस्वं वा महादुष्टः स दंशे नरके पचेत् ।
यः स्वदेहं प्रपुष्णाति नान्यं जानाति मूढधीः ॥
मनसा कल्पितं द्रव्यं विदुषे यो ददाति न ।
स पुमान्नरकं याति यावदिन्द्राश्चतुर्द्दश ॥
पश्चाद्दुष्टासु योनीषु जायते वर्णसङ्करः ।
दानानि वाड़वे दत्त्वा पुनः शुद्धो भविष्यति ॥
वाचा दत्तं मनोदत्तमिति साहं वदेद्यदि ।
कम्पन्ते पितरस्तस्य नरकाय समुत्सुकाः ॥
वाचा दत्तं मनोदत्तं दत्तं पाणिकुशोदकम् ।
एतद्दत्तमदत्तं स्यात् जिह्वामुत्पाटयेद्यमः ॥
स पात्यते तैलतप्ते कुम्भीपाकेऽतिदारुणे ॥
यो नगर्य्यां स्त्रियं मोहाद्योषिद्भावाच्च कामयेत ।
तं तथा किङ्कराः शूर्म्यां परिवह्नञ्च कुर्व्वते ॥
ये बलाद्वेदमर्य्यादां लुम्पन्ति स्वबलोद्धताः ।
ते वैतरण्यां पतिता मांसशोणितभक्षकाः ॥
वृषलीं यः स्त्रियं कृत्वा तया गार्हस्थ्यमाचरेत् ।
पूयोदे निपतत्येव महादुःखसमन्वितः ॥
ये दम्भानाश्रयन्ते वै धूर्त्ता लोकस्य वञ्चने ।
वैशसे नरके मूढ़ाः पतन्ति यमताड़िताः ॥
ये सवर्णां स्त्रियं मूढ़ाः पाययन्ति स्वरेतसम् ।

रेत:कुल्यासु ते पात्या रेत:पानेषु तत्पराः ॥
ये चौरा वह्निगा दुष्टा गरदा ग्रामलुण्ठकाः ।
सारमेयादने ते वै पात्यन्ते पातकान्विताः ॥
कूटसाक्ष्यं वदत्यद्धा पुरुषः पापसम्भृतः ।
पारकीयन्तु द्रव्यं यो रक्षति प्रसभं बली ॥
स वीचिनरके पापे ह्यवाग्वक्त्रः पतत्यधः ।
तत्र दुःखं महद्भुक्त्वा पापिष्ठो योनिमाव्रजेत् ॥
यो नरो रसनास्वादात् सुरां पिबति मूढधीः ।
तम्पाययन्ति लोहस्य रसं धर्मस्य किङ्कराः ॥
यो गुरूनवमन्येत स्वविद्याचारदर्पितः ।
स मृतः पात्यते क्षारसंज्ञकेऽधोमुखः पुमान् ॥
विश्वासघातं कुर्व्वन्ति ये नरा धर्म्मनिष्कृताः ।
शूलप्रोते तु नरके पात्यन्ते बहुयातनाः ॥
यैर्न श्रुता रामकथा न परोपकृतिः कृता ।
तेषां सर्व्वाणि दुःखानि भवन्ति नरकान्तरे ॥
अत्र यस्य सुखं भूयस्तस्य स्वर्ग इतीर्य्यते ।
ये दुःखिनो रोगयुता नरकादागतास्तु ते ॥”
इति पाद्मे पातालखण्डे ४८ अध्यायः ॥
(अथ महारौरवादिनरकाख्यानम् । यथा, मार्कण्डेये । १२ । ३-३९ ।
पुत्त्र उवाच ।
“रौरवस्ते समाख्यातः प्रथमं नरको मया ।
महारौरवसंज्ञन्तु शृणुष्व नरकं पितः ! ॥
योजनानां सहस्राणि सप्त पञ्च समन्ततः ।
तत्र ताम्रमयी भूमिरधस्तस्य हुताशनः ॥
तत्तापतप्ता सर्व्वाशा प्रोद्यदिन्दुसमप्रभा ।
विभाव्यति महारौद्रा दर्शनस्पर्शनादिषु ॥
तस्यां बद्धः कराभ्याञ्च पद्भ्याञ्चैव यमानुगैः ।
मुच्यते पापकृन्मध्ये लुठमानः स गच्छति ॥
काकैर्बकैर्वृकोलूकैर्वृश्चिकैर्म्मशकैस्तथा ।
भक्ष्यमाणस्तथा गृध्रैर्द्रुतं मार्गे विकृष्यते ॥
दह्यमानः पितर्म्मातर्भ्रातस्तातेति चाकुलः ।
वदत्यसकृदुद्विग्नो न शान्तिमधिगच्छति ॥
एवं तस्मान्नरैर्मोक्षो ह्यतिक्रान्तैरवाप्यते ।
वर्षायुतायुतैः पापं यैः कृतं दुष्टबुद्धिभिः ॥
तथान्यस्तु तमो नाम सोऽतिशीतः स्वभावतः ।
महारौरववद्दीर्घस्तथा स तमसा वृतः ॥
शीतार्त्तास्तत्र धावन्तो नरास्तमसि दारुणे ।
परस्परं समासाद्य परिरभ्याश्रयन्ति च ॥
दन्ताश्चैषाञ्च भज्यन्ते शीतार्त्तिपरिकम्पिताः ।
क्षुत्तृषा प्रबला तत्र तथैवान्येऽप्युपद्रवाः ॥
हिमखण्डवहो वायुर्भिनत्त्यस्थीनि दारुणः ।
मज्जासृग्गलितन्तस्मादश्नुवन्ति क्षुधान्विताः ॥
लेलिह्यमाना भ्राम्यन्ते परस्परसमागमे ।
एवं तत्रापि सुमहान् क्लेशस्तमसि मानवैः ॥
प्राप्यते ब्राह्मणश्रेष्ठ ! यावद्दुष्कृतसंक्षयः ॥
निकृन्तन इति ख्यातस्ततोऽन्यो नरकोत्तमः ।
तस्मिन् कुलालचक्राणि भ्राम्यन्त्यविरतं पितः ! ।
तेष्वारोप्य निकृत्यन्ते कालसूत्रेण मानवाः ॥
यमानुगाङ्गुलिस्थेन आपादतलमस्तकम् ।
नचैषां जीवितभ्रंशो जायते द्विजसत्तम ! ॥
छिन्नानि तेषां शतशः खण्डान्यैक्यं व्रजन्ति च ।
एवं वर्षसहस्राणि छिद्यन्ते पापकर्म्मिणः ॥
तावद्यावदशेषं वै तत्पापं हि क्षयं गतम् ।
अप्रतिष्ठञ्च नरकं शृणुष्व गदतो मम ॥
यत्रस्थैर्नारकैर्दुःखमसह्यमनुभूयते ।
तान्येव तत्र चक्राणि घटीयन्त्राणि चान्यतः ॥
दुःखस्य हेतुभूतानि पापकर्म्मकृतां नृणाम् ।
चक्रेष्वारोपिताः केचिद्भ्राम्यन्ते तत्र मानवाः ॥
यावद्वर्षसहस्राणि न तेषां स्थितिरन्तरा ।
घटीयन्त्रेषु चैवान्यो बद्धस्तोये यथा घटी ॥
भ्राम्यन्ते मानवा रक्तमुद्गिरन्तः पुनः पुनः ।
अन्त्रैर्मुखविनिष्क्रान्तैर्नेत्रैरस्रुविलम्बिभिः ॥
दुःखानि ते प्राप्नुवन्ति यान्यसह्यानि जन्तुभिः ॥
असिपत्रवनं नाम नरकं शृणु चापरम् ।
योजनानां सहस्रं यो ज्वलदग्न्यास्तृतावनिः ॥
तप्ताः सूर्य्यकरैश्चण्डैर्यत्रातीव सुदारुणैः ।
प्रपतन्ति सदा तत्र प्राणिनो नरकौकसः ॥
तन्मध्ये च वनं रम्यं स्निग्धपत्रं विभाव्यते ।
पत्राणि तत्र खड्गानां फलानि द्विजसत्तम ! ॥
श्वानश्च तत्र सबलाः खनन्त्ययुतशोभिताः ।
महावक्त्रा महादंष्ट्रा व्याघ्रा इव भयानकाः ॥
ततस्तद्वनमालोक्य शिशिरच्छायमग्रतः ।
प्रयान्ति प्राणिनस्तत्र तीव्रतृट्परिपीड़िताः ॥
हा मातर्हा तात ! इति क्रन्दन्तोऽतीव दुःखिताः ।
दह्यमानाङ्घ्रियुगला धरणीस्थेन वह्निना ॥
तेषां गतानां तत्रासिपत्रपातीसमीरणः ।
प्रवाति तेन पात्यन्ते तेषां खड्गान्यथोपरि ॥
ततः पतन्ति ते भूमौ ज्वलत्पावकसञ्चये ।
लेलिह्यमाने चान्यत्र व्याप्ताशेषमहीतले ॥
सारमेयास्ततः शीघ्रं शातयन्ति शरीरतः ।
तेषामङ्गानि रुदतामनेकान्यतिभीषणाः ॥
असिपत्रवनं तात ! मयैतत् कीर्त्तितं तव ।
अतः परं भीमतरं तप्तकुम्भं निबोध मे ॥
समन्ततस्तप्तकुम्भा वह्निज्वालासमावृताः ।
ज्वलदग्निचयोद्वृत्ततैलायश्चूर्णपूरिताः ।
तेषु दुष्कृतकर्म्माणो याम्यैः क्षिप्ता ह्यधोमुखाः ॥
क्वाथ्यन्ते विस्फुटद्गात्रगलन्मज्जजलाविलाः ।
स्फुटत्कपालनेत्रास्थिच्छिद्यमाना विभीषणैः ॥
गृध्रैरुत्पाट्य मुच्यन्ते पुनस्तेष्वेव वेगितैः ।
पुनःसिमसिमायन्ते तैलेनैक्यं व्रजन्ति च ॥
द्रवीभूतैः शिरोगात्रस्नायुमांसत्वगस्थिभिः ।
ततो याम्यैर्नरैराशु दर्व्वया घट्टनघट्टिताः ॥
कृतावर्त्ते महातैले मथ्यन्ते पापकर्म्मिणः ।
एष ते विस्तरेणोक्तस्तप्तकुम्भो मया पितः ! ॥”)

नरककुण्डं, क्ली, ( नरकस्य कुण्डम् । ) यातनास्थानम् । तद्यथा, यम उवाच । “नरकाणाञ्च कुण्डानि सन्ति नानाविधानि च । नानापुराणभेदेन नामभेदानि तानि च ॥ विस्तृतानि गभीराणि क्लेशदानि च जीविनाम् । भयङ्कराणि घोराणि हे वत्से ! कुत्सितानि च ॥ षड़शीतिश्च कुण्डानि संयमन्याञ्च सन्ति च । निबोध तेषां नामानि प्रसिद्धानि श्रुतौ सति ॥” इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे । २७ । २८ अध्यायौ ॥

| तत्र नरककुण्डनामानि | | पापभेदात् कुण्डविशेषगामिनः | |
|---|---|---|---|
| वह्निकुण्डम् | १ | कटुवाचा बान्धवदग्धकृत् | १ |
| तप्तकुण्डम् | २ | ब्राह्मणातिथिभोजनाप्रदः | २ |
| क्षारकुण्डम् | ३ | निषिद्धदिने वस्त्रे क्षारसंयोजकः | ३ |
| विट्कुण्डम् | ४ | ब्रह्मस्वत्वापहारकः | ४ |
| मूत्रकुण्डम् | ५ | परतड़ागं खनित्वोत्सर्ज्जकः | ५ |
| श्लेष्मकुण्डम् | ६ | एकाकी मिष्टभोजी | ६ |
| गरकुण्डम् | ७ | पितृमातृगुरुभार्य्याद्यपोषकः | ७ |
| दूषिकाकुण्डम् | ८ | अतिथिं दृष्ट्वा वक्रचक्षुःकारी | ८ |
| वसाकुण्डम् | ९ | विप्राय दत्त्वा तद्द्रव्यमन्यस्मै दाता | ९ |
| शुक्रकुण्डम् | १० | परस्त्रीगामी परपुंगामिनी च | १० |
| असृक्कुण्डम् | ११ | गुर्व्वादिताड़कस्तद्रक्तपातकारकश्च | ११ |
| अश्रुकुण्डम् | १२ | हरिसङ्कीर्त्तनदर्शनायन्तद्भक्तोपहासकृत | १२ |
| गात्रमलकुण्डम् | १३ | शश्वद्गुप्तचित्तः खलताकारी च | १३ |
| कर्णविट्कुण्डम् | १४ | बधिरोपहासकृत् | १४ |
| मज्जकुण्डम् | १५ | लोभात् स्वभोजनार्थं जीवहन्ता | १५ |
| मांसकुण्डम् | १६ | अर्थलोभात् कन्याविक्रायकः | १६ |
| नखकुण्डम् | १७ | श्राद्धोपवासादिषु संयमत्यागी | १७ |
| लोमकुण्डम् | १८ | | १८ |
| केशकुण्डम् | १९ | सकेशपार्थिवशिवलिङ्गार्च्चकः | १९ |
| अस्थिकुण्डम् | २० | विष्णुपदे पितृपिण्डादाता | २० |
| ताम्रकुण्डम् | २१ | गुर्व्विणीगामी | २१ |
| लोहकुण्डम् | २२ | ऋतुस्नातावीरयोरन्नभुक् | २२ |
| तीक्ष्णकण्टककुण्डम् | २३ | कटुवाचा स्वामिताड़िका | २३ |
| विषकुण्डम् | २४ | विषेण जीवहन्ता | २४ |
| घर्म्मकुण्डम् | २५ | सधर्म्महस्तेन देवद्रव्यस्पर्शकृत् | २५ |
| तप्तसुराकुण्डम् | २६ | शूद्रानुज्ञातः शूद्रान्नभोजी | २६ |
| प्रतप्ततैलकुण्डम् | २७ | दण्डेन वृषताड़कः | २७ |
| कुन्तकुण्डम् | २८ | कुन्तलौहवाड़िशैर्जीवहन्ता | २८ |
| कृमिकुण्डम् | २९ | मत्स्याशुचिविप्रो वृथामांसभुक् हरिनैवेद्याभुक् च | २९ |

| नरककुण्डनामानि | | पापभेदात् कुण्डविशेषगामिनः | |
|---|---|---|---|
| पूयकुण्डम् | ३० | शूद्रयाजी तच्छ्राद्धभुक् तच्छवदाही च ब्राह्मणः | ३० |
| सर्पकुण्डम् | ३१ | शीलगापदच्छिन्नमस्तकस्य सर्पस्य हन्ता | ३१ |
| मशकुण्डम् | ३२ | विधिं दत्त्वा क्षुद्रजन्तुहन्ता | ३२ |
| दंशकुण्डम् | ३३ | विधिं दत्त्वा जीवहन्ता | ३३ |
| गरलकुण्डम् | ३४ | मक्षिकां हत्वा मधुग्राही | ३४ |
| वज्रदंष्ट्रकुण्डम् | ३५ | अदण्डविप्रयोर्दण्डकृत् | ३५ |
| वृश्चिककुण्डम् | ३६ | अर्थलोभात् प्रजादण्डकृत् | ३५ |
| शरकुण्डम् | ३७ | शस्त्रधारी धावकः सन्ध्याहरिभक्तिहीनश्च ब्राह्मणः | ३७ |
| शूलकुण्डम् | ३८ | | ३८ |
| खड्गकुण्डम् | ३९ | | ३९ |
| गोलकुण्डम् | ४० | अपदोषिणः कारायां प्रजाबन्धनकृत् | ४० |
| नक्रकुण्डम् | ४१ | जलादुत्थितनक्रादि हन्ता | ४१ |
| काककुण्डम् | ४२ | कामेन परस्त्रीवक्षःश्रोण्यास्यद्रष्टा | ४२ |
| सञ्चानकुण्डम् | ४३ | स्वर्णचौरः | ४३ |
| वाजकुण्डम् | ४४ | ताम्रलौहचौरः | ४४ |
| वज्रकुण्डम् | ४५ | देव-देवद्रव्ययोश्चौरः | ४५ |
| तप्तपाषाणकुण्डम् | ४६ | देव-द्विजयो रौप्य-गो-वस्त्राणां चौरः | ४६ |
| तीक्ष्णपाषाणकुण्डम् | ४७ | देव-द्विजयोः पित्तल-कांस्यपात्रचौरः | ४७ |
| लालाकुण्डम् | ४८ | वेश्यान्नभुक् तद्वृत्तिजीवी च | ४८ |
| मसीकुण्डम् | ४९ | म्लेच्छसेवी मसीजीवी च ब्राह्मणः | ४९ |
| चूर्णकुण्डम् | ५० | देव-द्विजयोः शस्यताम्बूलासनचौरः | ५० |
| चक्रकुण्डम् | ५१ | विप्रद्रव्यं हृत्वा चक्रकारी | ५१ |
| वक्रकुण्डम् | ५२ | विप्र-बान्धवयोर्वक्रताकारी | ५२ |
| कूर्मकुण्डम् | ५३ | हरिशयने कूर्ममांसभुक् ब्राह्मणः | ५३ |
| ज्वालाकुण्डम् | ५४ | देवद्विजयोर्घृततैलादिहृत् | ५४ |
| भस्मकुण्डम् | ५५ | | ५५ |
| दग्धकुण्डम् | ५६ | देवद्विजयोर्हाचीगन्धतैलद्रव्याणामपहर्त्ता | ५६ |
| तप्तसूर्मीकुण्डम् | ५७ | बलछलत्वादिना परभूमिहरः | ५७ |
| असिपत्रकुण्डम् | ५८ | अर्थलोभात् खड्गेन जीवच्छेदी नरघाती च | ५८ |
| क्षुरधारकुण्डम् | ५९ | ग्रामनगरादिदाहकृत् | ५९ |

| नरककुण्डनामानि | | पापभेदात् कुण्डविशेषगामिनः | |
|---|---|---|---|
| सूचीमुखकुण्डम् | ६० | परकर्णे मुखं दत्त्वा परनिन्दकः परदोषश्लाघी वेदब्राह्मणनिन्दकश्च | ६० |
| गोधामुखकुण्डम् | ६१ | गृहं भित्त्वा वस्तुगोच्छागमेषचौरः | ६१ |
| नक्रमुखकुण्डम् | ६२ | सामान्यद्रव्यचौरः | ६२ |
| गजदंशकुण्डम् | ६३ | गजतुरगनरचौरः | ६३ |
| गोमुखकुण्डम् | ६४ | जलपिबद्गोवारकः | ६४ |
| कुम्भीपाककुण्डम् | ६५ | गो-स्त्री-भिक्षु-भ्रूण-ब्रह्महा अगम्यागामी दीक्षासन्ध्याहीनस्तीर्थप्रतिग्राही ग्रामयाजी देवलः शूद्रसूपकारी वृषलीपतिश्च | ६५ |
| कालसूत्रकुण्डम् | ६६ | वेश्यान्नभुक् तत्संसर्गी च | ६६ |
| अवटोदकुण्डम् | ६७ | कुलटादिषड्वेश्यागामी द्विजः | ६७ |
| अरुन्तुदकुण्डम् | ६८ | चन्द्रसूर्य्यग्रहणे निषिद्धकालभोजी | ६८ |
| पांशुभोजकुण्डम् | ६९ | एकस्मै वाक्प्रदत्तकन्याया अन्यस्मै दाता | ६९ |
| पाशवेष्टकुण्डम् | ७० | दत्तापहारी | ७० |
| शूलप्रोतकुण्डम् | ७१ | अभक्त्या शिवलिङ्गपूजकः | ७१ |
| प्रकम्पनकुण्डम् | ७२ | विप्रदण्डकृत् तत्कम्पकृद्भयदायी च | ७२ |
| उल्कामुखकुण्डम् | ७३ | सकोपवदना स्वामिनि कटुवादिनी | ७३ |
| अकूपकुण्डम् | ७४ | शूद्रभोग्या ब्राह्मणी | ७४ |
| वेधनकुण्डम् | ७५ | वेश्या । सा च पञ्चषट्पुंगमनाद्भवति | ७५ |
| दण्डताडनकुण्डम् | ७६ | युङ्गी । सा च सप्ताष्टपुंगमनाद्भवति | ७६ |
| जालबन्धकुण्डम् | ७७ | महावेश्या । सा चाष्टाधिकपुंगमनाद्भवति | ७७ |
| देहचूर्णकुण्डम् | ७८ | कुलटा । सा च पुंद्वयगमनाद्भवति | ७८ |
| दलनकुण्डम् | ७९ | स्वैरिणी । वृषली । सा चतुःपुंगमनाद्भवति | ७९ |
| शोषणकुण्डम् | ८० | धृष्टा । पुंश्चली । सा च त्रिपुंगमनाद्भवति | ८० |
| कषकुण्डम् | ८१ | सवर्णपरदारी | ८१ |
| शूर्पकुण्डम् | ८२ | ब्राह्मणीगामी क्षत्रियो वैश्यश्च | ८२ |
| ज्वालामुखकुण्डम् | ८३ | करे तुलसीगङ्गाजलदेवशिलाश्च कृत्वा प्रतिज्ञाकृत्तदपालको मिथ्याशपथी मित्रद्रोही विश्वासघाती मिथ्यासाक्ष्यदश्च | ८३ |
| जिह्मकुण्डम् | ८४ | नित्यक्रियाहीनो देवयागनास्तिको मन्त्रोपहासी च | ८४ |
| धूमान्धकुण्डम् | ८५ | देवविप्रयोर्धनहारी | ८५ |
| नागवेष्टनकुण्डम् | ८६ | वैद्यदैवज्ञवृत्तिकारी लाक्षालोहव्यापारी रसादिविक्रयी च ब्राह्मणः | ८६ |

नरकजित्, पुं, (नरकं तन्नाम्ना विख्यातमसुरं जयतीति । जि + क्विप् । तुक् च । ) विष्णुः । इति त्रिकाण्डशेषः ॥

नरकदेवता, स्त्री, (नरकस्य अधिष्ठात्री देवता ।) निरयदेवी । तत्पर्य्यायः । अलक्ष्मीः २ निर्ऋतिः ३ कालपर्णी ४ । इति शब्दरत्नावली ॥

नरकमुक्तः, त्रि, ( नरकात् मुक्तः । ) नरकागतः । यथा,—

"नरकात् प्रतिमुक्तस्तु पापयोनिषु जायते ।
पतितात् प्रतिगृह्याथ खरयोनिं व्रजेद्बुधः ॥
नरकात् प्रतिमुक्तस्तु कृमिर्भवति याजकः ।
उपाध्यायं व्यलीकन्तु कृत्वा श्वा भवति द्विजः ॥
तज्जायां मनसा वाञ्छंस्तद्द्रव्यं वाप्यसंशयम् ।
गर्द्दभो जायते जन्तुर्मित्रस्यैवापमानकृत् ॥
शत्रोरितरमाकृष्य शारिका संप्रजायते ।
पितरौ पीडयित्वा तु कच्छपत्वञ्च जायते ॥
भर्त्तुः पिण्डमुपाश्नन्तो हित्वान्यानि च सेवयेत् ।
सोऽपि मोहसमापन्नो जायते वानरो मृतः ॥
न्यासापहर्त्ता नरकात् विमुक्तो जायते कृमिः ।
असूयकश्च नरकान्मुक्तो भवति राक्षसः ॥
विश्वासहर्त्ता च नरो मीनयोनौ प्रजायते ।
यवधान्यानि हृत्वा तु जायते मूषिको मृतः ॥
परदाराभिमर्षात्तु वृको घोरोऽभिजायते ।
भ्रातृभार्य्याप्रसङ्गेन कोकिलो जायते नरः ॥
गुर्व्वादिभार्य्यागमनाच्छूकरो जायते नरः ।
यज्ञदानविवाहानां विघ्नकर्त्ता भवेत् कृमिः ॥
देवतापितृविप्राणामदत्वा योऽन्नमश्नुते ।
प्रमुक्तो नरकाद्वापि वायसः स प्रजायते ॥
ज्येष्ठभ्रातृवमानाच्च क्रौञ्चयोनौ प्रजायते ।
शूद्रश्च ब्राह्मणीं गत्वा कृमियोनौ प्रजायते ॥
तस्यामपत्यमुत्पाद्य काष्ठान्तःकीटको भवेत् ।
कृतघ्नः कृमिकः कीटः पतङ्गो वृश्चिकस्तथा ॥
अशस्त्रं पुरुषं हत्वा नरः संजायते खरः ।
कृमिः स्त्रीवधकर्त्ता च बालहन्ता च जायते ॥
भोजनं चोरयित्वा तु मक्षिका जायते नरः ।
हृत्वान्नञ्चैव मार्ज्जारस्तिलहृच्चैव मूषिकः ॥
घृतं हृत्वा च नकुलः काको मद्गुरमामिषम् ।
मधु हृत्वा नरो दंशः पूपं हृत्वा पिपीलिकः ॥
अपो हृत्वा तु पापात्मा वायसः संप्रजायते ।
हृते कांस्ये च हारीतः कपोतो वा प्रजायते ॥
हृत्वा तु काञ्चनं भाण्डं कृमियोनौ प्रजायते ।
कार्पासिके हृते क्रौञ्चो वह्निहर्त्ता वकस्तथा ॥
मयूरो वर्णकं हृत्वा शाकं पत्रञ्च जायते ।
जीवञ्जीवकतां याति रक्तवस्त्रापहृन्नरः ॥
छुच्छुन्दरिः शुभान् गन्धान् वंशं हृत्वा शशो भवेत् ।
षण्डः कलापहरणे काष्ठहृत् काष्ठकीटकः ॥
पुष्यापहृद्दरिद्रस्तु पङ्गुर्यानापहृन्नरः ।
शाकहर्त्ता च हारीतस्तोयहर्त्ता च चातकः ॥
गृहहृन्नरकान् गत्वा रौरवादीन् सुदारुणान् ।
तृणगुल्मलतावल्लीत्वक्सारतरुतां व्रजेत् ॥

तथ एव क्रमो हन्तो गोसुवर्णादिहारिणाम् ।
विद्यापहारी सकलं गत्वा च नरकान् बहून् ॥
असमिद्धोऽसौ भुवि च मन्दाग्निः संप्रजायते ।
परनिन्दाकृतघ्नत्वं परमर्म्मावघातनम् ।
नैष्ठुर्य्यं निर्घृणत्वञ्च परदारोपसेवनम् ।
परस्वहरणाशौचं देवतानाञ्च कुत्सनम् ॥
निकृत्या वञ्चनं नृणां कार्पण्यञ्च नृणां वधः ।
उपलक्षणानि जानीयात् मुक्तानां नरकादनु ॥"
प्रसङ्गात् स्वर्गागतलक्षणमप्याह ।
"दया भूतेषु संवादः परलोकं प्रतिक्रिया ।
सत्यं भूतहिता चोक्तिर्वेदप्रामाण्यदर्शनम् ॥
गुरुदेवर्षिपूजा च केवलं साधुसङ्गमः ।
सत्क्रियाभ्यसनं मैत्री स्वर्गिणां लक्षणं विदुः ॥
अष्टाङ्गयोगविज्ञानात् प्राप्नोत्यात्यन्तिकं लयम् ॥"
इति गारुडे कर्म्मविपाके २२९ अध्यायः ॥

नरकस्था, स्त्री, ( नरके तिष्ठतीति । स्था + "सुपि स्थः ।" ३।२।४। इति कः ।) वैतरणी नदी । इति हेमचन्द्रः । ४ । १५२ ॥ निरयस्थिते, त्रि । यथा,
"नरकस्थोऽपि देहं वै न पुमांस्त्यक्तुमिच्छति ॥"
इति श्रीभागवतम् ॥

नरकान्तकः, पुं, ( नरकस्य तन्नाम्ना ख्यातस्यासुरस्य अन्तकः । ) विष्णुः । इति पुराणम् ॥ ( यथा, मुकुन्दमालायाम् । ७ ।
"दिवि वा भुवि वा ममास्तु वासो
नरके वा नरकान्तक ! प्रकामम् ।
अवधीरितशारदारविन्दौ
चरणौ ते मरणेऽपि चिन्तयामि ॥")

नरकामयः, पुं, ( नरकः आमय इव यस्य । ) प्रेतः । इति शब्दरत्नावली ॥ ( नरकरूप आमयः । ) निरयरोगश्च ॥

नरकीलकः, पुं, ( नरेषु कीलक इव विन्ध्यत्वात् ।) गुरुघ्नः । तत्पर्य्यायः । गुरुहा २ । इति हेमचन्द्रः । ३ । ५२२ ॥

नरगणः, पुं, ( नरस्य गणो यस्मात् । ) नक्षत्रविशेषः । तज्जातजनः । यथा,—
"हस्ताश्वातिमृगाश्विनीहरिगुरुः पौष्णानुराधादिति-
स्वाती रोहिणि चोत्तराणि भरणी पूर्व्वाणि भानि त्रयम् ।
ज्येष्ठाश्लेषविशाखमूलवरुणावस्वग्निचित्रामघाः
कथ्यन्ते मुनिभिर्यथाक्रममथ प्राहेया नरा राक्षसाः ॥"
इति दीपिका ॥
अस्य फलम् । यथा, कोष्ठीप्रदीपे ।
"मानुष्ये मृदुकर्म्मसङ्गतमनाः शीलान्वितो धीयुतः ॥"
( नराणां गणः । ) नरसमूहः ॥

नरङ्गः, पुं, ( नृणाति प्रापयतीति । नॄ + "पतादेरङ्गच् ।" इति उणादिकोषटीकाधृतसूत्रात् अङ्गच् । ) वरण्डकः । नाराङ्गा इति भाषा ॥ ( नुः पुरुषस्य अङ्गम् । ) मेहने, क्ली । इत्युणादिकोषः ॥

नरदेवः, पुं, ( नरो देव इव ।) राजा । इति हलायुधः ॥ ( यथा, हरिवंशे । ३९ । १२ ।
"रैतोधाः पुत्त्र उन्नयति नरदेव ! यमक्षयात् ॥")

नरनारायणौ, पुं, ( नरश्च नारायणश्च तौ । ) ऋषिविशेषौ । तावेव श्रीकृष्णार्ज्जुनौ सम्भूतौ । इति महाभारतम् ॥ ( यथा, देवीभागवते । ४ । ५ । १३ ।
"नरनारायणौ चैव चेरतुस्तप उत्तमम् ।
प्रालेयाद्रिं समागम्य तीर्थे वदरिकाश्रमे ॥")
तयोरुत्पत्तिर्यथा,—
"अथ चिन्तयतस्तस्य स्वान्तं गत्वा जनार्द्दनः ।
तत् सर्व्वं ज्ञापयामास वराहवपुषो हितम् ॥
ततो देहपरित्यागं कर्त्तुं समभवद्यदा ।
तदा दंष्ट्राग्रघातेन नरसिंहं महाबलम् ॥
शरभो भगवान् शर्व्वो द्विधा मध्ये चकार ह ।
नरसिंहे द्विधाभूते नरभागेन तस्य तु ॥
नर एव समुत्पन्नो दिव्यरूपी महामुनिः ।
तस्य पश्चात्स्यभागेन नारायण इति श्रुतः ॥
अभवत् स महात्मा मुनिरूपी जनार्द्दनः ।
नरो नारायणश्चोभौ ऋषिहेतू महामती ॥
ययोः प्रभावो दुर्लभः प्राक्ते वेदे तपःसु च ॥"
इति कालिकापुराणे २९ अध्यायः ॥
कल्पभेदे तौ धर्म्मपुत्त्रौ । यथा,—
"धर्म्मस्य दक्षदुहितर्य्यजनिष्ट मूर्त्त्यां
नारायणो नर इति स्वतपःप्रभावः ।
दृष्ट्वात्मनो भगवतो नियमावलोपं
देव्यस्त्वनङ्गपृतना घटितुं न शेकुः ॥"
इति श्रीभागवते । २ । ७ । ६ ॥
(अनयोर्विशेषविवरणन्तु देवीभागवते ४ स्कन्धस्य ५ अध्यायमारभ्य द्रष्टव्यम् ॥)

नरपतिः, पुं, ( नरान् पातीति । पा + डतिः । नराणां पतिर्वा । ) राजा । इति शब्दरत्नावली ॥ ( यथा, रघुः । २ । ७५ ।
"नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी
गुरुभिरभिनिविष्टं लोकपालानुभावैः ॥")

नरप्रियः, पुं, ( नराणां प्रियः । ) नीलवृक्षः । इति राजनिर्घण्टः ॥ नरस्य प्रियवस्तुनि, त्रि ॥

नरभूः, स्त्री, ( नराणां मनुष्याणां भूर्भूमिः । ) भारतवर्षः । इति त्रिकाण्डशेषः ॥ नरोत्पत्तिश्च ॥

नरभूमिः, स्त्री, ( नराणां मनुष्याणां भूमिः । ) भारतवर्षः । इति शब्दरत्नावली ॥

नरमानिनी, स्त्री, ( नरं पुरुषमिव मन्यते इति । मन + णिनिः + ङीप् ।) श्मश्रुयुक्तनारी । इति त्रिकाण्डशेषः ॥

नरमानिका, स्त्री, ( नरं मन्यते या । मन + ण्वुल् । टापि अत इत्वम् । ) नरमानिनी । इति शब्दरत्नावली ॥

नरमाला, स्त्री, ( नराणां तन्मुण्डानां माला । ) मनुष्यमुण्डमाला । यथा, मार्कण्डेये । ८७ । ६ ।
"विचित्रखट्वाङ्गधरा नरमालाविभूषणा ॥"

नरमालिनी, स्त्री, ( नरस्येव माला केशसमूहो मुखेऽस्त्यस्या इति । इनिः + ङीप् । यद्वा, नरमानिनी प्रयोगानुरोधात् निपातनेन नस्य लत्वम् । ) श्मश्रुयुक्तनारी । इति हेमचन्द्रः । ३ । १९५ ॥ ( नरस्य तन्मुण्डस्य मालाऽस्त्यस्या इति । ) नरमालायुक्ता ॥

नरमेधः, पुं, ( मिध हिंसायाम् + भावे घञ् । नराणां पुरुषाणां मेधो हिंसनं यत्र । ) नरवधात्मकयज्ञविशेषः ॥ ( यज्ञोऽयं वाजसनेयसंहितायाम् ३०—३१ अध्याययोर्दर्शितः । तत्र अधिकार्य्यादिकं ३० अध्याये वेददीपे उक्तम् । यथा,—
"ब्राह्मणराजन्ययोरतिष्ठाकामयोः पुरुषमेधसंज्ञको यज्ञो भवति । सर्व्वभूतान्यतिक्रम्य स्थानमतिष्ठा । चैत्रशुक्लदशम्यामारम्भः । अत्र त्रयोविंशतिर्दीक्षा भवन्ति द्वादशोपसदः पञ्च सुत्या इति चत्वारिंशद्दिनैः सिध्यति । अत्र यूपैकादशिनी भवति एकादशाग्निषोमीयाः पशवो भवन्ति तेषाञ्च प्रतियूपं मध्यमे वा यूपे यथेच्छं नियोजनम् । आज्येन सकृद्गृहीतेन देव सवितरिति प्रत्यचं तिस्र आहुतीराहवनीये जुहोति ॥") स तु कलौ वर्ज्जनीयः । यथा,—
"समुद्रयात्रास्वीकारः कमण्डलुविधारणम् ।
द्विजानामसवर्णासु कन्यासूपयमस्तथा ॥
देवरेण सुतोत्पत्तिर्म्मधुपर्के पशोर्व्वधः ।
मांसादनं तथा श्राद्धे वानप्रस्थाश्रमस्तथा ॥
दत्तायाश्चैव कन्यायाः पुनर्दानं वरस्य च ।
दीर्घकालं ब्रह्मचर्य्यं नरमेधाश्वमेधकौ ॥
महाप्रस्थानगमनं गोमेधश्च तथा मखः ।
इमान् धर्म्मान् कलियुगे वर्ज्यानाहुर्म्मनीषिणः ॥"
इत्युद्वाहतत्त्वे बृहन्नारदीयम् ॥

नरवाहनः, पुं, ( नरो वाहनं यस्य । "क्षुभ्नादिषु च ।" ८ । ४ । ३९ । इति न णत्वम् ।) कुवेरः । इत्यमरः ।१।१।७२ ॥ (यथा, रघुः । ९ । ११ ।
"विजयदुन्दुभितां ययुरर्णवा
घनरवा नरवाहनसम्पदः ॥"
नृपतिविशेषः । यथा, राजतरङ्गिण्याम् । ५ । २१३ ।
"सोऽनुगैः सह निर्दोषं जघान द्रोहशङ्कया ।
शूरं दार्व्वाभिसारेशं शार्व्वर्य्यां नरवाहनम् ॥")
पुरुषयानविशिष्टे, त्रि ॥ ( यथा, महाभारते । ३ । ८९ । ५ ।
"यत्र धनपतिर्यत्र कुवेरो नरवाहनः ॥")

नरविष्वणः, पुं, (नरं विष्वणति भक्षयतीति । वि + स्वन + अच् । ) राक्षसः । इति त्रिकाण्डशेषः ॥

नरसारः, पुं, ( नरवत् शुद्धः सारो यत्र । ) वणिग्द्रव्यविशेषः । नौसादर इति निशादल इति च भाषा । तस्य पर्य्यायः । यथा, रत्नमालायाम् ।
"छिदलो गोपकः पिण्डो नीलो गन्धरसो रसः ॥"
तस्य शुद्धिर्यथा,—
"नरसारो भवेच्छुद्धश्चूर्णतोये विपाचितः ।
दोलायन्त्रेण यत्नेन भिषग्भिर्योगसिद्धये ॥"
इति सारचन्द्रिका ॥

स तु ग्रन्थान्तरयोगेन महाद्रावको भवति यथा,
"नरसारयवक्षारस्फटिकानि एव काचवकयन्त्रे॥
चतुर्णः पाद्यं सप्तं तस्मिन् महाद्रावकं नाम ॥"
इति रत्नावली ॥

यथाच वैद्यकमैषज्यग्रन्थान्तरेऽपि यकृत्प्लीहाधिकारे ।
"इयश्चिञ्चमपामार्गं शिग्रा कुशाख्यनाड़िका ।
स्नुही तालस्य पुष्पाणि वर्षाभूर्व्वैनसन्तथा ॥
एतेषां क्षारमाहृत्य निम्बाकस्वरसेन च ।
क्षालयित्वा क्षारतोयं वस्त्रपूतञ्च कारयेत् ॥
चण्डातपेन संशोष्य ग्राह्यन्तद्द्रवणोचितम् ।
ततस्तु द्विपलं ग्राह्यं यवक्षारपलद्वयम् ॥
स्फटिकारिपलञ्चैव नरसारपलन्तथा ।
पलार्द्धं सैन्धवं ग्राह्यं टङ्कणं तोलकद्वयम् ॥
कार्पासं तोलकञ्चैव सुराष्ट्रजञ्च तोलकम् ।
दारुमोचं कर्षकञ्च तोलं समुद्रफेनकम् ॥
सर्व्वमेकत्र सञ्चूर्ण्य वकयन्त्रेण साधयेत् ।
महाद्रावकमेतद्धि योज्यञ्च रसजारणे ॥
हन्ति गुल्मादिकान् रोगान् यकृत्प्लीहोदराणि च ॥")

नरसिंहः, पुं, (नर इव सिंह इव च आकृतिर्यस्य ।) विष्णुः । इति शब्दरत्नावली ॥ स तु हिरण्यकशिपुवधार्थं भगवद्दशावतारान्तर्गतचतुर्थः पूर्णावतारः । इति वराहपुराणम् ॥ (नरेषु सिंहः । नरः सिंह इव इत्युपमितसमासो वा ।) नरश्रेष्ठः । यदुक्तम् ।
"स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः ।
सिंहशार्द्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः ॥"
इति विशेष्यनिघ्ने अमरः ॥
(यथा, महाभारते । १० । १० । २६ ।
"क्रुद्धस्य नरसिंहस्य संग्रामेष्वपलायिनः ।
ये व्यमुच्यन्त कर्णस्य प्रमादात्त इमे हताः ॥")

नरहरिः, पुं, (नरः इव हरिः सिंह इव च आकृतिर्यस्य ।) नृसिंहावतारः । यथा,—
"केशव धृतनरहरिरूप जय जगदीश हरे ॥"
इति गीतगोविन्दे । १ । ८ ॥

नराधिपः, पुं, (नराणामधिपः ।) नराधिपतिः । राजा । यथा, "नराणाञ्च नराधिपः ।" इति श्रीभगवद्गीता ॥ (वृक्षविशेषः । यथा, सुश्रुते चिकित्सितस्थाने ३७ अध्याये ।
"काकोलीद्वयवंशाह्वमेदायुग्मनराधिपैः ॥")

नरान्तकः, पुं, (नराणां अन्तको नाशकः ।) राक्षसविशेषः । स तु रावणपुत्त्रः । इति रामायणम् ॥ (यथा, भागवते । ९ । १० । १८ ।
"रक्षःपतिस्तदवलोक्य निकुम्भकुम्भधूम्राक्षदुर्म्मुखसुरान्तनरान्तकादीन् ॥")

नरायणः, पुं, (नराणां जीवानां अयनं आश्रयस्थानम् ।) श्रीनारायणः । इति शब्दरत्नावली ॥

नरी, स्त्री, (नरस्य पत्नी । ङीष् ।) नारी । इति जटाधरः ॥

नरेन्द्रः, पुं, (नर इन्द्र इव नराणामिन्द्रो वा ।) राजा । (यथा, मनुः । ९ । २५३ ।
"रक्षणादार्य्यवृत्तानां कण्टकानाञ्च शोधनात् ।
नरेन्द्रास्त्रिदिवं यान्ति प्रजापालनतत्पराः ॥")
विषवैद्यः । इति मेदिनी । रे, १०१ ॥ (यथा, माघे । २ । ८८ ।
"सुविभक्ता नरेन्द्रेण फणीन्द्रा इव शत्रवः ॥"
वृक्षविशेषः । यथा, सुश्रुते चिकित्सितस्थाने । ९ अध्याये ।
"पूतीकार्कस्नुग्नरेन्द्रद्रुमाणां
मूत्रैः पिष्टाः पल्लवाः सौमनाश्च ॥"
एकविंशत्यक्षरवृत्तिविशेषः । इति चिन्तामणिः ॥ यथा,—
"चामररत्नरञ्जुवरपरिणतविशदशाश्वितशोभः
माणिविराजिपुष्पयुगविरचितकङ्कणसङ्गतगन्धः ।
चारुसुवर्णकुण्डलयुगलक्षतरोचिरलङ्कृतवर्णः
पिङ्गलपन्नगेश इति निगदति राजति वृत्तनरेन्द्रः ॥")

नर्कुटकं, क्ली, नासिका । इति हेमचन्द्रः ॥

नर्त्तकः, पुं, (नृत्यतीति । नृत् + "शिल्पिनि ष्वुन् ।" ३ । १ । १४५ । इति ष्वुन् ।) नटः । शैलूषः । चारणः । कैलकः । नटपर्य्यायः । सर्व्ववेशी २ लयालम्बः ३ तालरेचनकः । इति शब्दरत्नावली ॥ हिपः । इति हेमचन्द्रः ॥ नृत्यकर्त्तृलक्षणं यथा,—
"यादृशं नृत्यपात्रं स्यादीतं योग्यञ्च तादृशम् ।
नृत्यस्य धारणात् पात्रं नर्त्तकः परिकीर्त्तितः ॥"
अपि च ।
"असम्बद्धप्रलापी च सदा भ्रुकुटितत्परः ।
हासप्रहासचतुरो वाचालो नृत्यकोविदः ॥"
इति सङ्गीतदामोदरः ॥
(नर्त्तयतीति । नृत् + णिच् + ण्वुल् । नृत्यकारके, त्रि । यथा, साहित्यदर्पणे ३ परिच्छेदे ।
"तर्कौ विचारः सन्देहात् भ्रूशिरोऽङ्गुलिनर्त्तकः ॥")

नर्त्तकी, स्त्री, (नृत्यतीति । नृत् + ष्वुन् । षित्वात् ङीष् ।) नृत्यकारिणी । नाच इति भाषा ॥ तत्पर्य्यायः । लासिका २ । इत्यमरः । १ । ७ । ८ ॥ लयपुत्त्री ३ नटी ४ लस्या ५ । इति शब्दरत्नावली ॥ (यथा, रघुः । १९ । १४ ।
"नर्त्तकीरभिनयातिलङ्घिनीः
पार्श्ववर्त्तिषु गुरुष्वलज्जयत् ॥")
करेणुः । इति मेदिनी । के, १०८ ॥ नलिकानामसुगन्धिद्रव्यम् । इति राजनिर्घण्टः ॥

नर्त्तनं, क्ली, (नृत् + भावे ल्युट् ।) नृत्यम् । इत्यमरः । १ । ७ । १० ॥ (यथा, मनुः । ९ । १७८ ।
"कामं क्रोधञ्च लोभञ्च नर्त्तनं गीतवादनम् ॥"
नृत्यतीति । नृत् + ल्युः । नर्त्तके, त्रि । यथा, महाभारते । ४ । ३५ । २२ ।
"गायनो नर्त्तनो वापि वादनो वा पुनर्भव ।
क्षिप्रं मे रथमास्थाय नियच्छाश्व हयोत्तमान् ॥")

नर्द्द, शब्दे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) नर्द्दति । इति दुर्गादासः ॥

नर्द्द, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ॥)

नर्द्दटकं, क्ली, छन्दोविशेषः । तस्य लक्षणं यथा,—
"यदि भवतो नजौ भजजला गुरु नर्द्दटकम् ॥"
इति छन्दोमञ्जरी ॥

नर्ब्ब, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां परं-सकं-सेट् ।) रेफोपधः । नर्ब्बति । इति दुर्गादासः ॥

नर्म्म, [न्] क्ली, (नॄ नये + "सर्व्वधातुभ्यो मनिन् ।" उणां ४ । १४६ । इति मनिन् ।) परीहासः । इत्यमरः । १ । ७ । ३२ ॥ (यथा, महाभारते । १ । ८२ । १७ ।
"न नर्म्मयुक्तं वचनं हिनस्ति
न स्त्रीषु राजन विवाहकाले ।
प्राणात्यये सर्व्वधनापहारे
पञ्चानृतान्याहुरपातकानि ॥")

नर्म्मकीलः, पुं, (नर्म्मणः परीहासस्य कील इव ।) पतिः । इति त्रिकाण्डशेषः ॥

नर्म्मटः, पुं, (नर्म्मणेव अटति गच्छतीति । अट + अच् । शकन्ध्वादित्वात् साधुः ।) खर्परः । सूर्य्यः । इति हारावली ॥ २५४ ॥

नर्म्मठः, पुं, (नर्म्मणि कुशलः । नर्म्म + अठन् ।) चूचुकम् । विड्गः । परीहासरतः । इति शब्दरत्नावली ॥

नर्म्मदः, पुं, (नर्म्म ददातीति । दा + कः ।) केलिसचिवः । इति मेदिनी । दे, ३३ ॥

नर्म्मदा, स्त्री, (नर्म्म ददातीति । दा + कः । स्त्रियां टाप् ।) पृक्का । इति हेमचन्द्रः । ४ । १४९ ॥ नदीविशेषः । सा विन्ध्यपर्व्वतान्निःसृता पश्चिमे लवणसागरे प्रविष्टा । तस्याः पर्य्यायः । रेवा २ मेकलकन्या ३ सोमसुता ४ । अस्या जलगुणाः । लघुत्वम् । शीतलत्वम् । सुपथ्यत्वम् । दाहपित्तशमनत्वम् । वातदाहत्वञ्च । इति राजनिर्घण्टः ॥ * ॥ तस्या जलं दशभिर्म्मासैर्जीर्य्यति । यथा,—
"त्रिभिः सारस्वतं तोयं सप्तभिस्तच्च यामुनम् ।
नार्म्मदं दशभिर्म्मासैर्गाङ्गं वर्षेण जीर्य्यति ॥"
इति प्रायश्चित्ततत्त्वम् ॥
तस्या उत्पत्तिमाहात्म्ये यथा,—
"नर्म्मदा सरितां श्रेष्ठा रुद्रदेहाद्विनिःसृता ।
तारयेत् सर्व्वभूतानि स्थावराणि चराणि च ॥
सर्व्वपापहरा नित्यं सर्व्वदेवनमस्कृता ।
संस्तुता देवगन्धर्व्वैरप्सरोभिस्तथैव च ॥" * ॥
तस्याः स्तवो यथा,—
"नमः पुण्यजले ! आद्ये ! नमः सागरगामिनि !
नमस्ते पापशमनि ! नमो देवि ! वरानने ! ॥
नमोऽस्तु ते ऋषिगणसंघसेविते !
नमोऽस्तु ते शङ्करदेहनिःसृते ! ।
नमोऽस्तु ते धर्म्मभृतां वरप्रदे !
नमोऽस्तु ते सर्व्वपवित्रपावने ! ॥
य इदं पठते स्तोत्रं नित्यं शुद्धमना नरः ।
ब्राह्मणो वेदमाप्नोति क्षत्त्रियो विजयी भवेत् ॥
वैश्यस्तु लभते लाभं शूद्रश्चैव शुभां गतिम् ।
अन्नार्थी लभते चान्नं स्मरणादेव नित्यशः ॥
नर्म्मदां सेवते नित्यं स्वयन्देवो महेश्वरः ।

तेन पुण्या नदी ज्ञेया महापातकहारिणी ॥
नर्म्मदाया जलं पीत्वा अर्च्चयित्वा वृषध्वजम् ।
दुर्गतिञ्च न पश्यन्ति तस्य तीर्थप्रभावतः ॥
एतत्तीर्थं समासाद्य यस्तु प्राणान् परित्यजेत् ।
सर्व्वपापविशुद्धात्मा व्रजते रुद्रमन्दिरम् ॥
जलप्रवेशं यः कुर्य्यात् तस्मिंस्तीर्थे नराधिप ! ।
हंसयुक्तेन यानेन रुद्रलोकं स गच्छति ॥
यावच्चन्द्रश्च सूर्य्यश्च हिमवांश्च महोदधिः ।
गङ्गाद्याः सरितो यावत्तावत् स्वर्गे महीयते ॥
अनशनन्तु यः कुर्य्यात्तस्मिंस्तीर्थे नराधिप ! ।
गर्भवासे तु राजेन्द्र ! न पुनर्जायते नरः ॥"
इति मात्स्ये १९५ । १९६ अध्यायौ ॥
सा च पुरुकुत्सभार्य्या । तस्याः स्मरणे विषनाशो भवति । यथा, "सकलपन्नगपतयश्च नर्म्मदायै वरं ददुः । यस्त्वेनुस्मरणसमवेतं नामग्रहणं करिष्यति न तस्य सर्पविषं भविष्यतीति । अत्र च ।
"नर्म्मदायै नमः प्रातर्नर्म्मदायै नमो निशि ।
नमोऽस्तु नर्म्मदे तुभ्यं त्राहि मां विषसर्पतः ॥"
इति विष्णुपुराणे । ४ । ३ । ६—१० ॥

नल, अ बन्धे । इति नलशब्दस्य व्युत्पत्तौ भरतः ॥ (भ्वा-परं-सकं-सेट् ॥)

नलं, क्ली, ( नलतीति । नल + अच् । ) पद्मम् । इति राजनिर्घण्टः ॥

नलः, पुं, ( नल बन्धे + पचाद्यच् । ) तृणविशेषः । तत्पर्य्यायः । धमनः २ पोटगलः ३ । इत्यमरः । २ । ४ । १६२ ॥ नालः ४ नड़ः ५ शुन्यरन्ध्रः ६ कीचकः ७ दीर्घवंशः ८ शून्यमध्यः ९ विभीषणः १० छिद्रान्तः ११ मृदुपत्रः १२ वंशपत्रः १३ मृदुच्छदः १४ नालवंशः १५ । अस्य गुणाः । शीतत्वम् । कषायत्वम् । मधुरत्वम् । रुचिकारित्वम् । रक्तपित्तप्रशमनत्वम् । दीपनत्वम् । वीर्य्यवृद्धिदत्वञ्च । इति राजनिर्घण्टः ॥ तन्नामगुणाः ।
"नलः पोटगलः शून्यमध्यश्च धमनस्तथा ।
नलस्तु मधुरस्तिक्तः कषायः कफरक्तजित् ॥
उष्णो हृद्वस्तियोन्यर्त्तिदाहपित्तविसर्पहृत् ॥"
इति भावप्रकाशः ॥
सूर्य्यवंशीयनिषधराजपुत्त्रः । यथा,—
"अतिथिस्तु कुशाज्जज्ञे निषधस्तस्य चात्मजः ।
नलस्तु नैषधस्तस्मान्नभस्तस्मादजायत ॥"
वीरसेनराजपुत्त्रः । यथा, मात्स्ये १२ अध्याये ।
"नलौ द्वावेव विख्यातौ वंशे काश्यपसम्भवे ।
वीरसेनसुतस्तद्वन्नैषधश्च नराधिपः ॥"
( तथा, हरिवंशे । १५ । ३४ ।
"नलौ द्वावेव विख्यातौ पुराणे भरतर्षभ ! ।
वीरसेनात्मजश्चैव यश्चेक्ष्वाकुकुलोद्वहः ॥"
एतौ द्वावेव सूर्य्यवंशीयौ ॥ ) चन्द्रवंशीयनिषधराजपुत्त्रः । ( अयन्तु दमयन्तीपतिः । ) यथा, दमयन्तीं प्रति नलवाक्यम् ।
"सुधांशुवंश्यस्य करीरमेव मां
निशम्य किन्नासि फलेग्रहिं ग्रहा ॥"
इति नैषधः ॥

(यथा, महाभारते । ३ । ५३ । १ ।
"आसीद्राजा नलो नाम वीरसेनसुतो बली ।
उपपन्नो गुणैरिष्टै रूपवानश्वकोविदः ॥"
अयं वीरसेनस्तु सूर्य्यवंशीयवीरसेनाद्भिन्न एवेत्यवगन्तव्यम् ॥ * ॥
आसीत् पुरा निषधाधिपतिश्चन्द्रवंशीयो नलो नाम राजा । गच्छति काले स हि हंससुखात् विदर्भेश्वरभीमराजकन्यां दमयन्तीं त्रिभुवनैकसुन्दरीमाकर्ण्य हंससुखादेवावगतनलसौन्दर्य्यां तन्मनस्कां दमयन्तीं स्वयंवरविधिना इन्द्रादिदेवसन्निधावेव उपयेमे । अस्य इन्द्रसेननामा पुत्त्र आसीत् । दमयन्तीपरिणयकामुकः कलिस्तु दमयन्तीमलभमान एनं प्रति रुष्टः सञ्जातः । अथ कलिप्रविष्टशरीरोऽयं भ्रात्रा पुष्करेण सह द्यूतक्रीड़नात् सर्व्वस्वमहारयत् । ततः स राज्यच्युतो दमयन्त्या सह वनं गतवान् । कलिस्तु अस्य दमयन्तीसहवाससुखमसहिष्णुः दमयन्त्या सह एनं वियोजयितुमियेष । अथ कदाचित् कल्याविष्टचित्तोऽयं नलः सुप्तां दमयन्तीं निष्ठुरवत् परित्यज्य पलायाञ्चक्रे । दमयन्ती तु प्रबुध्य बहु विलप्य च पथिकसार्थवाहैन सह माहिष्मतीगृहं गतवती । नानाविधक्लेशात् शीर्णदेहा सा माहिष्मत्यापि अविज्ञाता तद्भवने तस्थौ । अथ दमयन्तीपिता भीमनृपतिर्दमयन्त्या अन्वेषणाय दूतान् नियोजयामास । दूतास्तु चिह्नविशेषैर्दमयन्तीं परिज्ञाय भीमाय न्यवेदयन् । भीमस्तु तां स्वगृहमानयत् । नलस्तु दमयन्तीं परित्यज्य गच्छन् दावानलमध्यगतं कर्कोटकनागं विपद उज्जहार । कर्कोटकस्तु नलस्य प्रत्युपकर्त्तुमिच्छन् शरीरस्थमस्य कलिं दृष्ट्वा कलिमेव भृशं सन्तापयामास । नलस्तु केवलं रूपान्तरत्वमाप्तवान् । ततोऽसौ ऋतुपर्णस्य राज्ञः सारथ्ये नियुक्त आसीत् । अथ गच्छति काले दमयन्ती पितृगेहस्था नलान्वेषणाय ब्राह्मणान् संप्रेष्य कथञ्चित् ऋतुपर्णसारथिं नलत्वेनावगम्य पुनः स्वयंवरमिषेण ससारथिं ऋतुपर्णं पितृवेश्मनि आनयामास । दमयन्ती तु पाकादिकौशलेनान्यजनावेद्येन ऋतुपर्णसारथिं नलं विज्ञाय स्वसमीपमानयामास । अथ कलिपरित्यक्तेन नलेन स्वसौन्दर्य्ये गृहीते भैम्या सह मेलनं सञ्जातम् । भीमनृपतिस्तु एतत् सर्व्वमाकर्ण्यातिशयसन्तोषमवाप्तवान् प्रेषयामास च तं बहुसमारोहेण निषधदेशान् प्रति । ततोऽयं स्वदेशमागम्य भ्रातरं पुष्करं पुनर्द्यूताय आहूय पराजित्य च तं पुनर्लब्धराज्यो दमयन्त्या सह सुखमुवास । एतद्विवरणविस्तृतिस्तु महाभारते वनपर्व्वणि ५३—७९ अध्यायेषु विशेषतो द्रष्टव्या ॥ * ॥)
वानरविशेषः । स तु ऋतध्वजमुनिशापात् वानररूपविश्वकर्म्मणः औरसेन घृताच्यप्सरोगर्भे गोदावरीतीरे जातः । इति वामने ६२ अध्यायः ॥ ( अयन्तु रामवाक्येन समुद्रमध्ये सेतुं बबन्ध । यथा, अध्यात्मरामायणे । ६ । ३ । ८४—८६ ।
"ततोऽब्रवीत् रघुश्रेष्ठं सागरो विनयान्वितः ।
नलः सेतुं करोत्वस्मिन् जले मे विश्वकर्म्मजः ॥
सुतो धीमान् समर्थोऽस्मिन् कार्य्ये लब्धवरो हरिः ।
कीर्त्तिं जानन्तु ते लोकाः सर्व्वलोकमलापहाम् ॥
इत्युक्त्वा राघवं नत्वा ययौ सिन्धुरदृश्यताम् ।
ततो रामस्तु सुग्रीवलक्ष्मणाभ्यां समन्वितः ।
नलमाज्ञापयच्छीघ्रं वानरैः सेतुबन्धने ॥")
पितृदेवः । इति मेदिनी । ले, २७ ॥ दैत्यविशेषः । यथा,—
"दैत्यदानवसंयोगाज्जातास्तीव्रपराक्रमाः ।
सैंहिकाया इति ख्यातास्त्रयोदश महाबलाः ॥
वंश्यः शल्यश्च बलवान् नलश्चैव तथा बलः ।
वातापिर्नमुचिश्चैव इल्वलः स्वसृमस्तथा ॥
अञ्जको नरकश्चैव कालनाभस्तथैव च ।
सवमानस्तथा चैव सुरकल्पश्च वीर्य्यवान् ॥"
इति ब्रह्मपुराणे २ अध्यायः ॥

नलकं, क्ली, ( नल इव प्रतिकृतिः । "इवे प्रतिकृतौ ।" ५ । ३ । ९६ । इति कन् । ) शाखास्थि । इति हेमचन्द्रः । ३ । २८१ ॥ ( यथा, सुश्रुते निदानस्थाने १५ अध्याये ।
"तरुणास्थीनि नम्यन्ते भज्यन्ते नलकानि तु ॥")

नलकिनी, स्त्री, ( नलकानि सन्त्यस्याः । नलक + इनिः । ङीप् । ) जङ्घा । इति हेमचन्द्रः । ३ । २७८ ॥

नलकीलः, पुं, ( नलवत् कीलो यत्र । ) जानुः । इति हेमचन्द्रः । ३ । २७८ ॥

नलकूवरः, पुं, कुबेरपुत्त्रः । इत्यमरः । १ । १ । ७३ ॥ ( यथा, राजेन्द्रकर्णपूरे । ६६ ।
"विलोकनकथापि मे न नलकूवरे न स्मरे
किमन्यदृत्वदृत्वतोरपि न दर्शनं प्रार्थये ।
अयं नयनगोचरं व्रजति चेद्दृशासुतस्सः
समग्ररमणीमनो मधुपमाधवः माधवः ॥")
स भ्रात्रा मणिग्रीवेण सह वारुणीं पीत्वा कैलासोपवने गङ्गायां नग्नैः स्त्रीभिः क्रीड़ितवान् । असंवृतवस्त्रौ तौ दृष्ट्वा नारदः शशाप । तच्छापेन तौ यमलार्ज्जुनौ भूत्वा श्रीवृन्दावने आसतुः । ततो दामोदरेण शापनिर्म्मुक्तौ तं स्तुत्वा स्वगृहं जग्मतुः । इति श्रीभागवतीयदशमस्कन्धः ॥

नलदं, क्ली, ( नलं द्यति अवखण्डयतीति । दो + कः । ) पुष्परसः । उशीरम् । ( यथा, किराते । ५ । २५ ।
"इह सिन्धवश्च वरणावरणाः
करिणां मुदे सनलदानलदाः ॥")
जटामांसी । इति मेदिनी । दे, ३३ ॥ ( अस्य पर्य्यायो यथा, वैद्यकरत्नमालायाम् ।
"नलदं नन्दिनी पेशी मांसी कृष्णजटा जटी ।
किरातिनी च जटिला लोमशा तु तपस्विनी ॥"
नलं ददातीति । दा + आतोऽनुपेति कः । ) नलदातरि, त्रि, ॥

| न्यायनामानि | तल्लक्षणानि | तत्प्रमाणानि |
| --- | --- | --- |
| सन्दंशप्रापितन्यायः २६ । | सन्दंशः सँड़ाशी इति प्रसिद्धिः । यथा तेनोभयपार्श्वधारणेन वस्तुप्राप्तिस्तथा । तथा हि ।<br>अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।<br>पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः ॥<br>इत्यत्र काश्याः पुरत्रयपाठानन्तरं पुरत्रयपाठपूर्व्वञ्च पठितत्वेन तदितरषट्पुराणि काशीप्रापकाणि । २६ । | काशीखण्डटीका २६ । |
| सर्व्वापेक्षान्यायः ३० । | बहुषु निमन्त्रितेषु एकस्मिन्नागतेऽपि भोज्यं न दीयते सर्व्वानपेक्षते तद्वत् । ३० । | भाष्यरत्नप्रभा ३० । |
| सूचीकटाहन्यायः ३१ । | स्वल्पश्रमसाध्यसूचीनिर्म्माणानन्तरं बहुश्रमसाध्यकटाहनिर्म्माणम् ।३१ । | कलापव्याकरणनन्दलहरीटीका-- दयः ३१ । |
| स्थविरलगुडन्यायः । ३२ । | वृद्धहस्तस्थयष्टिः सहसा लक्ष्यस्थाने क्वचित् पतति क्वचिन्न पतति तद्वत् । ३२ । | कलापटीका । ३२ । |

( यदि च न्यायवेदान्तसाङ्ख्यपातञ्जलप्रभृत्यास्तिकदर्शनानां साक्षात्पारम्पर्य्येणैकमात्रानन्तविश्वब्रह्माण्डस्योदयस्थितिलयकारणं एकोऽद्वितीयः सर्व्वपुरुषार्थस्वरूपः सनातनपुरुषः सर्व्वशक्तिमान् परमेश्वरः परमात्मैव प्रतिपाद्यः तत्रापि चार्व्वाकादिविपक्षमतनिराकरणेन जगत्कारणतयेश्वरस्य संस्थापनात् न्यायदर्शनस्यैव सर्व्वप्राधान्यसिद्धिः । आत्मतत्त्वज्ञानोत्पादनाय साक्षादुपयोगितया समस्तश्रुतिमीमांसिततया च पुराणादिशास्त्रेषु वेदान्तस्य भूयसी प्रशंसादर्शनाच्च तस्यैव दर्शनस्य मुख्यत्वमायातीति चेत् न अतीवसूक्ष्मतमब्रह्मतत्त्वनिरूपकजगत्पूज्यवेदान्तशास्त्रे कदापि कस्यापि विषयभोगकलुषितबुद्धिपरिमार्ज्जकन्यायदर्शनबोधाद्दते प्रवेशानधिकारात् । अतो नितरामेव सर्व्वेभ्योऽस्यैव गौरवमभ्युपजग्मिरे तार्किकाः । वस्तुतस्तु सर्व्वेष्वास्तिकदर्शनेषु न्यायदर्शनमेव सर्व्वोच्चस्थसिंहासनमारोढुमर्हतीति सर्व्वेषां प्रेक्षावतां परामर्शः । विशेषतः चार्व्वाकादिदुष्टमतखण्डनपूर्व्वकमोक्षस्वरूपस्थापनायेश्वरसत्तासंस्थापनाय चैकमात्रन्यायदर्शनमेवालं भवत्यत् । एतच्च सत्यं नवेति प्रतिपादनाय श्रीमन्माधवाचार्य्यसङ्कलितसर्व्वदर्शनसारसंग्रहग्रन्थान्तर्गताक्षपाददर्शनशास्त्रादेव समुद्धृत्य दर्शयिष्यामः । तत्र प्रथमतः ईश्वरसंस्थापनं यथा,—

"नन्वीश्वरसद्भावे किं प्रमाणं प्रत्यक्षमनुमानमागमो वा न तावदत्र प्रत्यक्षं क्रमते रूपादिरहितत्वेनातीन्द्रियत्वात् नाप्यनुमानं तद्व्याप्तिलिङ्गाभावात् नागमः विकल्पासहत्वात् किं नित्योऽवगमयत्यनित्यो वा । आद्ये अपसिद्धान्तापातः द्वितीये परस्पराश्रयापातः । उपमानादिकमशक्यशङ्कं नियतविषयत्वात् । तस्मादीश्वरः शशविषाणायते इति चेत्तदेतन्न चतुरचेतसां चेतसि चमत्कारमाविष्करोति । विवादास्पदं नगसागरादिकं सकर्तृकं कार्य्यत्वात् कुम्भवत् । न चायमसिद्धो हेतुः सावयवत्वेन तस्य सुसाधनत्वात् । ननु किमिदं सावयवत्वं अवयवसंयोगित्वं अवयवसमवायित्वं वा नाद्यः गगनादौ व्यभिचारात् न द्वितीयः तन्तुत्वादावनैकान्त्यात् । तस्मादनुपपन्नमिति चेन्मैवं वादीः समवेतद्रव्यत्वं सावयवत्वमिति निरुक्तेर्वक्तुं शक्यत्वात् । अवान्तरमहत्त्वेन वा कार्य्यत्वानुमानस्य सुकरत्वात् । नापि विरुद्धो हेतुः साध्यविपर्य्ययव्याप्तेरभावात् नाप्यनैकान्तिकः पक्षादन्यत्र वृत्तेरदर्शनात् नापि कालात्ययापदिष्टः बाधकानुपलम्भात् नापि सत्प्रतिपक्षः प्रतिभटादर्शनात् । ननु नगादिकमकर्तृकं शरीराजन्यत्वात् गगनवदिति चेत्तत् परीक्षाक्षममीक्ष्यते नहि कठोरकण्ठीरवस्य कुरङ्गशावः प्रतिभटो भवति अजन्यत्वस्यैव समर्थतया शरीरविशेषणवैयर्थ्यात् । तर्ह्यजन्यत्वमेव साधनमिति चेन्नासिद्धेः नापि सोपाधिकत्वशङ्काकलङ्काङ्कुरः सम्भवी अनुकूलतर्कसम्भवात् यद्ययमकर्तृकः स्यात् कार्य्यमपि न स्यादिह जगति नास्त्येव तत्कार्य्यं नाम यत्कारकचक्रमवधीर्य्यात्मानमासादयेदित्यलमविवादेन । तच्च सर्व्वं कर्तृविशेषोपहितमर्य्यादं कर्तृत्वं चेतरकारकाप्रयोज्यत्वे सति सकलकारकप्रयोक्तृत्वलक्षणं ज्ञानचिकीर्षाप्रयत्नाधारत्वम् । एवञ्च कर्तृव्यावर्त्तनात्तदुपहितसमस्तकारकव्यावर्त्तनात् कारणाभावे कार्य्यानुत्पादप्रसङ्ग इति स्थूलः प्रमादः । तथा निरटङ्कि शङ्करकिङ्करेण ।

"अनुकूलेन तर्केण सनाथे सति साधने ।
साध्यव्यापकताभङ्गात् पक्षे नोपाधिसम्भव" इति ।

यदीश्वरः कर्त्ता स्यात्तर्हि शरीरी स्यादित्यादिप्रतिकूलतर्कजातं जागर्त्तीति चेदीश्वरसिद्ध्यसिद्धिभ्यां व्याघातात् । तदुदितमुदयनेन ।

"आगमादेः प्रमाणत्वे बाधनादनिषेधनम् ।
आभासत्वे तु सैव स्यादाश्रयासिद्धिरुद्धृतेति ॥"

न च विशेषविरोधः शक्यशङ्कः ज्ञातत्वाज्ञातत्वविकल्पपराहतः स्यात् । तदेतत् परमेश्वरस्य जगन्निर्म्माणे प्रवृत्तिः किमर्था स्वार्था परार्था वा आद्येऽपीष्टप्राप्त्यर्था अनिष्टपरिहारार्था वा नाद्यः अवाप्तसकलकामस्य तदनुपपत्तेः अतएव न द्वितीयः । द्वितीये प्रवृत्त्यनुपपत्तिः कः खलु परार्थं प्रवर्त्तमानं प्रेक्षावानित्याचक्षीत । अथ करुणया प्रवृत्त्युपपत्तिरित्याचक्षीत कश्चित्तं प्रत्याचक्षीत तर्हि सर्व्वान् प्राणिनः सुखिन एव सृजेदीश्वरः न दुःखशबलान् करुणाविरोधात् स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छा हि कारुण्यं तस्मादीश्वरस्य जगत्सर्जनं न युज्यते । तदुक्तं भट्टाचार्य्यैः—

"प्रयोजनमनुद्दिश्य न मन्दो हि प्रवर्त्तते ।
जगच्चासृजतस्तस्य किं नाम न कृतं भवेदिति ।"

नास्तिकशिरोमणे ! तावदीर्ष्याकषायिते चक्षुषी निमील्य परिभावयतु भवान् करुणया प्रवृत्तिरस्त्येव न च निसर्गतः सुखमयसर्गप्रसङ्गः सृज्यप्राणिकृतसुकृतदुष्कृतपरिपाकविशेषाद्वैषम्योपपत्तेः न च स्वातन्त्र्यभङ्गः शङ्कनीयः स्वाङ्गं स्वव्यवधायकं न भवतीति न्यायेन प्रत्युत तन्निर्व्वाहात् एक एव रुद्रो न द्वितीयाय तस्थे इत्यादिरागमस्तत्र प्रमाणम् । यद्येवं तर्हि परस्पराश्रयव्याधिं समाधत्स्वेति चेत् तस्यानुत्थानात् किमुत्पत्तौ परस्पराश्रयः शङ्क्यते ज्ञप्तौ वा । नाद्यः आगमस्येश्वराधीनोत्पत्तिकत्वेऽपि परमेश्वरस्य नित्यत्वेनोत्पत्तेरनुपपत्तेः नापि ज्ञप्तौ परमेश्वरस्य आगमाधीनज्ञप्तिकत्वेऽपि तस्यान्यतोऽवगमात् नापि तदनित्यत्वज्ञप्तौ आगमानित्यत्वस्य तीव्रादिधर्म्मोपेतत्वादिना सुगमत्वात् ॥"

द्वितीये मोक्षस्वरूपसंस्थापनं यथा,—

"ननु दुःखात्यन्तोच्छेदोऽपवर्ग इत्येतदद्यापि कफोणिगुडायितं वर्त्तते तत्कथं सिद्धवत्कृत्य व्यवह्रियत इति चेन्मैवं सर्व्वेषां मोक्षवादिनामपवर्गदशायामात्यन्तिकी दुःखनिवृत्तिरस्तीत्यस्यार्थस्य सर्व्वतन्त्रसिद्धान्तसिद्धतया घण्टापथत्वात् नह्यपवृक्तस्य दुःखं प्रत्यापद्यते इति कश्चित् प्रपद्यते तथा हि आत्मोच्छेदो मोक्ष इति माध्यमिकमते दुःखोच्छेदोऽस्तीत्येतावत्तावदविवा-

त्वम्। अथ मन्येथाः शरीरादिवदात्मापि दुःखहेतुत्वादुच्छेद्य इति तन्न सङ्गच्छते विकल्पानुपपत्तेः किमात्मा ज्ञानसन्तानो विवक्षितः तदतिरिक्तो वा प्रथमे न विप्रतिपत्तिः कः खल्वनुकूलमाचरति प्रतिकूलमाचरेत् द्वितीये तस्य नित्यत्वे निवृत्तिरशक्यविधानैव प्रवृत्त्यनुपपत्तिश्चाधिकं दूषणं न खलु कश्चित् प्रेक्षावानात्मनस्तु कामाय सर्व्वं प्रियं भवतीति सर्व्वतः प्रियतमस्यात्मनः समुच्छेदाय प्रयतते सर्व्वो हि प्राणी मुक्त इति व्यवहरति। ननु धर्म्मिनिवृत्तौ निर्म्मलज्ञानोदयो महोदय इति विज्ञानवादिवादे सामग्र्यभावः सामानाधिकरण्यानुपपत्तिश्च भावनाचतुष्टयं हि तस्य कारणमभीष्टं तच्च क्षणभङ्गपक्षे स्थिरैकाधारासम्भवात् लङ्घनाभ्यासादिवदनासादितप्रकर्षं न स्फुटमभिज्ञानमभिजनयितुं प्रभवति सोपप्लवस्य ज्ञानसन्तानस्य बद्धत्वे निरुपप्लवस्य च मुक्तत्वे यो बद्धः स एव मुक्त इति सामानाधिकरण्यं न सङ्गच्छते। आवरणमुक्तिर्म्मुक्तिरिति जैनजनाभिमतोऽपि मार्गो न निर्गतो निरर्गलः अङ्ग भवान् पृष्टो व्याचष्टां किमावरणं धर्म्माधर्म्मभ्रान्तय इति चेत् इष्टमेव। अथ देहमेवावरणं तथाच तन्निवृत्तौ पञ्जरान्मुक्तस्य शुकस्येवात्मनः सततोर्द्धगमनं मुक्तिरिति चेत्तदा वक्तव्यं किमयमात्मा मूर्त्तोऽमूर्त्तो वा। प्रथमे निरवयवः सावयवो वा निरवयवत्वे निरवयवो मूर्त्तः परमाणुरिति परमाणुलक्षणापत्त्या परमाणुधर्म्मवदात्मधर्म्माणामतीन्द्रियत्वं प्रसज्येत्। सावयवत्वे यत् सावयवं तदनित्यमिति प्रतिबन्धबलेनानित्यत्वापत्तौ कृतप्रणाशाकृताभ्यागमौ निष्प्रतिबन्धौ प्रसरेताम्। अमूर्त्तत्वे गमनमनुपपन्नमेव चलनात्मिकायाः क्रियायाः मूर्त्तप्रतिबन्धात् पारतन्त्र्यं बन्धः स्वातन्त्र्यं मोक्ष इति चार्व्वाकपक्षेऽपि स्वातन्त्र्यं दुःखनिवृत्तिश्चेदविवाद ऐश्वर्य्यं चेत् सातिशयतया सक्षयतया च प्रेक्षावतां नाभिमतम्। प्रकृतिपुरुषान्यत्वख्यातौ प्रकृत्युपरमे पुरुषस्य स्वरूपेणावस्थानं मुक्तिरिति सांख्याख्यातेऽपि पक्षे दुःखोच्छेदोऽभ्युपेयते विवेकज्ञानं पुरुषाश्रयं वेति एतावदवशिष्यते तत्र पुरुषाश्रयमिति न श्लिष्यते पुरुषस्य कौटस्थ्यात् ध्याननिरोधापातान्नापि प्रकृत्याश्रयः अचेतनत्वात् तस्याः। किञ्च प्रकृतिः प्रवृत्तिस्वभावा निवृत्तिस्वभावा वा आद्ये अनिर्मोक्षः स्वभावस्यानपायात् द्वितीये सम्प्रति संसारोऽस्तमियात्। नित्यनिरतिशयसुखाभिव्यक्तिर्मुक्तिरिति भट्टसर्व्वज्ञाद्यभिमतेऽपि दुःखनिवृत्तिरभिमतैव परन्तु नित्यसुखं न प्रमाणपद्धतिमध्यास्ते। श्रुतिस्तत्र प्रमाणमिति चेन्न योग्यानुपलब्धिबाधिते तदनवकाशादवकाशे वा ग्रावप्लवेऽपि तथा भावप्रसङ्गात्। ननु सुखाभिव्यक्तिर्मुक्तिरिति पक्षं परित्यज्य दुःखनिवृत्तिरेव मुक्तिरिति स्वीकारः चौरं विज्ञायारोपकस्थस्य सौवीरकल्पिममनुभवतीति पेतदेशाटकपक्षपतितं स्वदन्त इत्युपेक्ष्यते। सुखस्य सातिशयतया प्रत्यक्षतया बहुप्रत्यनीकाक्रान्ततया साधनप्रार्थनापरिक्लिष्टतया च दुःखाविनाभूतत्वेन विषानुषक्तमधुवत् दुःखपक्षनिक्षेपात्। नन्वेकमनुसन्धित्सतोऽपरं प्रच्यवते इति न्यायेन दुःखवत् सुखमित्युच्छिद्यत इति चकाक्षोऽयं पक्ष इति चेन्मैवं मंस्थाः सुखसम्पादने दुःखसाधनबाहुल्यानुषङ्गनियमेन तदपायः पिहितं तपनीयबुद्ध्या प्रवर्त्तमानेन साम्यापातात् तथा हि न्यायोपार्ज्जितेषु विषयेषु कियन्तः सुखखद्योताः कियन्ति दुःखदुर्दिनानि अन्यायोपार्ज्जितेषु तु यद्भविष्यति तन्मनसापि चिन्तयितुं न शक्यमित्येतत् स्वानुभवमप्रच्छादयन्तः सन्तो विदाङ्कुर्व्वन्तु विद्वांसो भवन्तः। तस्मात् परिशेषात् परमेश्वरानुग्रहवशाच्छ्रवणादिक्रमेणात्मतत्त्वसाक्षात्कारवतः पुरुषधौरेयस्य दुःखनिवृत्तिरात्यन्तिकी निःश्रेयसमिति निरवद्यमिति ॥ * ॥

न्यायदर्शनन्तु पूर्व्वोत्तरविभागभेदेन द्विविधम्। पूर्व्वभागो भगवता महर्षिगौतमेन प्रणीतः उत्तरभागस्तु भगवता महर्षिकणभुजैव प्रणीतः पूर्व्वभागे भगवान् गौतमः जीवनिःश्रेयसाधिगमाय षोड़शपदार्थान् निरूपितवान् तेषां षोड़शपदार्थानां तत्त्वज्ञानादेव निःश्रेयसाधिगम इत्युपदिदेश। परभागे तु भगवान् कणादः द्रव्यादिषण्णां पदार्थानां तत्त्वज्ञानादेव निःश्रेयसं स्यादित्युपदिष्टवान्। तद्यथा, "धर्म्मविशेषप्रसूतात् द्रव्यगुणकर्म्मसामान्यविशेषसमवायानां साधर्म्म्यवैधर्म्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसमिति।" परं एष्वेव षट्पदार्थेषु भगवता गौतमेनोपदिष्टाः षोड़शपदार्थाः सर्व्व एवान्तर्निवेशिता भगवता कणभुजा। इह पुनर्विशेषपदार्थस्वीकरणात् लोके वैशेषिकमित्याख्यान्तरेणैव प्रसिद्धमेतद्दर्शनमिति बोध्यम्॥

अतिरिक्तन्यायनामानि यथा,—

१ अग्न्यातपन्यायः। २ अजाकृपाणीयन्यायः। ३ अजातपुत्रनामकरणन्यायः। ४ अण्डकुक्कुटीन्यायः। ५ अत्यन्तं बलवन्तोऽपि पौरजानपदा जना इतिन्यायः। ६ अदग्धदहनन्यायः। ७ अध्यारोपापवादन्यायः। ८ अनधीते महाभाष्ये इतिन्यायः। ९ अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेतिन्यायः। १० अन्ते या मतिः सा गतिरितिन्यायः। ११ अन्तरङ्गाविवाहच्छेदादावेव कृतो न स इतिन्यायः। १२ अन्धगजन्यायः। १३ अन्धचटकन्यायः। १४ *अन्धदर्पणन्यायः। १५ अन्धस्येवान्धलग्नस्य विनि*पातः पदे पदे इतिन्यायः। १६ अन्धभुक्तन्यायः। १७ अपराह्नच्छायान्यायः। १८ अपसारितान्गिभूतलन्यायः। १९ अप्रस्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति इतिन्यायः। २० अब्भक्षकन्यायः। २१ अभाक्तलाभन्यायः। २२ अरण्यरोदनन्यायः। २३ अर्के चेन्मधु विन्देत किमर्थं पर्व्वतं व्रजेदितिन्यायः। २४ अर्द्धजरतीन्यायः। २५ अर्द्धं त्यजति पण्डितन्यायः। २६ अर्द्धवैशसन्यायः। २७ अवश्यापेक्षितानपेक्षितयोरितिन्यायः। २८ अश्मलोष्ट्रन्यायः। २९ अश्वतरीगर्भन्यायः। ३० अश्वभृत्यन्यायः। ३१ अक्षिशरीयन्यायः। ३२ अहिकुण्डलन्यायः। ३३ अहिनिपुण इतिन्यायः। ३४ अहिनकुलन्यायः। ३५ अहिसुवर्णन्यायः। ३६ आकाशापरिच्छन्नत्वन्यायः। ३७ आदावन्ते चेतिन्यायः। ३८ आभाणकन्यायः। ३९ आयुर्घृतमितिन्यायः। ४० आषाढ़वानन्यायः। ४१ इक्षुरसन्यायः। ४२ इक्षुविकारन्यायः। ४३ इच्छैष्यमाणयोः समभिव्याहारे इष्यमाणस्यैव प्राधान्यमिति*न्यायः। ४४ इषुवेगक्षयन्यायः। ४५ उत्पाटित*दन्तनागन्यायः। ४६ उदकनिमज्जनन्यायः। ४७ उपजनिष्यमाणनिमित्तोऽप्यपवादो जातनिमित्तमप्युत्सर्गं बाधते इतिन्यायः। ४८ उपजीव्योपजीवकन्यायः। ४९ उपपन्नधर्म्मो विकरोति हि धर्म्मिणमितिन्यायः। ५० उपवासाद्वरं भिक्षेतिन्यायः। ५१ उभयतः पाशारज्जुन्यायः। ५२ ऊषरवृष्टिन्यायः। ५३ उष्ट्रलगुड़न्यायः। ५४ ऋजुमार्गेण सिध्यतोऽर्थस्य वक्रेण साधनायोग इतिन्यायः। ५५ एकत्र निर्णीतः शास्त्रार्थः अन्यत्रापि तथेतिन्यायः। ५६ एकदेशविकृतमनन्यवदितिन्यायः। ५७ एकसन्धित्सतोऽपरं प्रच्यवते इतिन्यायः। ५८ एकाकिनी प्रतिज्ञेतिन्यायः। ५९ एकामसिद्धिं परिहरन्तो द्वितीया आपद्यते इतिन्यायः। ६० करटकन्यायः। ६१ कणचामीकरन्यायः। ६२ कदम्बकुसुमन्यायः। ६३ करस्थबिल्वन्यायः। ६४ करिबृंहितन्यायः। ६५ कांस्यभोजिन्यायः। ६६ काकतालीयन्यायः। ६७ काकदधिघातकन्यायः। ६८ काकदन्तपरीक्षान्यायः। ६९ काकाक्षिन्यायः। ७० कामनागोचरत्वेन शब्दबोध एव शब्दसाधनतान्वय इतिन्यायः। ७१ कारणगुणप्रक्रमन्यायः। ७२ कार्य्येण कारणसंप्रत्ययः इतिन्यायः। ७३ कारणनाशे कार्य्यनाशन्यायः। ७४ किमज्ञानस्य दुष्करमितिन्यायः। ७५ कीटभृङ्गन्यायः। ७६ कुक्कुटध्वनिन्यायः। ७७ कुम्भीधान्यन्यायः। ७८ कुशकाशावलम्बनन्यायः। ७९ कूपखानकन्यायः। ८० कूपन्यायः। ८१ कूपमण्डूकन्यायः। ८२ कृताकृतप्रसङ्गी यो विधिः स नित्य इतिन्यायः। ८३ कृते कार्य्ये किं मुहूर्त्तप्रश्नेन इतिन्यायः। ८४ कृदभिहितो भावो द्रव्यवत् प्रकाशते इतिन्यायः। ८५ कोषपानन्यायः। ८६ कौण्डिन्यन्यायः। ८७ कौन्तेयराधेयन्यायः। ८८ क्रिया हि विकल्प्यते न वस्त्वितिन्यायः। ८९ खलमैत्रीन्यायः। ९० खादकघातकन्यायः। ९१ गजघटान्यायः। ९२ गजभुक्तकपित्थन्यायः। ९३ गड्डलिकाप्रवाहन्यायः। ९४ गणपतिन्यायः। ९५ गर्द्दभारोमगणनान्यायः। ९६ गते पादुकान्यायः।

९७ गुणोपसंहारन्यायः। ९८ गोक्षीरं मद्दत्तोऽन्नमितिन्यायः। ९९ गोबलीवर्द्दन्यायः। १०० गोमयपायसन्यायः। १०१ गोमहिषादिन्यायः। १०२ घट्टकुटीप्रभातन्यायः। १०३ घटप्रदीपन्यायः। १०४ घुणाक्षरन्यायः। १०५ चक्रभ्रमणन्यायः। १०६ चतुर्व्वेदविन्न्यायः। १०७ चम्पकपटवासन्यायः। १०८ चर्म्मैतन्नौ महिषो हन्तीतिन्यायः। १०९ चिताम्हतन्यायः। ११० चित्रपटन्यायः। १११ चित्राङ्गनान्यायः। ११२ चित्रानलन्यायः। ११३ चिन्तामणिं परित्यज्य काचमणिग्रहणन्यायः। ११४ चौरापराधात् माण्डव्यनिग्रहन्यायः। ११५ जलतुम्बिकान्यायः। ११६ जलमन्थनन्यायः। ११७ जलानयनन्यायः। ११८ जलौकान्यायः। ११९ ज्ञानमात्रं क्षिप्रस्य रूपादेरित्युपकारकत्वमिति न्यायः। १२० ज्ञानधर्म्मिण्यभ्रान्तप्रकारे तु विपर्य्यय इति न्यायः। १२१ ज्ञानादेर्निष्कर्षवदुत्कर्षोऽप्यङ्गीकार्य्य इतिन्यायः। १२२ ज्योतिर्न्यायः। १२३ तण्डुलन्यायः। १२४ तत्तादृगवगम्यते इतिन्यायः। १२५ तदभिन्नत्वमितिन्यायः। १२६ तदागमेऽपि दृश्यते इतिन्यायः। १२७ तप्तमाषकोद्धरणन्यायः। १२८ तमःप्रकाशन्यायः। १२९ तरतमभावापन्नमितिन्यायः। १३० तामसं परिवर्ज्जयेदितिन्यायः। १३१ तालसर्पन्यायः। १३२ तिर्य्यगधिकरणन्यायः। १३३ तुलोन्नमनन्यायः। १३४ तुष्यतु दुर्ज्जन इतिन्यायः। १३५ त्यजेदेकं कुलस्यार्थे इतिन्यायः। १३६ त्वष्ट्या दुस्साटिनीतिन्यायः। १३७ दग्धरसनान्यायः। १३८ दग्धेन्धनवह्निन्यायः। १३९ दण्डसर्पमारणन्यायः। १४० दधिपयसि प्रत्यक्षो ज्वर इतिन्यायः। १४१ दन्तपरीक्षान्यायः। १४२ दानवालकटन्यायः। १४३ दाहकदाह्यन्यायः। १४४ दुर्ब्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैरितिन्यायः। १४५ देवताधिकरणन्यायः। १४६ देवदत्तहन्तृहतन्यायः। १४७ देवदत्तापुत्रन्यायः। १४८ देहलीदीपन्यायः। १४९ देहाधोमुखत्वन्यायः। १५० धटारोहणन्यायः। १५१ धर्म्मकल्पनान्यायः। १५२ धर्म्माधर्म्मन्यायः। १५३ धर्म्मिकल्पनान्यायः। १५४ धान्यपललन्यायः। १५५ नष्टाश्वदग्धरथन्यायः। १५६ न हि करकङ्कणदर्शनाय आदर्शापेक्षेतिन्यायः। १५७ न हि दृष्टे अनुपपन्नं नामेतिन्यायः। १५८ न हि निन्दा निन्दितुं प्रवर्त्तते अपि तु विधेयं स्तोतुमितिन्यायः। १५९ न हि प्रत्यभिज्ञामात्रेण अर्थसिद्धिरितिन्यायः। १६० न हि भिक्षुको भिक्षुकमितिन्यायः। १६१ न हि विवाहानन्तरं वरपरीक्षा क्रियते इतिन्यायः। १६२ न हि प्राप्तमप्राप्तेनान्वेतीतिन्यायः। १६३ न हि सुतीक्ष्णाप्यसिधारा स्वयमेव छेत्तुमाहितव्यापारा भवतीतिन्यायः। १६४ नागोक्षपतिन्यायः। १६५ नाज्ञातविशेषणा विशिष्टबुद्धिः विशेष्यं संक्रामतीतिन्यायः। १६६ नारिकेलफलाम्बुन्यायः। १६७ निम्नगाप्रवाहन्यायः।

१६८ नीरक्षीरन्यायः। १६९ नीलेन्दीवरन्यायः। १७० नृपनापितपुत्रन्यायः। १७१ नौकाविकन्यायः। १७२ पञ्जरचालनन्यायः। १७३ पटन्यायः। १७४ पटे पचिन्यायः। १७५ पतन्तमनुधावतो बद्धोऽपि गत इतिन्यायः। १७६ पदमप्यधिकाभावात् स्मारकात् न विशिष्यत इतिन्यायः। १७७ परमुखप्रेक्षणन्यायः। १७८ परिषन्न्यायः। १७९ पर्व्वताधित्यकान्यायः। १८० पर्व्वतोपत्यकान्यायः। १८१ पाषाणेष्टिकान्यायः। १८२ पिञ्जरमुक्तपक्षिन्यायः। १८३ पिष्टं हित्वा करं लेढीतिन्यायः। १८४ पिष्टपेषणन्यायः। १८५ पुत्रलिप्सया दैवं भजन्त्या भर्त्ताऽपि नष्ट इतिन्यायः। १८६ पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नेतरानितिन्यायः। १८७ पुष्टलगुडन्यायः। १८८ पूर्व्वमपवादा निविशन्ते पश्चादुत्सर्गा इतिन्यायः। १८९ पूर्व्वात् परबलीयस्त्वन्यायः। १९० प्रकल्प्यापवादविषयं पश्चादुत्सर्गोऽभिनिविशते इतिन्यायः। १९१ प्रकाशाश्रयन्यायः। १९२ प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमितिन्यायः। १९३ प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनमितिन्यायः। १९४ प्रदीपन्यायः। १९५ प्रधानमल्लनिवर्हणन्यायः। १९६ प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपीतिन्यायः। १९७ प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते इतिन्यायः। १९८ प्रसङ्गपठितन्यायः। १९९ प्रासादवासिन्यायः। २०० फलवत्सहकारन्यायः। २०१ बध्यघातकन्यायः। २०२ बहुच्छिद्रघटप्रदीपन्यायः। २०३ बहुवृकाकृष्टन्यायः। २०४ बहुराजकपुरन्यायः। २०५ बहूनामनुग्रहो न्याय्य इतिन्यायः। २०६ ब्राह्मणपरिव्राजकन्यायः। २०७ ब्राह्मणवसिष्ठन्यायः। २०८ ब्राह्मणश्रमणन्यायः। २०९ भक्षितेऽपि लशुने न शान्तो व्याधिरितिन्यायः। २१० भच्छुन्यायः। २११ भामतीन्यायः। २१२ भावप्रधानमाख्यातमितिन्यायः। २१३ भ्वादिन्यायः। २१४ भिक्षुपादप्रसारणन्यायः। २१५ भूलिङ्गपक्षिन्यायः। २१६ भूपृत्लोवान्यायः। २१७ भैरवन्यायः। २१८ भ्रमरन्यायः। २१९ मक्षिकान्यायः। २२० मज्जनोन्मज्जनन्यायः। २२१ मण्डूकप्लुतिन्यायः। २२२ मत्स्यकण्टकन्यायः। २२३ मरणाद्वरो व्याधिरितिन्यायः। २२४ मल्लग्रामन्यायः। २२५ महिषीप्रसवोन्मुखीतिन्यायः। २२६ मात्स्यन्यायः। २२७ मुञ्जादिषीकान्यायः। २२८ मूषकभयेन कन्थात्यागन्यायः। २२९ मूर्खसेवनन्यायः। २३० मृधासिक्तताम्रन्यायः। २३१ मृगभयेन शस्यानाश्रयणन्यायः। २३२ मृगवागुरान्यायः। २३३ मृतमारणन्यायः॥ २३४ यः कारयति स करोत्येवेतिन्यायः। २३५ यः कुरुते स भुङ्क्ते इतिन्यायः। २३६ यत् कृतकं तदनित्यमितिन्यायः। २३७ यत्परः शब्दः स शब्दार्थ इतिन्यायः। २३८ यत्प्रायः श्रूयते यादृक् तत्तादृगवगम्यते इतिन्यायः।

२३९ यत्रोभयोः समो दोष इतिन्यायः। २४० यथासंख्यन्यायः। २४१ यदर्था प्रवृत्तिः तदर्थः प्रतिषेध इतिन्यायः। २४२ यद्विवाहगीतगानमितिन्यायः। २४३ यादृशं मुखं तादृशं चपेटमितिन्यायः। २४४ यादृशो यक्षस्तादृशो बलिरितिन्यायः। २४५ यस्याज्ञानं भ्रमस्तस्य भ्रान्तः सम्यक् च वेद स इतिन्यायः। २४६ यावच्छिरस्तावच्छिरोव्यथेतिन्यायः। २४७ येन उत्क्रम्यते येन च उपसंह्रियते स वाक्यार्थ इतिन्यायः। २४८ येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति इतिन्यायः। २४९ योजनप्राप्यायी कावेर्य्यौ मलबन्धनन्यायः। २५० रक्तपटन्यायः। २५१ रज्जुसर्पन्यायः। २५२ रथवडवान्यायः। २५३ रश्मिलब्धादिन्यायः। २५४ राजपुत्रव्याधन्यायः। २५५ राजसं तामसञ्चेतिन्यायः। २५६ रासभरटितन्यायः। २५७ रूढिर्योगमपहरतीतिन्यायः। २५८ रेखागवयन्यायः। २५९ रोगिन्यायः। २६० लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिरितिन्यायः। २६१ लाङ्गलजीवनमितिन्यायः। २६२ लोहचुम्बकन्यायः। २६३ लौहाग्निन्यायः। २६४ वकबन्धनन्यायः। २६५ वरगोष्ठीन्यायः। २६६ वरघाताय कन्यावरणमितिन्यायः। २६७ वस्तूनि सामान्यपेक्ष्य प्रयोजनानीतिन्यायः। २६८ वह्निधूमन्यायः। २६९ वह्निन्यायः। २७० वाजिमन्दुरान्यायः। २७१ वातादिन्यायः। २७२ वायुभक्षकन्यायः। २७३ वायुप्रीत्योषान्यायः। २७४ विधिनिषेधौ सति विशेषबाधे विशेषणमुपसंक्रामेत इतिन्यायः। २७५ विधेयं हि स्तूयते वस्त्वितिन्यायः। २७६ विपरीतं बलाबलमितिन्यायः। २७७ विल्वखल्वाटन्यायः। २७८ विवाहे प्रवृत्तभृत्यन्यायः। २७९ विशिष्टवृत्तेरितिन्यायः। २८० विशिष्टस्य वैशिष्ट्यमितिन्यायः। २८१ विषं मृत्युरितिन्यायः। २८२ विषभक्षणन्यायः। २८३ विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतमितिन्यायः। २८४ वृक्षप्रकम्पनन्यायः। २८५ वृद्धकुमारीवाक्यन्यायः। २८६ वृद्धिमिष्टवतो मूलं विनष्टमितिन्यायः। २८७ वृश्चिकीगर्भन्यायः। २८८ वैशेष्यात्तु तद्वाद इतिन्यायः। २८९ शङ्खकशङ्खन्यायः। २९० शाखीक्षीरन्यायः। २९१ शणघ्नोघनाय शुक्लपक्षणमितिन्यायः। २९२ व्रीहिबीजन्यायः। २९३ शक्तिः सहकारिणीतिन्यायः। २९४ शवोद्वर्त्तनन्यायः। २९५ शाखाचन्द्रन्यायः। २९६ शालिसम्बद्धो कोद्रवनाशनन्यायः। २९७ शाब्दी ह्याकाङ्क्षा शब्देनैव पूरणीयेतिन्यायः। २९८ शिरोविष्टनेन नासिकास्पर्श इतिन्यायः। २९९ शैलूषीन्यायः। ३०० श्मशानशुनकन्यायः। ३०१ श्वःकर्त्तव्यमद्य कुर्व्वितिन्यायः। ३०२ श्वपुच्छोन्नामनन्यायः। ३०३ सच्छिद्रघटाम्बुन्यायः। ३०४ सति बोधे न जानातीतिन्यायः। ३०५ सन्दिग्धस्य सन्दिग्धं स

प्रयोजनं चेत् विचारमर्हतीतिन्याय:। ३०६ समुद्रवृष्टिन्याय:। ३०७ सम्भवत्येकवाक्यत्वे वाक्यभेदो न चेष्यते इतिन्याय:। ३०८ सर्व्वं वाक्यं सावधारणमितिन्याय:। ३०९ सर्व्वं कार्य्यं सकारणकमितिन्याय:। ३१० सर्व्वविशेषणं साधारणमितिन्याय:। ३११ सर्व्वशाखाप्रत्यय-मेकं कर्म्मेतिन्याय:। ३१२ साक्षात्प्रशस्तमिति-न्याय:। ३१३ साधुमैत्रीन्याय:। ३१४ सार्व्व-जनीनसुख्यायव्ययन्याय:। ३१५ सावकाशनिर-वकाशयोर्निरवकाशो बलीयानितिन्याय:। ३१६ सिंहस्नानन्याय:। ३१७ सिंहावलोकन्याय:। ३१८ सुतजनिन्दतिन्याय:। ३१९ सुभगा-भिक्षुकन्याय:। ३२० सुन्दोपसुन्दन्याय:। ३२१ सूचषाटिकान्याय:। ३२२ सोपानारोहण-न्याय:। ३२३ स्तनन्धयन्याय:। ३२४ स्थाली-पुलाकन्याय:। ३२५ स्थावरजङ्गमविषन्याय:। ३२६ स्थूणानिखनन्याय:। ३२७ स्थूलारुन्धती-न्याय:। ३२८ स्फटिकलौहित्यन्याय:। ३२९ स्वकरकङ्कणन्याय:। ३३० स्वपक्षहानिकर्तृत्वात् स्वकुलाङ्गारता मम इतिन्याय:। ३३१ स्वप्न-शास्त्रन्याय:। ३३२ स्वशिरश्छेदनेऽपि पुत्रत्वमिति न्याय:। ३३३ स्वामिभृत्यन्याय:। ३३४ हस्ता-मलकन्याय:। इति श्रीरामदयालुशिष्यरघु-नाथेन विरचितो लौकिकन्यायसंग्रह: ॥)

न्यायसारिणी, स्त्री, (न्यायं सरतीति। सृ + णिनि + ङीप्।) युक्तिपूर्व्वककर्म्मकारिणी तत्-पर्य्याय:। सुष्ठो २। इति त्रिकाण्डशेष: ॥

न्यायी, [न्] त्रि, (न्यायोऽस्यास्तीति। न्याय + इनि:।) न्यायवान्। न्यायोऽस्यास्तीत्यर्थे इन्-प्रत्ययनिष्पन्न: ॥

न्याय्यं, त्रि, (न्यायादनपेतम्। न्याय + "धर्म्म-पथ्यर्थन्यायादनपेते।" ४। ४। ९२। इति यत्।) न्यायादनपेतम्। (न्याये भव:। न्याया-दागतो वा। "दिगादिभ्यो यत्।" ४। ३। ५४। इति यत्।) न्यायागतधनादि:। इति भरत: ॥ तत्पर्य्याय:। युक्तम् २ औपयिकम् ३ लभ्यम् ४ भजमानम् ५ अभिनीतम् ६। इत्यमर:। २। ८। २५ ॥ क्रमोचितम् ७। इति शब्दरत्ना-वली ॥ (यथा, मनु:। २। १५२।
"देवाश्चैतान् समेत्योचुर्न्याय्यं व: शिशुरुक्तवान् ॥")

न्यास:, पुं, (न्यस्यत इति। नि + अस + घञ्।) उपनिधि:। स्थाप्यद्रव्यम्। इत्यमर:। २। ९। ८१ ॥ अस्य विवरणं निक्षेपशब्दे द्रष्टव्यम् ॥ * ॥ विन्यास:। अर्पणम्। यदाह कालिदास:।
"पदन्यासैरासीत् कमलपरिपूर्णा वसुमती दृगान्दोलैरिन्दीवरमयमभूदम्बरतलम्।
इदं याचे किञ्चिद्विरचय वच: क्षीरमधुरं धरायामप्यास्तां विधुमुखि! सुधाया: परि-चय: ॥"
त्याग:। यथा, श्रीभगवद्गीतायां १८ अध्याये।
"काम्यानां कर्म्मणां न्यासं सन्न्यासं कवयो विदु:।
सर्व्वकर्म्मफलत्यागं प्राहुस्त्यागं विचक्षणा: ॥"
कायिकाक्षरपाशिनिरुक्तवृत्त्याख्यानग्रन्थविशेष:। यथा, माघे। २। ११२।
"अनुत्सूत्रपदन्यासा सद्वृत्ति: सन्निबन्धना।
शब्दविद्येव नो भाति राजनीतिरपस्पशा ॥"
सन्न्यास:। यथा,—
"यत्ने विविदिषान्यासं विद्वन्न्यासश्च भेदत:।
हेतू विदेहमुक्तेश्च जीवन्मुक्तेश्च तौ क्रमात् ॥"
इति जीवन्मुक्तिप्रथमविवेक: ॥ * ॥
पूजाजपादे: प्राक्शिष्टशास्त्रमन्त्रसिद्ध्याद्यर्थं देहाव-यवेषु वर्णादिविन्यास:। तत्र न्यासकालो यथा,
"प्रात:कालेऽथवा पूजासमये होमकर्म्मणि।
जपकालेऽपि वा तेषां विनियोग: पृथक् पृथक्।
पूजाकाले समस्तं वा कुर्य्यात् साधकसत्तम: ॥"
इति योगिनीहृदयम् ॥ * ॥
अथ मातृकान्यास:। अस्य मातृकामन्त्रस्य ब्रह्मर्षिर्गायत्री छन्दो मातृकासरस्वती देवता हलो बीजानि स्वरा: शक्तयो लिपि-न्यासे विनियोग:। शिरसि ॐ ब्रह्मणे ऋषये नम:। मुखे ॐ गायत्रीच्छन्दसे नम:। हृदि ॐ मातृकासरस्वत्यै देवतायै नम:। गुह्ये ॐ व्यञ्जनेभ्यो बीजेभ्यो नम:। पादयो: स्वरेभ्य: शक्तिभ्यो नम:। तथा च ज्ञानार्णवे।
मातृकायास्तु देवेशि! न्यसेत् पापनिकृन्तनीम्।
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ॥
देवता मातृकादेवी बीजं व्यञ्जनसञ्चयम्।
शक्तयस्तु स्वरा देवि! षडङ्गन्यासमाचरेत् ॥
तत: षडङ्गन्यासौ।
अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नम:।
इं चं छं जं झं ञं ईं तर्ज्जनीभ्यां स्वाहा।
उं टं ठं डं ढं णं ऊं मध्यमाभ्यां वषट्।
एं तं थं दं धं नं ऐं अनामिकाभ्यां हुम्।
ओं पं फं बं भं मं औं कनिष्ठाभ्यां वौषट्।
अं यं रं लं वं शं षं सं हं ळं क्षं अ: करतल-पृष्ठाभ्यां फट्। एवं हृदयादिषु। अं कं खं घं ङं आं हृदयाय नम:। इत्यादि।
तथा च ज्ञानार्णवे।
अं आं मध्ये कवर्गन्तु इं ईं मध्ये चवर्गकम्।
उं ऊं मध्ये टवर्गन्तु एं ऐं मध्ये तवर्गकम् ॥
ओं औं मध्ये पवर्गन्तु बिन्दुयुक्तं न्यसेत् प्रिये।
अनुस्वारविसर्गान्तर्यशवर्गौ सलक्षकौ ॥
हृदयन्तु शिरो देवि! शिखा कवचकं तथा।
नेत्रमन्त्रं न्यसेत् ङेऽन्तं नम:स्वाहा क्रमेण तु ॥
वषट् हुं वौषडन्तञ्च फडन्तं योजयेत प्रिये!।
षडङ्गोऽयं मातृकाया: सर्व्वपापहर: स्मृत: ॥
अथान्तर्मातृकान्यास:।
अकारादिषोडशस्वरान् सबिन्दून् षोडशदल-कमले कण्ठमूले न्यसेत्। ककारादिद्वादशवर्णान् सबिन्दून् द्वादशदलकमले हृदये न्यसेत्। डका-रादिदशवर्णान् सबिन्दून् दशदलकमले नाभौ न्यसेत्। वकारादिषड् वर्णान् सबिन्दून् षड्-दलकमले लिङ्गमूले न्यसेत्। वकारादिचतुरो वर्णान् सबिन्दून् चतुर्द्दलकमले मूलाधारे न्यसेत्। हक्षवर्णद्वयं सबिन्दुं द्विदलकमले भ्रूमध्ये न्यसेत्। तथा च ज्ञानार्णवे।
"द्व्यष्टपत्राम्बुजे कण्ठे स्वरान् षोडश विन्यसेत्।
द्वादशच्छदहृत्पद्मे कादीन् द्वादश विन्यसेत् ॥
दशपत्राम्बुजे नाभौ डकारादीन्न्यसेद्दश।
षट्पत्रमध्ये लिङ्गस्थे वकारादीन्न्यसेच्च षट् ॥
आधारे चतुरो वर्णान् न्यसेद्वादीन् चतुर्द्दले।
हक्षौ भ्रूमध्यगे पद्मे द्विदले विन्यसेत् प्रिये ॥"
अगस्त्यसंहितायाम्।
"एकैकवर्णमेकैकपत्राग्रे विन्यसेत् प्रिये।
एवमन्त: प्रविन्यस्य मनसातो बहिर्न्यसेत् ॥"
मैथावे तु।
"एकैकवर्णमुच्चार्य्य मूलाधारादिकेऽन्तकम्।
नमोऽन्तमिति विन्यास आन्तर: परिकीर्त्तित: ॥
अथान्तर्मातृकान्यासो मूलाधारे चतुर्द्दले।
सुवर्णाभे वशषसचतुर्व्वर्णविभूषिते ॥
षड्दले वैद्युतनिभे स्वाधिष्ठानेऽनलत्विषि।
बभमैर्यरलैर्युक्ते वर्णै: षड्भिश्च सुव्रते।
मणिपूरे दशदले नीलजीमूतसन्निभे।
डादिफान्तदलैर्युक्ते बिन्दुनादविभूषिते ॥
अनाहते द्वादशारे प्रवालरुचिसन्निभे।
कादिठान्तदलैर्युक्ते योगिनां हृदयङ्गमे ॥
विशुद्धे षोडशदले धूम्राभे स्वरभूषिते।
आज्ञाचक्रे तु चन्द्राभे द्विदले हक्षलाञ्छिते ॥
सहस्रारे हिमनिभे सर्व्ववर्णविभूषिते।
अकथादित्रिरेखात्महलक्षत्रयभूषिते ॥
तन्मध्ये परबिन्दुञ्च सृष्टिस्थितिलयात्मकम्।
एवं समाहितमना ध्यायेन्न्यासोऽयमान्तर: ॥" * ॥
अथ बाह्यमातृकान्यास:।
अस्या ध्यानं यथा,—
"पञ्चाशल्लिपिभिर्विभक्तमुखदो:पन्मध्यवक्ष:स्थलां भास्वन्मौलिनिबद्धचन्द्रशकलामापीनतुङ्गस्तनीम्।
मुद्रामक्षगुणं सुधाढ्यकलसं विद्याञ्च हस्ताम्बुजै-र्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामा-श्रये ॥"
एवं ध्यात्वा न्यसेत्। तत्राङ्गुलिनियमस्तन्त्रे।
"ललाटे नासिकामध्ये विन्यसेन्मुखपङ्कजे।
तर्ज्जनी मध्यमानामा वृद्धानामे च नेत्रयो: ॥
अङ्गुष्ठं कर्णयोर्न्यस्य कनिष्ठाङ्गुष्ठकौ नसो:।
मध्यास्त्रिस्रो गण्डयोश्च मध्यमाञ्चोष्ठयोर्न्यसेत् ॥
अनामां दन्तयोर्न्यस्य मध्यमासुत्तमाङ्गके।
मुखेऽनामां मध्यमाञ्च हस्तपादेषु पार्श्वयो: ॥
कनिष्ठानामिकामध्यास्तास्तु पृष्ठे च विन्यसेत्।
ता: साङ्गुष्ठा नाभिदेशे सर्व्वा: कुक्षौ च विन्यसेत् ॥
हृदये च तलं सर्व्वमंसयोश्च ककुत्स्थले।
हृत्पूर्व्वं हस्तपत्कुक्षिमुखेषु तलमेव च ॥
एतास्तु मातृकामुद्रा: क्रमेण परिकीर्त्तिता:।
अज्ञात्वा विन्यसेद्यस्तु न्यास: स्यात्तस्य निष्फल: ॥"
गौतमीये।
"ललाटमुखवृत्ताक्षिश्रुतिघ्राणेषु गण्डयो:।
ओष्ठदन्तोत्तमाङ्गास्यदो:पत्सन्ध्यग्रकेषु च ॥

पार्श्वयोः पृष्ठतो नाभौ जठरे हृदयेंऽसके ।
ककुद्यंसे च हृत्पूर्व्वं पाणिपादयुगे तथा ॥
जठराननयोर्न्यस्येन्मातृकार्णान् यथाक्रमात् ॥”
तद्यथा । अं नमो ललाटे । आं नमो मुखे । इं ईं चक्षुषोः । उं ऊं कर्णयोः । ऋं ॠं नसोः । ऌं ॡं गण्डयोः । एं ओष्ठे । ऐं अधरे । ओं ऊर्द्ध्वदन्ते । औं अधोदन्ते । अं ब्रह्मरन्ध्रे । अः मुखे । कं दक्षबाहुमूले । खं कूर्परे । गं मणिबन्धे । घं अङ्गुलिमूले । ङं अङ्गुल्यग्रे । एवं चं ५ वामबाहुमूलसन्ध्यग्रकेषु । एवं टं ५ दक्षिणपादमूलसन्ध्यग्रकेषु । एवं तं ५ वामपादमूलसन्ध्यग्रकेषु । पं दक्षिणपार्श्वे । फं वामपार्श्वे । बं पृष्ठे । भं नाभौ । मं उदरे । यं हृदि । रं दक्षबाहुमूले । लं ककुदि । वं वामबाहुमूले । शं हृदादिदक्षहस्ते । षं हृदादिवामहस्ते । सं हृदादिदक्षपादे । हं हृदादिवामपादे । ळं हृदादुदरे । क्षं हृदादिमुखे । सर्व्वत्र नमोऽन्तेन न्यसेत् । तथा च ।
“ओमाद्यन्तो नमोऽन्तो वा सविन्दुर्विन्दुवर्ज्जितः ।
पञ्चाशद्वर्णविन्यासः क्रमादुक्तो मनीषिभिः ॥”
इति भट्टः ॥

अथ संहारमातृकान्यासः ।

तस्या ध्यानं यथा,—
“अक्षस्रजं हरिणपोतमुदग्रटङ्क-
विद्याः करैरविरतं दधतीं त्रिनेत्राम् ।
अर्द्धेन्दुमौलिमरुणामरविन्दरामां
वर्णेश्वरीं प्रणमत स्तनभारनम्राम् ॥”
न्यासस्तु क्षकाराद्यकारान्तः । यथा । क्षं नमो हृदादिमुखे इत्यादि ॥ * ॥
अपरञ्च ।
“चतुर्धा मातृका प्रोक्ता केवला विन्दुसंयुता ।
सविसर्गा सोभया च रहस्यं शृणु कथ्यते ॥
विद्याकरी केवला च सोभया भुक्तिदायिनी ।
पुत्त्रदा सविसर्गा तु सविन्दुर्वित्तदायिनी ॥”
विशुद्धेश्वरे ।
“वाग्भवाद्या च वाक्सिद्ध्यै रमाद्या श्रीप्रवृद्धये ।
हृल्लेखाद्या सर्व्वसिद्ध्यै कामाद्या लोकवश्यदा ॥
श्रीकण्ठाद्यानिमान् न्यस्येत् सर्व्वमन्त्रः प्रसीदति ॥”
श्रीविद्याविषये नवरत्नेश्वरे ।
“वाग्भवाद्या नमोऽन्ताश्च न्यस्तव्या मातृकाक्षराः ।
श्रीविद्याविषये मन्त्री वाग्भवाद्यष्टसिद्धये ॥”
यामले ।
“भूतशुद्धिलिपिन्यासौ विना यस्तु प्रपूजयेत् ।
विपरीतफलं दद्यादभक्त्या पूजनं यथा ॥”
सामान्यन्यासे अङ्गुलिनियमो गौतमीये ।
“मनसा विन्यसेन्न्यासान् पुष्पेणैवाथवा मुने ।
अङ्गुष्ठानामिकाभ्यां वा चान्यथा विफलं भवेत् ॥”
विशेषन्यासे तु नायं नियमः ॥ * ॥

अथ पीठन्यासः ।

ॐ आधारशक्तये नमः ॐ प्रकृतये नमः ॐ कूर्म्माय नमः ॐ अनन्ताय नमः ॐ पृथिव्यै नमः ॐ क्षीरसमुद्राय नमः ॐ श्वेतद्वीपाय नमः एवं मणिमण्डपाय कल्पवृक्षाय मणिवेदिकायै रत्नसिंहासनाय एतत् सर्व्वन्तु हृदि । ततो दक्षिणस्कन्धे ॐ धर्म्माय नमः । वामस्कन्धे ॐ ज्ञानाय नमः । एवं वामोरौ वैराग्याय । दक्षिणोरौ ऐश्वर्य्याय । मुखे अधर्म्माय । वामपार्श्वे अज्ञानाय । नाभौ अवैराग्याय । दक्षिणपार्श्वे अनैश्वर्य्याय । सर्व्वत्र प्रणवादिनमोऽन्तेन न्यसेत् । तथा च शारदायाम् ।
“अंसोरुयुग्मयोर्विद्वान् प्रादक्षिण्येन साधकः ।
धर्म्मं ज्ञानञ्च वैराग्यमैश्वर्य्यं क्रमशः सुधीः ॥
मुखपार्श्वनाभिपार्श्वेष्वधर्म्मादीन् प्रकल्पयेत् ॥”
पुनर्हृदि । ॐ अनन्ताय नमः । एवं पद्माय नमः । अं सूर्य्यमण्डलाय द्वादशकलात्मने नमः । उं सोममण्डलाय षोड़शकलात्मने नमः । मं वह्निमण्डलाय दशकलात्मने नमः । सं सत्त्वाय नमः । रं रजसे नमः । तं तमसे नमः । आं आत्मने नमः । अं अन्तरात्मने नमः । पं परमात्मने नमः । ह्रीं ज्ञानात्मने नमः । इत्यन्तं विन्यस्य हृत्पद्मस्य पूर्व्वादिकेशरेषु तत्तत्कल्पोक्तपीठशक्तीर्मध्ये पीठमनुञ्च न्यसेत् । यथा शारदायाम् ।
“अनन्तं हृदये पद्मं तस्मिन् सूर्य्येन्दुपावकान् ।
एषु स्वस्वकला न्यस्य नामाद्यक्षरपूर्व्वतः ॥
सत्त्वादीन् त्रिगुणान् न्यस्य तथैवात्र गुरूत्तमः ।
“आत्मानमन्तरात्मानं परमात्मानमेव च ।
ज्ञानात्मानं प्रविन्यस्य न्यसेत पीठमनुं ततः ॥”

अथ ऋष्यादिन्यासः ।

ऋषिस्तु ।
“मन्त्रेश्वरमुखाज्ज्ञात्वा यः साक्षात्तपसा मनुम् ।
संसाधयति शुद्धात्मा स तस्य ऋषिरीरितः ॥
गुरुत्वान्मस्तके चास्य न्यासस्तु परिकीर्त्तितः ।
सर्व्वेषां मन्त्रतत्त्वानां छादनाच्छन्द उच्यते ॥
अक्षरत्वात् पदत्वाच्च मुखे छन्दः समीरितम् ।
सर्व्वेषामेव जन्तूनां भाषणात् प्रेरणात्तथा ॥
हृदयाम्भोजमध्यस्था देवता तत्र तां न्यसेत् ।
ऋषिच्छन्दोऽपरिज्ञानान्न मन्त्रफलभाग्भवेत् ॥
दौर्ब्बल्यं याति मन्त्राणां विनियोगमजानताम् ॥”
तन्त्रान्तरे ।
“ऋषिं न्यसेन्मूर्द्ध्नि देशे छन्दस्तु मुखपङ्कजे ।
देवतां हृदये चैव बीजन्तु गुह्यदेशके ॥
शक्तिञ्च पादयोश्चैव सर्व्वाङ्गे कीलकं न्यसेत् ॥”

अथाङ्गन्यासः । तत्राङ्गुलिनियमः ।

त्रिहृत्करदशाकद्वित्रिसंख्यया शैलसम्भवे ।
अङ्गुलीनामिति वचनादिति सर्व्वसाधारणम् ॥
यामले ।
“हृदयं मध्यमानामातर्ज्जनीभिः स्मृतं शिरः ।
मध्यमातर्ज्जनीभ्यां स्यादङ्गुष्ठेन शिखा स्मृता ॥
दशभिः कवचं प्रोक्तं तिसृभिर्नेत्रमीरितम् ।
प्रोक्ताङ्गुलीभ्यामस्त्रं स्यादङ्गकॢप्तिरियं मता ॥
तिसृभिस्तर्ज्जनीमध्यमानामाभिः ॥
तर्ज्जनीमध्यमानामा प्रोक्ता नेत्रत्रये क्रमात् ।
यदि नेत्रद्वयं प्रोक्तं तदा तर्ज्जनिमध्यमे ॥”
इति भट्टधृतवचनात् ॥
“हृदयादिषु विन्यस्येदङ्गमन्त्रांस्ततः सुधीः ।
हृदयाय नमः पूर्व्वं शिरसे वह्निवल्लभा ।
शिखायै वषडित्युक्तं कवचाय हुमीरितम् ।
नेत्रत्रयाय वौषट् स्यादस्त्राय फडितिक्रमात् ॥
षडङ्गमन्त्रानित्युक्तान् षडङ्गेषु नियोजयेत् ।
पञ्चाङ्गानि मनोर्यत्र तत्र नेत्रमनुं त्यजेत् ॥”
इति शारदावचनम् ॥
वैष्णवे तु ।
“अनङ्गुष्ठा ऋजवो हस्तशाखा
भवेन्मुद्रा हृदये शीर्षके च ।
अधोऽङ्गुष्ठा खलु मुष्टिः शिखायां
करद्वन्द्वाङ्गुलयो वर्म्मणि स्युः ॥
नाराचमुष्ट्युद्धृतबाहुयुग्म-
काङ्गुष्ठतर्ज्जन्युदितो ध्वनिस्तु ।
विष्वग्विशक्ता कथितास्त्रमुद्रा
यद्वाक्षिणी तर्ज्जनिमध्यमे च ॥”
शारदायाम् ।
“न्यासक्रमेण देहेषु धर्म्मादीन् पूजयेत्ततः ।
पुष्पाद्यैः पीठमन्त्रान्तं तस्मिंश्च परदेवताम् ॥”
इति दर्शनात् शरीरे पीठपूजा ।
“अङ्गहीनस्य मन्त्रस्य स्वेनैवाङ्गानि कल्पयेत् ॥”
तथा ब्रह्मयामले ।
“स्वनामाद्यक्षरं बीजं सर्व्वेषामभिधीयते ॥”

अथ व्यापकन्यासः ।

नवधा सप्तधा वापि मूलेन पञ्चधा त्रिधेति भैरवतन्त्रवचनात् । नवधाकरणे शिरस्तः पादान्तं पादतः शिरोऽन्तम् । एवं चतुर्धा । सप्तधाकरणे तादृशं त्रिधा । पञ्चधाकरणे तादृशं द्विधा । त्रिधाकरणेऽपि तादृशमेकधा । हृदादिमुखान्तन्तु शेषे एकधा सर्व्वत्रैव । शतधाकरणे तु तादृशं पञ्चाशद्वारं हृदादिमुखान्तं नास्तीति व्यापकन्यासः । इत्यागमतत्त्वविलासः ॥ * ॥ नित्यं न्यासकरणफलं यथा,—
“आगमोक्तेन विधिना नित्यं न्यासं करोति यः ।
देवताभावमाप्नोति मन्त्रसिद्धिः प्रजायते ॥
यो न्यासकवचच्छन्नो मन्त्रं जपति तं प्रिये ।
विघ्ना दृष्ट्वा पलायन्ते सिंहं दृष्ट्वा यथा गजाः ॥”
न्यासाकरणे दोषो यथा,—
“अकृत्वा न्यासजालं यो मूढ़त्वात् प्रजपेन्मनुम् ।
सर्व्वविघ्नैः स बाध्यः स्याद्व्याघ्रैर्मृगशिशुर्यथा ॥”
इति तन्त्रसारः ॥ * ॥
एते न्यासाः सामान्यपूजाप्रकरणोक्ताः ।
अन्ये च देवताविशेषे बहवः सन्ति बाहुल्यभिया तेषां प्रमाणादिकमलिखित्वा केवलं तत्र विष्णुविषये केशवकीर्त्त्यादि १ मूर्त्तिपञ्जर २ तत्त्व ३ भूतिपञ्जर ४ दशाङ्ग ५ पञ्चाङ्ग ६ न्यासाः । शिवविषये श्रीकण्ठादि १ ईशानादिपञ्चमूर्त्ति २ मन्त्र ३ मूर्त्ति ४ गोलक ५ सुभगादि ६ भूषण ७ न्यासाः । अन्नपूर्णाविषये

षड्न्यासः १ । श्रीविद्याविषये वशिन्यादि १ नव-योन्यात्मक २ पीठ ३ तत्त्व ४ पञ्चदशी ५ षोड़शी ६ संहार ७ स्थिति ८ सृष्टि ९ नाद १० षोढ़ा ११ गणेश १२ ग्रह १३ नक्षत्र १४ योगिनी १५ राशि १६ त्रिपुरा १७ षोड़श-नित्या १८ कामरति १९ सृष्टिस्थिति २० प्रकट-योगिनी २१ आयुध २२ न्यासाः । तारा-विषये रुद्र १ ग्रह २ लोकपाल ३ न्यासाः । एतेषां प्रमाणानि तन्त्रसारादौ द्रष्टव्यानि ॥

न्युङ्खः, पुं, ( न्युङ्ख्यते इति । नि + उङ्ख गतौ + घञ् । ) सामवेदे नियतप्रणवषट्कम् । दीर्घ-वाग्यमिति नयनानन्दः । इत्यमरभरतौ ॥ सम्यक् । मनोज्ञः । इति मेदिनी । खे, २ ॥

न्युब्जं, क्ली, ( न्युब्जति अधोमुखीभवतीति । नि + उब्ज + अच् । ) कर्म्मरङ्गफलम् । इति मेदिनी । जे, १२ ॥ श्राद्धादिपात्रभेदः । इति शब्दरत्नावली ॥ तथा च गोभिलः । प्रथमे पात्रे संस्रवान् सम-वनीय पात्रं न्युब्जं कुर्य्यात् पितृभ्यः स्थान-मसीति । प्रथमे पात्रे पितृपात्रे । संस्रवान् पितामहादिपात्रार्घपात्रस्थशेषजलानि । समव-नीय क्रमेण स्थापयित्वा तत्पात्रस्य प्रपितामह-पात्रेणाच्छादनमाह शौनकः । प्रपितामह-पात्रेण पिधाय प्रतिष्ठापयतीति । याज्ञवल्क्ये-नापि तत्पात्रस्याधःस्थत्वाभिधानात् पात्रा-न्तरेण पिधानमाक्षिप्तम् । तथा च याज्ञ-वल्क्यः ।

"दत्त्वार्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः ।
पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः ॥"

विधानतः यथापूर्ब्बं स्थापितं क्रमेण । तेन प्रपितामहपात्रेणाधःकृतं पितृपात्रं ऊर्द्ध्वमुख-मवस्थितं न्युब्जं करोति । मत्स्यसूक्ते । पितृ-पात्रे निधायाथ न्युब्जमुत्तरतो न्यसेत् । इति मत्स्यपुराणवचने न्यसेदित्यत्राच्छादितोपस्थापित-कर्त्तव्यमिपार्थे कर्त्तव्यः । इति श्राद्धतत्त्वम् ॥

न्युब्जः, पुं, ( नि + उब्ज + अच् । ) दर्भमयस्रुक् । इति मेदिनी । जे, ११ ॥ ( यथा,—

"शयनासनयानानामुत्तानानाञ्च दर्शनम् ।
न्युब्जानामितरेषाञ्च पात्रादीनामशोभनम् ॥"

इति वाभटे शारीरस्थाने । ६ । २३ ॥ ) कुशः । स्रुक् । इति हेमचन्द्रः ॥

न्युब्जः, त्रि, ( न्युब्जति अधोमुखीभवतीति । नि + उब्ज + अच् । ) कुब्जः । अधोमुखः । इति मेदिनी । जे, १२ ॥ ( यथा, हरिवंशे । ८१ । ६ ।

"स तत्रैकेन पादेन शकटं पर्य्यवर्त्तयत् ।
न्युब्जं पयोधराकाङ्क्षी चकार च रुरोद च ॥")

रुग्णा नग्नः । इत्यमरः । २ । ६ । ४१ ॥ रोगेण वक्रीकृतपृष्ठाधोमुखपुरुषादिः । इति भरतः ॥

न्युब्जखड्गः, पुं, ( न्युब्जः खड्गः । ) कुब्जखड्गः बाँका तरवार इति भाषा ॥ तत्पर्य्यायः कटीतलः २ । इति त्रिकाण्डशेषः ॥

न्यूनं, त्रि, ( न्यूनयति । नि + ऊन परिहाणौ + अच् । ) गर्ह्यम् । ( यथा, महाभारते । १३ । १४३ । ४६ ।

"एतैः कर्म्मफलैर्देवि ! न्यूनजातिकुलोद्भवः ।
शूद्रोऽप्यागमसम्पन्नो द्विजो भवति संस्कृतः ॥")

ऊनम् । इत्यमरः । ३ । १ । १०७ ॥ ( यथा, मनुः । ८ । २०३ ।

"नान्यदन्येन संसृष्टरूपं विक्रयमर्हति ।
न चासारं न च न्यूनं न दूरे न तिरोहितम् ॥")

न्यूनपञ्चाशद्भावः, पुं, ( न्यूनपञ्चाशतः ऊनपञ्चा-शद्वायूनां भावो यत्र । ) ऊनपञ्चाशद्भावः पागल इत्यर्थः । यथा,—

"उदीरितेन्द्रियो धाता वीणाचक्रे यदात्मनाम् ।
तदैव न्यूनपञ्चाशद्भावा जाताः शरीरतः ॥"

इति कालिकापुराणे द्वितीयाध्यायः ॥

नृस्थिमाली, [ न् ] पुं, ( नृणामस्थिमाला नृस्थि-माला सा अस्त्यस्येति । इनिः । ) शिवः । इति त्रिकाण्डशेषः ॥ नरास्थिमालाविशिष्टे, त्रि ॥

# NOTICE.

**AGENTS**
*Messrs. Trubner & Co., London.*

**AGENT**
Pandit Jaistaram Mukundaji, Bombay.

## RAJA SIR RADHAKANTA'S IMPROVED AND ENLARGED SABDAKALPADRUMA.

*A Sanskrit Encyclopedic Lexicon.*

The new edition is issuing in monthly parts of 8 formes (Royal quarto, 32 pages) each, and we expect to complete it in four years: generally a fasciculus will contain double parts or numbers.

To bring the book within reach of the general public, we offer it for sale to those who register themselves as subscribers in India at the lowest possible price of one Rupee for each part, and in countries out of India at *3s.* for each part. The number of parts in which the new Appendix would be completed, cannot *now* be guessed, they will bear the same price except to those who had subscribed before 1st January 1888. Subsequent subscribers in India, if they choose to pay in advance, can obtain the whole work exclusive of the Appendix, for 75 Rupees, and in countries out of India, for £8. The advance payments being exclusive of Postage. To non-subscribers in and out of India, the price for each part will be Rs. 1-8 and *4s.* respectively. Muffussil residents are requested to send Rs. 10 in advance to ensure their enlistment as subscribers, or in lieu of such payment, to order despatch of books to them by value payable parcels. We make it a rule to defer supplying to subscribers any part or parts of the work till all arrears due for the preceding ones, are paid.

All remittances and communications, except where special Agents may be preferred, are to be made to Babu Hari Charan Vasu, No. 71, Pathuriaghata Street, Calcutta. Subscribers are requested to see that receipts for money (when sent to him) bear his seal and signature.

We conclude this announcement by an earnest appeal to all students of Sanskrit, Savants, Princes and other patrons of learning in India, Europe and America, to help us to lay before them a grand Repertory of Indo-Aryan learning replenished with new treasures. We specially urge our claim to the aid of our brother Hindus in all parts of our country, who cannot but feel it a duty to encourage attempts to preserve and improve the most unique monument of the genius, scholarship, industry and philanthropy of our great patrirach of learning and zealous friend of education whom, we loved to call as the Hindu of Hindus. We hope that by periodical improvements and enlargement of its scope, the Sabdakalpadruma of Raja Sir Radhakanta would become the Encyclopædia Indica of the future, which, it would be the common aim of all to see accomplished.

THE SABDAKALPADRUMA OFFICE,
71, *Pathuriaghata Street,*
*Calcutta,* 20*th August* 1888.

VARADA PRASADA VASU,
HARI CHARANA VASU,
*Proprietors of the Sabdakalpadruma.*

N. B.—The first volume of the work has been completed and the first 27 numbers of the second volume have come out of the Press. We have made arrangements, speedily to complete the main body of the work by bringing out a second series beginning with प, while the first series proceeds from the initial letter and terminates with न. The first 3 numbers or parts of the second series have already issued.

# NOTICE

## SABDAKALPADRUMA.

To expedite the completion of the main work, arrangements have been made to divide the publication into two series, the first commencing with the initial letter is to terminate in 'ব', the second starting from 'য' will bring the work to a conclusion. The numbers of the two series will generally issue synchronically and subscribers in future can expect to have numbers of the two series simultaneously.

---

## বিজ্ঞাপন।

### শ্রীমদ্দেবীভাগবত।

এই বিরল-প্রচার মহার্হ ধর্ম্মগ্রন্থখানি অতি প্রাচীন ও উপাদেয় এবং এপর্য্যন্ত ইহা বঙ্গাক্ষরে মুদ্রিত হয় নাই। ইহার অন্তর্গত বিষয়গুলি অতি সংক্ষেপে বর্ণনা করা বড় সহজ নহে। কেবল সংক্ষেপে এইমাত্র বলিলেই বোধ করি গ্রন্থের যথেষ্ট পরিচয় দেওয়া হইবে যে, পূজ্যপাদ বৈষ্ণবগণ যেমন শ্রীমদ্ভাগবতকে অষ্টাদশ মহাপুরাণের অন্তর্গত পঞ্চম পুরাণ বলিয়া নির্দ্দেশ করেন; সেইরূপ সম্প্রদায় নিরপেক্ষ অনেকানেক কৃতবিদ্য মহোদয়গণের মতে এই দেবীভাগবতই অষ্টাদশ মহাপুরাণের অন্তর্গত পঞ্চম পুরাণ। এ সম্বন্ধে তাঁহারা যে সকল যুক্তি প্রদর্শন করেন তাহা এক প্রকার অখণ্ডনীয় বলিলেও বোধ হয় অত্যুক্তি হয় না। এই মহাপুরাণখানিও অস্মদ্দেশপ্রচলিত শ্রীমদ্ভাগবতের ন্যায় দ্বাদশ স্কন্ধে ও ১৮০০০ অষ্টাদশ সহস্র শ্লোকে বিরচিত এবং ভাগবতসম্বন্ধীয় অন্যান্য লক্ষণে বিভূষিত। ইহার রচনা এরূপ প্রাঞ্জল যে অধ্যয়ন করিলেই প্রাচীন বলিয়া বোধ হয়। ইহা দেবী ভগবতীর মাহাত্ম্য ও বৃত্তান্তনিরূপণে পরিপূর্ণ। আমাদের এই কথা কতদূর সত্য তাহা প্রসিদ্ধ টীকাকার নীলকণ্ঠকৃত দেবীভাগবতের মহাপুরাণত্ব-সংস্থাপন সম্বন্ধীয় বিচার পাঠে সমস্ত অবগত হইতে পারিবেন।

যদিচ শব্দকল্পদ্রুমের কিয়দংশ প্রচারিত হওয়ার পর আমাদিগের অন্তঃকরণে একটী অভিনব ভাবের উদয় হইয়াছিল, অর্থাৎ দুই একখানি এতদ্দেশবিরল-প্রচার অথচ উপাদেয় বিদ্বন্মণ্ডলীর স্পৃহণীয় পুরাণশাস্ত্র যথাসম্ভব টীকা ও অনুবাদ সহ প্রচার করিয়া উক্ত বিষয়ের অভাব মোচনের নিমিত্ত যথাসাধ্য যত্নপর হইব, কিন্তু কালের কুটিলগতি দেখিয়া সহসা প্রবৃত্ত হইতে সাহস করিতে পারি নাই। পরন্তু, সেই সর্ব্বনিয়ন্তা পরমকরুণাময় পরমেশ্বরের কৃপায় শব্দকল্পদ্রুমের প্রথমকাণ্ড গ্রাহক মহোদয়গণের করে সমর্পণের পরই আমার অগ্রজ রায় যতীন্দ্রনাথ বসু বাহাদুর এবং আর কতকগুলি দেশহিতৈষী বিদ্বদ্বর মহাত্মগণ কর্ত্তৃক নির্ব্বন্ধাতিশয় সহকারে অনুরুদ্ধ হইয়া পূর্ব্বসঙ্কল্পিত বিষয়ের মধ্যে প্রথমত এই অনর্ঘ্য দেবীভাগবতেরই মূল, নীলকণ্ঠ-বিরচিত টীকা, টিপ্পনী এবং অবিকল বাঙ্গালা অনুবাদ প্রচারিত হইয়া সাধারণের সুগোচর ও সুখলভ্য হওয়া আবশ্যক বিবেচনায়, আমরা ইহার মূল, টীকা ও সদ্যানুবাদের প্রচারে প্রবৃত্ত হইলাম। আমরা যথাসাধ্য বর্গীয় 'ব' ও অন্তঃস্থ 'ব' প্রভেদ করিতে যত্ন করিতেছি।

১। কার্ত্তিক মাস হইতে প্রতিমাসে রয়াল ৮ পেজি ৯ ফর্ম্মায় এক এক খণ্ড প্রকাশিত হইতেছে. কোন কোন মাসে দুই বা ততোঽধিক খণ্ড প্রকাশিত হইয়া সমগ্র গ্রন্থখানি দুই বৎসরের মধ্যে সম্পূর্ণ হইবে। অনুমান ৫৬ খণ্ডে গ্রন্থখানি সম্পূর্ণ হইবে।

২। প্রতি খণ্ডের মূল্য ॥০ আনা; কিন্তু নিয়মিত গ্রাহকগণের পক্ষে ।৵০ আনা; এবং ১২ খণ্ডের অগ্রিম মূল্য ৪৲ টাকা; আগামী চৈত্র মাসের মধ্যে এক কালীন অগ্রিম মূল্য ১৫৲ টাকা, অসমর্থ পক্ষে এখন ৮৲ টাকা এবং বাকি ৭৲ টাকা আগামী আশ্বিন মাসের মধ্যে দিলেই চলিবে।

৩। যিনি এক খণ্ড দেবীভাগবত লইবেন তাঁহাকে আদ্যোপান্ত সমস্ত খণ্ডই গ্রহণ করিতে হইবে। অগ্রিম মূল্য না পাইলে ডাকে৬-পুস্তক দেওয়া হইবে না।

৪। কোন গ্রাহক স্থান পরিবর্ত্তন করিলে তাঁহার নূতন ঠিকানা পত্র দ্বারা জানাইবেন। গ্রহণাভিলাষিগণ স্ব স্ব নাম ধাম সত্বর জানাইয়া বাধিত করিবেন।

---

## ঈশ্বরোপাসনা।

যাহাদের পরিণামবিরস ক্ষণপরিবর্ত্তসহ বিষয় ভোগবাসনা তিরোহিত হইয়া মন-প্রভৃতি নিয়ত নিত্য সন্তোষরূপ মহামণিময় খনির অনুসন্ধানে লালায়িত; তাদৃশ মহাত্মাদিগের যদি মুহূর্ত্তকালের নিমিত্ত অন্তঃকরণ পরমার্থ রসাস্বাদনে আকর্ষণ করিতে পারি তাহা হইলেও আপনাকে সফলজন্মা জ্ঞান করিব, এইরূপ বলবতী আশার উত্তেজনায় উৎসাহিত হইয়া বেদান্ত, ভগবদ্গীতা, সেশ্বরসাংখ্য, যোগসংহিতা, তন্ত্র ও পুরাণ প্রভৃতির সারসঙ্কলনরূপ ঈশ্বরোপাসনা নামে একটী সংস্কৃত ক্ষুদ্র প্রবন্ধ আমাদিগের দেবনাগর অক্ষরে প্রচারিত অভিনব শব্দকল্পদ্রুমের উপাসনা শব্দে সন্নিবেশিত করি; পরন্তু, উহার দ্বারা সংস্কৃত ভাষায় অনভিজ্ঞ ব্যক্তিদিগের কোন প্রকার উপকার সাধিত হইবে না বলিয়া কতিপয় পরমার্থ পথ অনুসন্ধিৎসু বন্ধুগণ উহার বঙ্গভাষায় অনুবাদ করিয়া দিবার নিমিত্ত আমায় অনুরোধ করেন। প্রস্তাবটী যুক্তিযুক্ত বিবেচনায় অথচ অবিকল অনুবাদে অত্যন্ত কর্কশ হইবে এই আশঙ্কায় সংস্কৃত উপাসনা-গ্রন্থখানি অবলম্বনমাত্র করিয়া গুরুশিষ্যের প্রশ্নোত্তরচ্ছলে এখানিকে পৃথক্ গ্রন্থরূপে সম্পন্ন করা হইল। ইহাতে জ্ঞান, ভক্তি ও কর্ম্মের কি প্রভেদ, কে কিরূপ উপাসনার অধিকারী এবং অজ্ঞান কর্ম্মাসক্ত দুর্ব্বলাধিকারী কি উপায়ে উন্নত হইয়া ক্রমজ্ঞান লাভে সমর্থ হইতে পারে বিশেষত অন্ধ ভক্তি ও জ্ঞানপ্রদায়িনী নিগূঢ় ভক্তি কাহাকে বলে তাহা বিশদরূপে বিবৃত হইয়াছে। অতএব পরমার্থ-রসিকগণ অবসর মত ইহার আদ্যোপান্ত পাঠ করিলে আপনাকে কৃতার্থম্মন্য বোধ করিব। অলমতি পল্লবিতেন ইতি।

এই গ্রন্থখানি অগ্রহায়ণ মাসে প্রকাশিত হইয়াছে। মূল্য ।০ চারি আনা মাত্র।

শ্রীহরিচরণ বসু
সম্পাদক।

শব্দকল্পদ্রুম-কার্য্যালয়।
৭১ নং পাথুরিয়াঘাটা ষ্ট্রীট—কলিকাতা
শক ১৮১৮—[illegible]